क्रियते तथापि बहुव्रीहिकार्यत्वात्तदेकदेशत्वाच्च समासान्तोदात्तत्वं पक्षे भवत्येव । द्विमूर्धः त्रिमूर्धः । 'द्वित्रिभ्याम्' किम् । कल्याणमूर्धा । 'बहुव्रीहौ' किम् । द्वयोर्मूर्धा द्विमूर्धा ।

**३९३२ । सक्थं चाक्रान्तात् । ६ । २ । १९८** । गौरसक्थः । श्लक्ष्णसक्थः । 'आक्रान्तात्' किम् । चक्रसक्थः । समासान्तस्य षचश्चित्त्वान्नित्यमेवान्तोदात्तत्वं भवति ।

**३९३३ । परादिश्छन्दसि बहुलम् । ६ । २ । १९९** । छन्दसि परस्य सक्थशब्दस्यादिरुदात्तो वा । 'अञ्जिसक्थमालभेत' । अत्र वार्तिकम्—

'परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते ।
पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं ततः' ॥ (वा ३८६८-६९)

इति । परादिः । 'तुविजाता उरुक्षया' । परान्तः । 'नियेन मुष्टिहत्यया' । 'याभिश्चक्रः' पूर्वान्तः । 'विश्वायुर्धेहि' ।

इति समासस्वराः

**३९३४ । तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः । ८ । १ । २७** । तिङन्तात्पदाद्गोत्रादीन्यनुदात्तान्येतयोः । पचति गोत्रम् । पचतिपचति गोत्रम् । एवं प्रवचनप्रहसनप्रकथनप्रत्यायनादयः । कुत्सनाभीक्ष्ण्यग्रहणम् । पाठविशेषणम् । तेनान्यत्रापि गोत्रादिग्रहणे कुत्सनादावेव कार्यं ज्ञेयम् । 'गोत्रादि-' इति किम् । पचति पापम् । 'कुत्स-' इति किम् । खनति गोत्रं समेत्य कूपम् ।

**३९३५ । तिङ्ङतिङः । ८ । १ । २८** । अतिङन्तात्पदात्परं तिङन्तं निहन्यते । 'अग्निमीळे' ।

**३९३६ । न लुट् । ८ । १ । २९** । लुडन्तं न निहन्यते । श्वः कर्ता ।

**३९३७ । निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् । ८ । १ । ३०** । एतैर्निपातैर्युक्तं न निहन्यते । 'यदग्ने स्यामहन्त्वम्' । 'युवा यदी कृथः' । 'कुविदङ्ग आसन्' । 'आचित्तिभिश्चकृमा कच्चित्' । 'पुत्रासो यत्र पितरो भवन्ति' ।

**३९३८ । नह प्रत्यारम्भे । ८ । १ । ३१** । नहेत्यनेन युक्तं तिङन्तं नानुदात्तम् । प्रतिषेधयुक्त आरम्भः प्रत्यारम्भः । 'नह भोक्ष्यसे' । 'प्रत्यारम्भे' किम् । 'नह वैतस्मिँल्लोके । दक्षिणमिच्छन्ति' ।

**३९३९ । सत्यं प्रश्ने । ८ । १ । ३२** । सत्ययुक्तं तिङन्तं नानुदात्तं प्रश्ने । सत्यं भोक्ष्यसे । 'प्रश्ने' किम् । 'सत्यमिद्वा उ तं वयमिन्द्रं स्तवाम' ।

**३९४० । अङ्गाप्रातिलोम्ये । ८ । १ । ३३** । अङ्गेत्यनेन युक्तं तिङन्तं नानुदात्तम् । अङ्ग कुरु । 'अप्रातिलोम्ये' किम् । 'अङ्ग कूजसि वृषल इदानीं ज्ञास्यसि जाल्म' । अनभिप्रेतमसौ कुर्वन्प्रतिलोमो भवति ।

**३९४१ । हि च । ८ । १ । ३४** । हियुक्तं तिङन्तं नानुदात्तम् । 'आ हि ष्मा याति' । 'आ हि रुहन्तम्' ।

**३९४२ । छन्दस्यनेकमपि साकाङ्क्षम् । ८ । १ । ३५** । हीत्यनेन युक्तं साकाङ्क्षमनेकमपि नानुदात्तम् । 'अनृतं हि मत्तो वदति' । 'पाप्मा चैनं पुनाति' । तिङन्तद्वयमपि न निहन्यते ।

**३९४३ । यावद्यथाभ्याम् । ८ । १ । ३६** । आभ्यां योगे तिङन्तं नानुदात्तम् । 'यथा चित्कण्वमावतम्' ।

३९४४ । **पूजायां नानन्तरम्** । ८ । १ । ३७ । यावद्यथाभ्यां युक्तमनन्तरं तिङन्तं पूजायां नानुदात्तम् । यावत्पचति शोभनम् । यथा पचति शोभनम् । 'पूजायाम्' किम् । यावद्भुङ्क्ते । 'अनन्तरम्' किम् । यावद्देवदत्तः पचति शोभनम् । पूर्वेणात्र निघातः प्रतिषिध्यते ।

३९४५ । **उपसर्गव्यपेतं च** । ८ । १ । ३८ । पूर्वेणानन्तरमित्युक्तम् । उपसर्गव्यवधानार्थं वचनम् । यावत्प्रपचति शोभनम् । अनन्तरमित्येव । यावद्देवदत्तः प्रपचति शोभनम् ।

३९४६ । **तुपश्यपश्यताहैः पूजायाम्** । ८ । १ । ३९ । एभिर्युक्तं तिङन्तं न निहन्यते पूजायाम् । 'आदह स्वधामनु पुनर्गर्भत्वमेरिरे' ।

३९४७ । **अहो च** । ८ । १ । ४० । एतद्योगे नानुदात्तं पूजायाम् । अहो देवदत्तः पचति शोभनम् ।

३९४८ । **शेषे विभाषा** । ८ । १ । ४१ । अहो इत्यनेन युक्तं तिङन्तं वानुदात्तं पूजायाम् । अहो कटं करिष्यति ।

३९४९ । **पुरा च परीप्सायाम्** । ८ । १ । ४२ । पुरेत्यनेन युक्तं वानुदात्तं त्वरायाम् । अधीष्व माणवक पुरा विद्योतते विद्युत् । निकटागामिन्यत्र पुराशब्दः । 'परीप्सायाम्' किम् । न ते स्म पुराधीयते । चिरातीतेऽत्र पुरा ।

३९५० । **नन्वित्यनुज्ञैषणायाम्** । ८ । १ । ४३ । नन्वित्यनेन युक्तं तिङन्तं नानुदात्तमनुप्रार्थनायाम् । ननु गच्छामि भोः । अनुजानीहि मां गच्छन्तमित्यर्थः । 'अनु–' इति किम् । अकार्षीः कटं त्वम् । ननु करोमि । पृष्ठप्रतिवचनमेतत् ।

३९५१ । **किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम्** । ८ । १ । ४४ । क्रियाप्रश्ने वर्तमानेन किंशब्देन युक्तं तिङन्तं नानुदात्तम् । किं द्विजः पचत्याहोस्विद्गच्छति । 'क्रिया–' इति किम् । साधनप्रश्ने मा भूत् । किं भक्तं पचत्यपूपान्वा । 'प्रश्ने' किम् । किं पठति । 'क्षेपोऽयम् । 'अनुपसर्गम्' किम् । किं प्रपचति उत प्रकरोति । 'अप्रतिषिद्धम्' किम् । किं द्विजो न पचति ।

३९५२ । **लोपे विभाषा** । ८ । १ । ४५ । किमोऽप्रयोग उक्तं वा । देवदत्तः पचत्याहोस्वित्पठति ।

३९५३ । **एहिमन्ये प्रहासे लृट्** । ८ । १ । ४६ । एहिमन्य इत्यनेन युक्तं लृडन्तं नानुदात्तं क्रीडायाम् । एहि मन्ये भक्तं भोक्ष्यसे भुक्तं तत्त्वतिथिभिः । 'प्रहासे' किम् । एहि मन्यसे ओदनं भोक्ष्य इति सुष्ठु मन्यसे । गत्यर्थलोटा लृट्–' (सू३९५८) इत्यनेनैव सिद्धे नियमार्थोऽयमारम्भः । एहिमन्येयुक्ते प्रहास एव नान्यत्र । 'एहि मन्यसे ओदनं भोक्ष्ये' ।

३९५४ । **जात्वपूर्वम्** । ८ । १ । ४७ । अविद्यमानपूर्वं यज्जातु तेन युक्तं तिङन्तं नानुदात्तम् । जातु भोक्ष्यसे । 'अपूर्वम्' किम् । कटं जातु करिष्यसि ।

३९५५ । **किंवृत्तं च चिदुत्तरम्** । ८ । १ । ४८ । अविद्यमानपूर्वं चिदुत्तरं यत्किंवृत्तं तेन युक्तं तिङन्तं नानुदात्तम् । विभक्त्यन्तं डतरडतमान्तं किमो रूपं किंवृत्तम् । कश्चिद्भुङ्क्ते । कतरश्चित् । कतमश्चिद्वा । 'चिदुत्तरम्' किम् । को भुङ्क्ते । अपूर्वमित्येव । रामः किंचित्पठति ।

३९५६। आहो उताहो चानन्तरम्। ८। १। ४९। आहो उताहो इत्याभ्यां युक्तं तिङन्तं नानुदात्तम्। आहो उताहो वा भुङ्क्ते। अनन्तरमित्येव। शेषे विभाषां वक्ष्यति। 'अपूर्व-' इति किम्। देव आहो भुङ्क्ते।

३९५७। शेषे विभाषा। ८। १। ५०। आभ्यां युक्तं व्यवहितं तिङन्तं वानुदात्तम्। आहो देवः पचति।

३९५८। गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत्। ८। १। ५१। गत्यर्थानां लोटा युक्तं तिङन्तं नानुदात्तम्। यत्रैव कारके लोट् तत्रैव लडपि चेत्। आगच्छ देव ग्रामं द्रक्ष्यसि। उह्यन्तां देवदत्तेन शालयः। रामेण भोक्ष्यन्ते। 'गत्यर्थ-' किम्। पच देव ओदनं भोक्ष्यसेऽन्नम्। 'लोटा' किम्। आगच्छेर्देव ग्रामं द्रक्ष्यस्येनम्। 'लृट्' किम्। आगच्छ देव देव ग्रामं पश्यस्येनम्। 'न चेत्' इति किम्। आगच्छ देव ग्रामं पिता ते ओदनं भोक्ष्यते। 'सर्वम्' किम्। आगच्छ देव ग्रामं त्वं चाहं च द्रक्ष्याव एनमित्यत्रापि निघातनिषेधो यथा स्यात्। यल्लोडन्तस्य कारकं तच्चान्यच्च लडन्तेनोच्यते।

३९५९। लोट् च। ८। १। ५२। लोडन्तं गत्यर्थलोटा युक्तं नानुदात्तम्। आगच्छ देव ग्रामं पश्य। 'गत्यर्थ-' इति किम्। पच देवौदनं भुङ्क्ष्वैनम्। 'लोट्' किम्। आगच्छ देव ग्रामं पश्यसि। न चेत्कारकं सर्वान्यदित्येव। आगच्छ देव ग्रामं पश्यत्वेनं रामः। सर्वग्रहणात्त्विह स्यादेव। आगच्छ देव ग्रामं त्वं चाहं च पश्यावः। योगविभाग उत्तरार्थः।

३९६०। विभाषितं सोपसर्गमनुत्तमम्। ८। १। ५३। लोडन्तं गत्यर्थलोटा युक्तं तिङन्तं वानुदात्तम्। आगच्छ देव ग्रामं प्रविश। 'सोपसर्गम्' किम्। आगच्छ देव ग्रामं पश्य। 'अनुत्तमम्' किम्। आगच्छानि देव ग्रामं प्रविशानि।

३९६१। हन्त च। ८। १। ५४। हन्तेत्यनेन युक्तमनुत्तमं लोडन्तं वानुदात्तम्। हन्त प्रविश। सोपसर्गमित्येव। हन्त कुरु। 'निपातैर्यद्यदि-' (सू ३९३७) इति निघातप्रतिषेधः। 'अनुत्तमम्' किम्। हन्त प्रभुनजावहै।

३९६२। आम एकान्तरमामन्त्रितमनन्तिके। ८। १। ५५। आमः परमेकपदान्तरितमामन्त्रितं नानुदात्तम्। आम् पचसि देवदत्त ३। 'एकान्तरम्' किम्। आम्प्रपचसि देवदत्त ३। 'आमन्त्रितम्' किम्। आम्पचति देवदत्तः। 'अनन्तिके' किम्। आम्पचसि देवदत्त।

३९६३। यद्धितुपरं छन्दसि। ८। १। ५६। तिङन्तं नानुदात्तम्। 'उदसृजो यदङ्गिरः'। 'उशन्ति हि'। आख्यास्यामि तु ते। 'निपातैर्यत्-' (सू ३९३७) इति 'हि च' (सू ३९४१) इति 'तुपश्य-' (सू ३९४६) इति च सिद्धे नियमार्थमिदम्। एतैरेव परभूतैर्योगे नान्यैरिति। जाये स्वारोहावैहि। एहीति गत्यर्थलोटा युक्तस्य लोडन्तस्य निघातो भवति।

३९६४। चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः। ८। १। ५७। एषु षट्सु परतस्तिङन्तं नानुदात्तम्। देवः पचति चन। देवः पचति चित्। देवः पचतीव। देवः पचति गोत्रम्। देवः पचतिकल्पम्। देवः पचतिपचति। 'अगतेः' किम्। देवः प्रपचति चन।

३९६५ । **चादिषु च** । ८ । १ । ५८ । चवाहाहैवेषु परेषु तिङन्तं नानुदात्तम् । देवः पचति च खादति च । अगतेरित्येव । देवः प्रपचति च प्रखादति च । प्रथमस्य 'चवायोगे-' (सू ३९६६) इति निघातः प्रतिषिध्यते द्वितीयं तु निहन्यत एव ।

३९६६ । **चवायोगे प्रथमा** । ८ । १ । ५९ । चवेत्याभ्यां योगे प्रथमा तिङ्विभक्तिर्नानुदात्ता । गाश्च चारयति वीणां वा वादयति । 'इतो वा सातिमीमहे' । उत्तरवाक्ययोरनुषज्यमानतिङन्तापेक्षयेयं प्राथमिकी । 'योगे' किम् । पूर्वभूतयोरपि योगेऽनिघातार्थम् । प्रथमाग्रहणं द्वितीयादेस्तिङन्तस्य मा भूत् ।

३९६७ । **हेति क्षियायाम्** । ८ । १ । ६० । हयुक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता धर्मव्यतिक्रमे । स्वयं ह रथेन याति ३ । उपाध्यायं पदातिं गमयति । 'क्षियाशीः-' (सू ३६२३) इति प्लुतः ।

३९६८ । **अहेति विनियोगे च** । ८ । १ । ६१ । अहयुक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता नानाप्रयोजने नियोगे क्षियायां च । त्वमह ग्रामं गच्छ । त्वमह रथेनारण्यं गच्छ । क्षियायां स्वयमह रथेन याति ३ । उपाध्यायं पदातिं नयति ।

३९६९ । **चाहलोप एवेत्यवधारणम्** । २ । १ । ६२ । 'च' 'अह' एतयोर्लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता । देव एव ग्रामं गच्छतु । देव एवारण्यं गच्छतु । ग्राममरण्यं च गच्छत्वित्यर्थः । देव एव ग्रामं गच्छतु । राम एवारण्यं गच्छतु । ग्रामं केवलमरण्यं केवलं गच्छत्वित्यर्थः । इहाहलोपः स च केवलार्थः । 'अवधारणम्' किम् । देव क्वेव भोक्ष्यसे । न क्वचिदित्यर्थः । अनवक्लृप्तावेव ।

३९७० । **चादिलोपे विभाषा** । ८ । १ । ६३ । चवाहाहैवानां लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता । चलोपे । 'इन्द्र वाजेषु नोऽव' । शुक्ला व्रीहयो भवन्ति । श्वेता गा आज्याय दुहन्ति । वालोपे । व्रीहिभिर्यजेत । यवैर्यजेत ।

३९७१ । **वैवावेति च च्छन्दसि** । ८ । १ । ६४ । 'अहर्वै देवानामासीत्' । 'अयं वाव हस्त आसीत्' ।

३९७२ । **एकान्याभ्यां समर्थाभ्याम्** । ८ । १ । ६५ । आभ्यां युक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता छन्दसि । 'अजामेकां जिन्वति' । 'प्रजामेकां रक्षति' । 'तयोरन्यः पिप्पलं स्वाद्वत्ति' । 'समर्थाभ्याम्' किम् । एको देवानुपातिष्ठत् । एक इति संख्यापरं नान्यार्थम् ।

३९७३ । **यद्वृत्तान्नित्यम्** । ८ । १ । ६६ । यत्र पदे यच्छब्दस्ततः परं तिङन्तं नानुदात्तम् । यो भुङ्क्ते । यदद्र्यङ्वायुर्वाति । अत्र 'व्यवहिते कार्यमिष्यते' ।

३९७४ । **पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः** । ८ । १ । ६७ । पूजनेभ्यः काष्ठादिभ्यः पूजितवचनमनुदात्तम् । काष्ठाध्यापकः । 'मलोपश्च वक्तव्यः' (वा ४७३९) । दारुणाध्यापकः । अज्ञाताध्यापकः । समासान्तोदात्तत्वापवादः । 'एतत्समास इष्यते' । नेह । दारुणमध्यपाक इति वृत्तिमतम् । पूजनादित्येव पूजितग्रहणे सिद्धे पूजितग्रहणमनन्तरपूजितलाभार्थम् । एतदेव ज्ञापकम् 'अत्रप्रकरणे पञ्चमीनिर्देशेऽपि नानन्तर्यमाश्रीयते' इति ।

३९७५ । **सगतिरपि तिङ्** । ८ । १ । ६८ । पूजनेभ्यः काष्ठादिभ्यस्तिङन्तं पूजितमनुदात्तम् । यत्काष्ठं प्रपचति । 'तिङ्ङतिङः' (सू ३९३५) इति निघातस्य 'निपातैर्यत्-'

(सू ३९३७) इति निषेधे प्राप्ते विधिरयम् । सगतिग्रहणाच्च गतिरपि निहन्यते । 'गतिग्रहण उपसर्गग्रहणमिष्यते' (वा ४७३२) । नेह । यत्काष्ठां शुक्लीकरोति ।

३९७६ । **कुत्सने च सुप्यगोत्रादौ** । ८ । १ । ६९ । कुत्सने च सुबन्ते परे सगतिरगतिरपि तिङनुदात्तः । पचति पूति । प्रपचति पूति । पचति मिथ्या । 'कुत्सने' किम् । प्रपचति शोभनम् । 'सुपि' किम् । पचति क्लिश्नाति । 'अगोत्रादौ' किम् । पचति गोत्रम् । 'क्रियाकुत्सन इति वाच्यम्' (वा ४७३९) । कर्तुः कुत्सने मा भूत् । पचति पूतिर्देवदत्तः । 'पूतिश्चानुबन्ध इति वाच्यम्' (वा ४७४१) । तेनायं चकरानुबन्धत्वादन्तोदात्तः । 'वा बह्वर्थमनुदात्तमिति वाच्यम्' (वा ४७४२) । पचन्तिपूति ।

३९७७ । **गतिर्गतौ** । ८ । १ । ७० । अनुदात्तः । अभ्युद्धरति । 'गतिः' किम् । दत्तः पचति । 'गतौ' किम् । 'आ म॒न्द्रैरि॑न्द्र॒ हरि॑भिर्या॒हि म॒यूर॑रोमभिः' ।

३९७८ । **तिङि चोदात्तवति** । ८ । १ । ७१ । गतिरनुदात्तः । यत्प्रपचति । तिङ्ग्रहणमुदात्तवतः परिमाणार्थम् । अन्यथा हि यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गतिस्तत्र धातावेवोदात्तवति स्यात्प्रत्यये न स्यात् । 'उदात्तवति' किम् । प्रपचति ।

इति तिङन्तस्वराः ।

अथ वैदिकवाक्येषु स्वरसंचारप्रकारः कथ्यते—'अग्निमीळे' इति प्रथमर्क् । तत्राग्निशब्दोऽव्युत्पत्तिपक्षे 'फिष–' (फिट् १) इत्यन्तोदात्त इति माधवः । वस्तुतस्तु घृतादित्वात् । व्युत्पत्तौ तु निप्रत्ययस्वरेण । अम्सुप्त्वादनुदात्तः । 'आमि पूर्वः' (सू १९४) इत्येकादेशस्तु 'एकादेश उदात्तेन–' (सू ३६५८) इत्युदात्तः । ईळे । 'तिङ्ङतिङः' (सू ३९३५) इति निघातः । संहितायां तु 'उदात्तादनुदात्तस्य–' (सू ३६६०) इतीकारः स्वरितः । 'स्वरितात्संहितायाम्–' (सू ३६६८) इति 'ळे' इत्यस्य प्रचयापरपर्याया एकश्रुतिः । पुरःशब्दोऽन्तोदात्तः 'पूर्वाधरावराणाम्–' (१९७५) इत्यासिप्रत्ययस्वरात् । हितशब्दोऽपि धाञो निष्ठायां 'दधातेर्हिः' (सू ३०७६) इति ह्यादेशे प्रत्ययस्वरेणान्तोदात्तः । 'पुरोऽव्ययम्' (सू ७६८) इति गतिसंज्ञायां 'कुगति–' (सू ७६१) इति समासे समासान्तोदात्ते 'तत्पुरुषे तुल्यार्थ–' (सू ३७३६) इत्यव्ययपूर्वपदप्रकृतिस्वरे 'गतिकारकोपपदात्कृत्' (सू ३८७३) इति कृदुत्तरपदप्रकृतिस्वरे थाथादिस्वरे च पूर्वपूर्वोपमर्देन प्राप्ते 'गतिरनन्तरः' (सू ३७८३) इति पूर्वपदप्रकृतिस्वरः । पुरःशब्दोकारस्य संहितायां प्रचये प्राप्ते 'उदात्तस्वरितपरस्य सन्नतरः' (सू३६६९) इत्यनुदात्ततरः । यज्ञस्य । नङः प्रत्ययस्वरः । विभक्तेः सुप्त्वादनुदात्तत्वे स्वरितत्वम् । देवम् । पचाद्यच् । फिट्स्वरेण प्रत्ययस्वरेण चित्स्वरेण वान्तोदात्तः । ऋत्विक्छब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । होतृशब्दस्तृन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः । रत्नशब्दो 'नब्विषयस्य' (फिट् २६) इत्याद्युदात्तः । रत्नानि दधातीति रत्नधाः । समासस्वरेण कृदुत्तरपदप्रकृतिस्वरेण वान्तोदात्तः । तमपः पित्त्वादनुदात्तत्वे स्वरितप्रचयावित्यादि यथाशास्त्रमुन्नेयम् ।

इति स्वरप्रकरणम् ।

---

इत्थं वैदिकशब्दानां दिङ्मात्रमिह दर्शितम् ।
तदस्तु प्रीतये श्रीमद्भवानीविश्वनाथयोः ॥

---

# ॥ वैयाकरणसिद्धान्तकौमुदी ॥

## अथ लिङ्गानुशासनप्रकरणम् ।

१ 'लिङ्गम्' । २ 'स्त्री' । अधिकारसूत्रे एते । ३ 'ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः'- ऋकारान्ता एते पञ्चैव स्त्रीलिङ्गाः । स्वस्रादिपञ्चकस्यैव ङीन्निषेधेन कर्त्रीत्यादेर्ङीपैकारान्तत्वात् । तिसृचतस्रोस्तु स्त्रियामादेशतया विधानेऽपि प्रकृत्योस्त्रिचतुरोरृदन्तत्वाभावात् । ४ 'अन्यूप्रत्ययान्तो धातुः' । अनिप्रत्ययान्त ऊप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । अवनिः । चमूः । 'प्रत्ययग्रहणम्' किम् । देवयतेः क्विप् । द्यूः । विशेष्यलिङ्गः । ५ 'अशनिभरण्यरणयः पुंसि च' । इयमयं वाशनिः । ६ 'मिन्यन्तः' । मिप्रत्ययान्तो निप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । भूमिः । ग्लानिः । ७ 'वह्निवृष्ण्यग्नयः पुंसि' । पूर्वस्यापवादः । ८ 'श्रोणियोन्यूर्मयः पुंसि च' । इयमयं वा श्रोणिः । ९ 'क्तिन्नन्तः' । स्पष्टम् । कृतिरित्यादि । १० 'ईकारान्तश्च' । ईप्रत्ययान्तः स्त्री स्यात् । लक्ष्मीः । ११ 'ऊङाबन्तश्च' । कुरूः । विद्या । १२ 'य्वन्तमेकाक्षरम्' । श्रीः । भूः । 'एकाक्षरम्' किम् । पृथुश्रीः । १३ 'विंशत्यादिरानवतेः' । इयं विंशतिः । त्रिंशत् । चत्वारिंशत् । पञ्चाशत् । षष्टिः । सप्ततिः । अशीतिः । नवतिः । १४ 'दुन्दुभिरक्षेषु' । इयं दुन्दुभिः । 'अक्षेषु' किम् । अयं दुन्दुभिर्वाद्यविशेषोऽसुरो वेत्यर्थः । १५ 'नाभिरक्षत्रिये' । इयं नाभिः । १६ 'उभावप्यन्यत्र पुंसि' । दुन्दुभिर्नाभिश्चोक्तविषयादन्यत्र पुंसि स्तः । नाभिः क्षत्रियः । कथं तर्हि 'समुल्लसत्पङ्कजपत्रकोमलैरुपाहितश्रीण्युपनीविनाभिभिः' इति भारविः । उच्यते । दृढं भक्तिरित्यादाविव कोमलैरिति सामान्ये नपुंसकं बोध्यम् । वस्तुतस्तु 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति भाष्यात्पुंस्त्वमपीह साधु । अत एव 'नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान्' । 'द्वयोः प्राणिप्रतीके स्यात्स्त्रियां कस्तूरिकामदे' इति मेदिनी । रभसोऽप्याह—'मुख्यराट्क्षत्रिये नाभिः पुंसि प्राण्यङ्गके द्वयोः । चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामदे' इति । एवमेवंविधेऽन्यत्रापि बोध्यम् । १७ 'तलन्तः' । अयं स्त्रियां स्यात् । शुक्लस्य भावः शुक्लता । ब्राह्मणस्य कर्म ब्राह्मणता । ग्रामस्य समूहो ग्रामता । देव एव देवता । १८ 'भूमिविद्युत्सरिल्लतावनिताभिधानानि' । भूमिर्भूः । विद्युत्सौदामनी । सरिन्निम्नगा । लता वल्ली । वनिता योषित् । १९ 'यादो नपुंसकम्' । यादःशब्दः सरिद्वाचकोऽपि क्लीबं स्यात् । २० 'भास्स्रुक्स्रग्दिगुष्णिगुपानहः' । एते स्त्रियां स्युः । इयं भाः इत्यादि । २१ 'स्थूणोर्णे नपुंसके च' । एते स्त्रियां क्लीबे च स्तः । स्थूणा–स्थूणम् । ऊर्णा–ऊर्णम् । तत्र स्थूणा काष्ठमयी द्विकर्णिका । ऊर्णा तु मेषादिलोम । २२ 'गृहशशाभ्यां क्लीबे' । नियमार्थमिदम् । गृहशशपूर्वे स्थूणोर्णे यथासंख्यं नपुंसके स्तः । गृहस्थूणम् । 'शशोर्णं शशलोमनि' इत्यमरः । २३ 'प्रावृड्विप्रुड्रुट्तृड्विड्त्विषः' । एते स्त्रियां स्युः । २४ 'दर्विविदिवेदिखनिशान्यश्रिवेशिकृष्योषधिकट्यङ्गुलयः' । एते स्त्रियां स्युः । पक्षे ङीप् । दर्वी–दर्विरित्यादि । २५ 'तिथिनाडिरुचिवीचिनालिधूलिकिकिकेलिच्छविरात्र्यादयः' । एते प्राग्वत् । इयं तिथिरित्यादि । अमरस्त्वाह–'तिथयो द्वयोः' इति । तथा च भारविः–'तस्य भुवि बहुतिथास्तिथयः' इति । क्लीबत्वे हि बहुतिथ्य इति स्यात् । श्रीहर्षश्च–'निखिलां निशि पौर्णमातिथीन्' इति । २६ 'शष्कुलिरा-

जिकुटयशनिवर्तिभ्रुकुटित्रुटिवलिपङ्क्तयः' । एतेऽपि स्त्रियां स्युः । इयं शष्कुलिः । २७ 'प्रतिपदापाद्विपत्संपच्छरत्संसत्परिषदुषःसंवित्क्षुत्पुन्मुत्समिधः' । इयं प्रतिपदित्यादि । उषा उच्छन्ती । उषाः प्रातरधिष्ठात्री देवता । २८ 'आशीर्धूःपूर्गीर्द्वारः' । इयमाशीरित्यादि । २९ 'अप्सुमनस्समासिकतावर्षाणां बहुत्वं च' । अबादीनां पञ्चानां स्त्रीत्वं स्याद्बहुत्वं च । आप इमाः । 'स्त्रियः सुमनसः पुष्पम्' । 'सुमना मालती जातिः' । देववाची तु पुंस्येव । 'सुपर्वाणः सुमनसः' । बहुत्वं प्रायिकम् । 'एका च सिकता तैलदानेऽसमर्था' इत्यर्थवत्सूत्रे भाष्यप्रयोगात् । 'समांसमां विजायते' (सू १८१३) इत्यत्र 'समायां समायाम्' इति भाष्याच्च । 'विभाषा घ्राधेट्–' (सू २३७६) इति सूत्रे 'अघ्रासातां सुमनसौ' इति वृत्तिव्याख्यायां हरदत्तोऽप्येवम् । ३० 'स्रक्त्वक्ज्योग्वाग्यवागूनौस्फिचः' । इयं स्रक्त्वक्ज्योक्वाक्यवागूः नौः स्फिक् । ३१ 'तृटिसीमासंबध्याः' । इयं तृटिः सीमासंबध्या । ३२ 'चुल्लिवेणिखार्यश्च' । स्पष्टम् । ३३ 'ताराधाराज्योत्स्नादयश्च' । 'शलाका स्त्रियां नित्यम्' । नित्यग्रहणमन्येषां क्वचिद्व्यभिचारं ज्ञापयति । इति स्त्र्यधिकारः ।

३४ 'पुमान्' । अधिकारोऽयम् । ३५ 'घञबन्तः' । पाकः । त्यागः । करः । गरः भावार्थ एवेदम् । नपुंसकत्वविशिष्टे भावे क्तल्युड्भ्यां स्त्रीत्वविशिष्टे तु क्तिन्नादिभिर्बाधेन परिशेषात् । कर्मादौ तु घञाद्यन्तमपि विशेष्यलिङ्गम् । तथा च भाष्यम्–'संबन्धमनुवर्तिष्यते' इति । ३६ 'घाजन्तश्च' । विस्तरः । गोचरः । चयः । जयः इत्यादि । ३७ 'भयलिङ्गभगपदानि नपुंसके' । एतानि नपुंसके स्युः । भयम् । लिङ्गम् । भगम् । पदम् । ३८ 'नङन्तः' । नङ्प्रत्ययान्तः पुंसि स्यात् । यज्ञः । यत्नः । ३९ 'याच्ञा स्त्रियाम्' । पूर्वस्यापवादः । ४० । 'कयन्तो घुः' । किप्रत्ययान्तो घुः पुंसि स्यात् । आधिः । निधिः । उदधिः । 'कयन्तः' किम् । दानम् । 'घुः' किम् । जज्ञिर्बीजम् । ४१ 'इषुधिः स्त्री च' । इषुधिशब्दः स्त्रियां पुंसि च । पूर्वस्यापवादः । ४२ 'देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुजकण्ठखड्गशरपङ्काभिधानानि' । एतानि पुंसि स्युः । देवाः सुराः । असुरा दैत्याः । आत्मा क्षेत्रज्ञः । स्वर्गो नाकः । गिरिः पर्वतः । समुद्रोऽब्धिः । नखः कररुहः । केशः शिरोरुहः । दन्तो दशनः । स्तनः कुचः । भुजो दोः । कण्ठो गलः । खड्गः करवालः । शरो मार्गणः । पङ्कः कर्दम इत्यादि । ४३ 'त्रिविष्टपात्रिभुवने नपुंसके' । स्पष्टम् । तृतीयं विष्टपं त्रिविष्टपम् । स्वर्गाभिधानतया पुंस्त्वे प्राप्तेऽयमारम्भः । ४४ 'द्यौः स्त्रियाम्' । द्योदिवोस्तन्त्रेणोपादानामिदम् । ४५ 'इषुबाहू स्त्रियां च' । चात्पुंसि । ४६ 'बाणकाण्डौ नपुंसके च' । चात्पुंसि । त्रिविष्टपेत्यादिचतुःसूत्री देवासुरेत्यस्यापवादः । ४७ 'नन्तः' । अयं पुंसि । राजा । तक्षा । न च चर्मवर्मादिष्वतिव्याप्तिः । 'मन्द्व्यच्कोऽकर्तरि' इति नपुंसकप्रकरणे वक्ष्यमाणत्वात् । ४८ 'क्रतुपुरुषकपोलगुल्फमेघाभिधानानि' । क्रतुरध्वरः । पुरुषो नरः । कपोलो गण्डः । गुल्फः प्रपदः । मेघो नीरदः । ४९ 'अभ्रं नपुंसकम्' । पूर्वस्यापवादः । ५० । 'उकारान्तः' । अयं पुंसि स्यात् । प्रभुः । इक्षुः । 'हनुर्हट्टविलासिन्यां नृत्यारम्भे गदे स्त्रियाम् । द्वयोः कपोलावयवे' इति मेदिनिः । 'करेणुरिभ्यां स्त्री नेभ' इत्यमरः । एवंजातीयकविशेषवचनानाक्रान्तस्तु प्रकृतसूत्रस्य विषयः । उक्तं च–'लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः' इति । एवमन्यत्रापि । ५१ 'धेनुरज्जुकुहुसरयुतनुरेणुप्रियङ्गवः स्त्रियाम्' । ५२ 'समासे रज्जुः

पुंसि च'। कर्कटरज्ज्वा–कर्कटरज्जुना। ५३ 'श्मश्रुजानुवसुस्वादुश्रुजतुत्रपुतालूनि नपुंसके'। ५४ 'वसु चार्थवाचि'। 'अर्थवाचि' इति किम्। 'वसुर्मयूखाग्निधनाधिपेषु'। ५५ 'मद्गुमधुसीधुशीधुसानुकमण्डलूनि नपुंसके च'। चात्पुंसि। अयं मद्गुः। इदं मद्गु। ५६ 'रुत्वन्तः'। मेरुः। सेतुः। ५७ 'दारुकसेरुजतुवस्तुमस्तूनि नपुंसके'। रुत्वन्त इति पुंस्त्वस्यापवादः। इदं दारु। ५८ 'सक्तुर्नपुंसके च'। चात्पुंसि। सक्तुः–सक्तु। ५९ 'प्राग्रश्मेरकारान्तः'। 'रश्मिदिवसाभिधानानि' इति वक्ष्यति ततः प्राक्। एतस्मादकारान्त इत्यधिक्रियते। ६० 'कोपधः'। कोपधोऽकारान्तः पुंसि स्यात्। स्तबकः। कल्कः। ६१ 'चिबुकशालूकप्रातिपदिकांशुकोल्मुकानि नपुंसके'। पूर्वसूत्रापवादः। ६२ 'कण्ठकानीकसरकमोदकचषकमस्तकपुस्तकतडाकनिष्कशुष्कवर्चस्कपिनाकभाण्डकपिण्डककटकशण्डककपिटकतालकफलकपुलाकानि नपुंसके च'। चात्पुंसि। अयं कण्टकः। इदं कण्टकमित्यादि। ६३ 'टोपधः'। टोपधोऽकारान्तः पुंसि स्यात्। घटः। पटः। ६४ 'किरीटमुकुटललाटवटवीटशृङ्गाटकराटलोष्टानि नपुंसके'। किरीटमित्यादि। ६५ 'कुटकूटकपटकवाटकर्पटनटनिकटकीटकटानि नपुंसके, च'। चात्पुंसि। कुटः। कुटमित्यादि। ६६ 'णोपधः'। णोपधोऽकारान्तः पुंसि स्यात्। गुणः। गणः। पाषाणः। ६७ 'ऋणलवणपर्णतोरणरणोष्णानि नपुंसके'। पूर्वसूत्रापवादः। ६८ 'कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च'। चात्पुंसि। ६९ 'थोपधः'। रथः। ७० 'काष्ठपृष्ठसिक्थोक्थानि नपुंसके'। इदं काष्ठमित्यादि। 'काष्ठा दिगर्था स्त्रियाम्'। इमाः काष्ठाः। ७१। 'तीर्थप्रोथयूथगाथामिन नपुंसके च'। चात्पुंसि। अयं तीर्थः। इदं तीर्थम्। ७२ 'नोपधः'। ७३ 'अदन्तः पुंसि'। इनः। फेनः। ७४। 'जघनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमिथुनश्मशानरत्ननिम्नचिह्नानि नपुंसके'। पूर्वस्यापवादः। ७५ 'मानयानाभिधाननलिनपुलिनोद्यानशयनासनस्थानचन्दनालानसंमानभवनवसनसंभावनविभावनाविमानानि नपुंसके च'। चात्पुंसि। अयं मानः। इदं मानम्। ७६ 'पोपधः'। अदन्तःपुंसि। यूपः। दीपः। सर्पः। ७७ 'पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुंसके'। इदं पापमित्यादि। ७८ 'शूर्पकुतपकुणपद्वीपविटपानि नपुंसके च'। अयं शूर्पः। इदं शूर्पमित्यादि। ७९ 'भोपधः'। स्तम्भः। कुम्भः। ८०। 'तलभं नपुंसकम्'। पूर्वस्यापवादः। ८१ 'जृम्भं नपुंसके च'। जृम्भम्–जृम्भः। ८२ 'मोपधः'। सोमः। भीमः। ८३ 'रुक्मसिध्मयुग्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके'। इदं रुक्ममित्यादि। ८४ 'संग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि नपुंसके च'। चात्पुंसि। अयं संग्रामः। इदं संग्रामम्। ८५ 'योपधः'। समयः। हयः। ८६ 'किसलयहृदयेन्द्रियोत्तरीयाणि नपुंसके'। स्पष्टम्। ८७ 'गोमयकषायमलयान्वयाव्ययानि नपुंसके च'। गोमयः–गोमयम्। ८८ 'रोपधः'। क्षुरः। अङ्कुरः। ८९ 'द्वाराग्रस्फारतक्रवक्रवप्रक्षिप्रक्षुद्रनीरतीरदूरकृच्छ्ररन्ध्राश्रश्वभ्रभीरगभीरक्रूरविचित्रकेयूरकेदारोदराजस्रशरीरकन्दरमन्दारपञ्जरजठराजिरवैरचामरपुष्करगह्वरकुहरकुटीरकुलीरचत्वरकाश्मीरनीराम्बरशिशिरतन्त्रयन्त्रनक्षत्रक्षेत्रमित्रकलत्रचित्रमूत्रसूत्रवक्त्रनेत्रगोत्राङ्गुलित्रभलत्रशस्त्रशास्त्रवस्त्रपत्रपात्रछत्राणि नपुंसके'। इदं द्वारमित्यादि। ९० 'शुक्रमदेवतायाम्'। इदं शुक्रं रेतः। ९१ चक्रवज्रान्धकारसारावारपारक्षीरतोमरशृङ्गारभृङ्गारमन्दारोशीरतिमिरशिशिराणि नपुंसके च'। चात्पुंसि। चक्रः–चक्रमित्यादि। ९२ 'षोपधः'। वृषः। वृक्षः। ९३

'शिरीषशीर्षाम्बरीषपीयूषपुरीषाकोल्बिषकल्माषाणि नपुंसके' । ९४ 'यूषकरीषमिषविषवर्षाणि नपुंसके च' । चात्पुंसि । अयं यूषः । इदं यूषमित्यादि । ९५ 'सोपधः' । वत्सः । वायसः । महानसः । ९६ पनसबिसबुससाहसानि नपुंसके' । ९७ 'चमसांसरसानिर्यासोपवासकार्पासवासभासकासकांसमांसानि नपुंसके च' । इदं चमसम् । अयं चमस इत्यादि । ९८ कंसं चाप्राणिनि' । 'कंसोऽस्त्री पानभाजनम्' । प्राणिनि तु । कंसो नाम कश्चिद्राजा । ९९ 'रश्मिदिवसाभिधानानि' । एतानि पुंसि स्युः । रश्मिर्मयूखः । दिवसो घस्रः । १०० 'दीधितिः स्त्रियाम्' । पूर्वस्यापवादः । १०१ 'दिनाहनी नपुंसके' । अयमप्यपवादः । १०२ 'मानाभिधानानि' । एतानि पुंसि स्युः । कुडवः । प्रस्थः । १०३ । 'द्रोणाढकौ नपुंसके च' । इदं द्रोणम् । अयं द्रोणः । १०४ 'खारीमानिके स्त्रियाम्' । इयं खारी । इयं मानिका । १०५ 'दाराक्षतलाजासूनां बहुत्वं च' । इमे दाराः । १०६ 'नाडयपजनोपपदानि व्रणाङ्गपदानि' । यथासंख्यं नाडयाद्युपपदानि व्रणादीनि पुंसि स्युः । अयं नाडीव्रणः । अपाङ्गः । जनपदः । व्रणादीनामुभयलिङ्गत्वेऽपि क्लीबत्वनिवृत्त्यर्थं सूत्रम् । १०७ 'मरुद्गरुत्तरदृत्विजः' । अयं मरुत् । १०८ 'ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिबलिकौलिमौलिरविकविकापिमुनयः' । एते पुंसि स्युः । अयमृषिः । १०९ 'ध्वजगजमुञ्जपुञ्जाः' । एते पुंसि । ११० 'हस्तकुन्तान्तव्रातवातदूतधूर्तसूतचूतमुहूर्ताः' । एते पुंसि । अमरस्तु 'मुहूर्तोऽस्त्रियाम्' इत्याह । १११ 'षण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डाः' । अयं षण्डः । ११२ 'वंशांशपुरोडाशाः' । अयं वंशः । पुरो दाश्यते पुरोडाशः । कर्मणि घञ् । भावव्याख्यानयोः प्रकरणे 'पौरोडाशपुरोडाशात्ष्ठन्' (सू १४४९) इति विकारप्रकरणे 'व्रीहेः पुरोडाशे' (सू १५२८) इति च निपातनात्प्रकृतसूत्र एव निपातनाद्वा दस्य डत्वम् । 'पुरोडाशभुजामिष्टम्' इति माघः । ११३ 'ह्रदकन्दकुन्दबुद्बुदशब्दाः' । अयं ह्रदः । ११४ 'अर्घपथिमथ्यृभुक्षिस्तम्बनितम्बपूगाः' । अयमर्घः । ११५ 'पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्गगन्धस्कन्धमृदङ्गसङ्गसमुद्रपुङ्खाः' । अयं पल्लव इत्यादि । ११६ 'सारथ्यतिथिकुक्षिवस्तिपाण्यञ्जलयः' । एते पुंसि । अयं सारथिः । इति पुंलिङ्गाधिकारः ।

११७ 'नपुंसकम्' । अधिकारोऽयम् । ११८ 'भावे ल्युडन्तः' । हसनम् । 'भावे' किम् । पचनोऽग्निः । इध्मव्रश्चनः कुठारः । ११९ 'निष्ठा च' । भावे या निष्ठा तदन्तं क्लीबं स्यात् । हसितम् । गीतम् । १२० 'त्वष्यञौ तद्धितौ' । शुक्लत्वम्—शौक्ल्यम् । ष्यञः षित्त्वसामर्थ्यात्पक्षे स्त्रीत्वम् । चातुर्यम्—चातुरी । सामग्र्यम्—सामग्री । औचित्यम्- औचिती । १२१ 'कर्मणि च ब्राह्मणादिगुणवचनेभ्यः' । ब्राह्मणस्य कर्म ब्राह्मण्यम् । १२२ 'यद्यढग्यगञण्वुञ्छाश्च भावकर्मणि' । एतदन्तानि क्लीबानि । 'स्तेनाद्यन्नलोपश्च' (सू १७९०) । स्तेयम् । 'सख्युर्यः' (सू १७९१) । सख्यम् । 'कपिज्ञात्योर्ढक्' (सू १७९२) । कापेयम् । 'पत्यन्तपुरोहितादिभ्यो यक्' (सू १७९३) । आधिपत्यम् । 'प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्' (सू १७९४) । औष्ट्रम् । 'हायनान्तयुवादिभ्योऽण्' (सू १७९५) । द्वैहायनम् । 'द्वन्द्वमनोज्ञादिभ्यो वुञ् । पितापुत्रकम् । 'होत्राभ्यश्छः' । (सू १८००) । अच्छावाकीयम् । 'अव्ययीभावः–' (सू ६५९) । अधिस्त्रि । १२३ । 'द्वन्द्वैकत्वम्' । पाणिपादम् । १२४ 'अभाषायां हेमन्तशिशिरावहोरात्रे च' । स्पष्टम् । १२५ 'अनञ्कर्मधारयस्तत्पुरुषः' । अधिकारोऽयम् । १२६ । 'अनल्पे छाया' । शरच्छायम् ।

१२७ 'राजामनुष्यपूर्वा सभा'। इनसभमित्यादि। १२८ 'सुरासेनाच्छायाशालानिशा स्त्रियां च'। १२९ 'परवत्'। अन्यस्तत्पुरुषः परवल्लिङ्गः स्यात्। 'रात्राह्नाहाः पुंसि' (सू ८१४)। १३० 'अपथपुण्याहे नपुंसके'। १३१ 'संख्यापूर्वा रात्रिः'। त्रिरात्रम्। 'संख्यापूर्वा' इति किम्। सर्वरात्रः। १३२ 'द्विगुः स्त्रियां च'। व्यवस्थया। पञ्चफली। त्रिभुवनम्। १३३ 'इसुसन्तः'। हविः। धनुः। १३४ 'अर्चिः स्त्रियां च'। इसन्तत्वेऽप्यर्चिः स्त्रियां नपुंसके च स्यात्। इयमिदं वार्चिः। १३५ 'छदिः स्त्रियामेव'। इयं छदिः। छाद्यतेऽननेति छदेश्नुरादिण्यन्तात् 'अर्चिशुचि–' इत्यादिना इस्। 'इस्मन्' इत्यादिना ह्रस्वः। 'पटलं छदिः' इत्यमर। तत्र पटलसाहचर्याच्छदिषः क्लीबतां वदन्तोऽमरव्याख्यातार उपेक्ष्याः। १३६ 'मुखनयनलोहवनमांसरुधिरकार्मुकविवरजलहलधनान्नाभिधानानि'। एतेषामभिधायकानि क्लीबे स्युः। मुखमाननम्। नयनं लोचनम्। लोहं कालम्। वनं गहनम्। मांसमामिषम्। रुधिरं रक्तम्। कार्मुकं शरासनम्। विवरं बिलम्। जलं वारि। हलं लाङ्गलम्। धनं द्रविणम्। अन्नमशनम्। अस्यापवादानाह त्रिसूत्र्या। १३७ 'सीरार्थौदनाः पुंसि'। १३८ 'वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च'। वक्त्रो वक्त्रम्। नेत्रो नेत्रम्। अरण्योऽरण्यम्। गाण्डीवो गाण्डीवम्। १३९ 'अटवी स्त्रियाम्'। १४० 'लोपधः'। कुलम–कूलम्। स्थलम्। १४१ 'तूलोपलतालकुसूलतरलकम्बलदेवलवृषलाः पुंसि'। अयं तूलः। १४२ 'शीलमूलमङ्गलसालकमलतलमुसलकुण्डलपललमृणालवालबालनिगलपलालविडालखिलशूलाः पुंसि च'। चात्क्लीबे। इदं शीलमित्यादि। १४३ 'शतादिः संख्या'। शतम्। सहस्रम्। 'शतादिः' इति किम्। एको द्वौ बहवः। 'संख्या' इति किम्। शतशृङ्गो नाम पर्वतः। १४४ 'शतायुतप्रयुताः पुंसि च'। अयं शतः। इदं शतमित्यादि। १४५ 'लक्षा कोटिः स्त्रियाम्'। इयं लक्षा। इयं कोटिः। 'वा लक्षा नियुतं च तत्' इत्यमरात्क्लीबेऽपि लक्षम्। १४६ 'शङ्कुः पुंसि'। सहस्रः क्वचित्। अयं सहस्रः। इदं सहस्रम्। १४७ 'मन्द्व्यच्कोऽकर्तरि'। मन्प्रत्ययान्तो द्व्यच्कः क्लीबः स्यान्न तु कर्तरि। वर्म। चर्म। 'द्व्यच्कः' किम्। अणिमा। महिमा। 'अकर्तरि' किम्। ददाति इति दामा। १४८ 'ब्रह्मन्पुंसि च'। अयं ब्रह्मा। इदं ब्रह्म। १४९ 'नामरोमणी नपुंसके'। 'मन्द्व्यच्कः–' इत्यस्यायं प्रपञ्चः। १५० 'असन्तो द्व्यच्कः'। यशः। मनः। तपः। 'द्व्यच्कः' किम्। चन्द्रमाः। १५१ 'अप्सराः स्त्रियाम्'। एता अप्सरसः। प्रायेणायं बहुवचनान्तः। १५२ 'त्रान्तः'। पत्रम्। छत्रम्। १५३ 'यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव'। १५४ 'भृत्रामित्रछात्रपुत्रमन्त्रवृत्रमेढ्रोष्ट्राः पुंसि'। अयं भृत्रः। न मित्रमामित्रः। 'तस्य मित्राण्यमित्रास्ते' इति माघः। 'स्याताममित्रौ मित्रे च' इति च। यत्तु 'द्विषोऽमित्रे' (सू ३११९)इति सूत्रे हरदत्तेनोक्तम्–'अमेर्द्विषदित्यौणादिक इत्रच्। अमैरमित्रं मित्रस्य व्यथयेदित्यादौ मध्योदात्तस्तु चिन्त्यः। नञ्समासेऽप्येवम्। परवल्लिङ्गतापि स्यादिति तु तत्र दोषान्तरम्' इति तत्प्रकृतसूत्रापर्यालोचनमूलकम्। स्वरदोषोद्भवनमपि 'नञो जरमरमित्रमृताः' (सू ३८९०) इति षाष्ठसूत्रास्मरणमूलकमिति दिक्। १५५ 'पत्रपात्रपवित्रसूत्रच्छत्राः पुंसि च'। १५६ 'बलकुसुमशुल्बयुद्धपत्तनरणाभिधानानि'। बलं वीर्यम्। १५७ 'पद्मकमलोत्पलानि पुंसि च'। पद्मादयः शब्दाः कुसुमाभिधायित्वेऽपि द्विलिङ्गाः स्युः। अमरोऽप्याह–'वा पुंसि पद्मं नलिनम्' इति। एवं च 'अर्धर्चादिसूत्रे तु जलजे पद्मं नपुंसकमेव' इति वृत्तिग्रन्थो मतान्तरेण

नेयः। १५८ 'आहवसंग्रामौ पुंसि'। १५९ 'आजिः स्त्रियामेव'। १६० 'फलजातिः'। फलजातिवाची शब्दो नपुंसकं स्यात्। आमलकम्। आम्रम्। १६१ 'वृक्षजातिः'। स्त्रियामेव क्वचिदेवेदम्। हरीतकी। १६२ 'वियज्जगत्सकृच्छकन्पृषच्छकृद्यकृदुदश्वितः'। एते क्लीबाः स्युः १६३ 'नवनीतावतानृतामृतनिमित्तवित्तचित्तपित्तव्रतरजतवृत्तपलितानि'। १६४ 'श्राद्धकुलिशदैवपीठकुण्डाङ्कदधिसक्थ्यक्ष्यस्थ्यास्पदाकाशकण्वबीजानि'। एतानि क्लीबे स्युः। १६५ 'दैवं पुंसि च'। दैवम्–दैवः। १६६ 'धान्याज्यसस्यरूप्यपण्यवर्ण्यधृष्यहव्यकव्यकाव्यसत्यापत्यमूल्यशिक्यकुड्यमद्यहर्म्यतूर्यसैन्यानि'। इदं धान्यमित्यादि। १६७ 'द्वन्द्वबर्हदुःखबडिशपिच्छबिम्बकुटुम्बकवचवरशरवृन्दारकाणि'। १६८ 'अक्षमिन्द्रिये'। 'इन्द्रिये' किम्। रथाङ्गादौ मा भूत्। इति नपुंसकाधिकारः।

१६९ 'स्त्रीपुंसयोः'। अधिकारोऽयम्। १७० 'गोमणियष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमसिमरीचयः'। इयमयं वा गौः। १७१ 'मृत्युसीधुकर्कन्धुकिष्कुकण्डुरेणवः'। इयमयं वा मृत्युः। १७२ 'गुणवचनमुकारान्तं नपुंसकं च'। त्रिलिङ्गमित्यर्थः। पटु–पटुः–पट्वी १७३ 'अपत्यार्थतद्धिते'। औपगवः–औपगवी। इति स्त्रीपुंसाधिकारः।

१७४ 'पुंनपुंसकयोः'। अधिकारोऽयम्। १७५ 'घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकबुस्तलोहिताः'। अयं घृतः। इदं घृतम्। १७६ 'शृङ्गार्घनिदाघोद्यमशल्यदृढाः'। अयं शृङ्गः। इदं शृङ्गम्। १७७ 'व्रजकुञ्जकुथकूर्चप्रस्थदर्पार्धर्चदर्भपुच्छाः'। अयं व्रजः। इदं व्रजम्। १७८ 'कबन्धौषधायुधान्ताः'। स्पष्टम्। १७९ 'दण्डमण्डखण्डशवसैन्धवपार्श्वाकाशकुशकाशाङ्कुशकुलिशाः'। एते पुंनपुंसकयोः स्युः। 'कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशं जले' इति विश्वः। शलाकावाची तु स्त्रियाम्। तथा च 'जानपद–' (सू ५००) आदिसूत्रेणायोविकारे ङीषि। कुशी। दारुणि तु टाप्। 'कुशा वानस्पत्याः स्थ ता मा यात' इति श्रुतिः। 'अतः कृकमि–' (सू १६०) इति सूत्रे 'कुशाकर्णीषु' इति प्रयोगश्च। व्याससूत्रे च–'हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दः' इति। तत्र शारीरकभाष्येऽप्येवम्। एवं च श्रुतिसूत्रभाष्याणामेकवाक्यत्वे स्थित आच्छन्द इत्याङ्प्रश्लेषादिपरो भामतीग्रन्थः प्रौढिवादमात्रपर इति विभावनीयं बहुश्रुतैः। १८० गृहमेहदेहपट्टपटहाष्टापदाम्बुदककुदाश्च'। इति पुंनपुंसकाधिकारः।

१८१ 'अवशिष्टलिङ्गम्'। १८२ 'अव्ययं कतियुष्मदस्मदः'। १८३ 'ष्णान्ता संख्या'। शिष्टा परवत्। एकः पुरुषः। एका स्त्री। एकं कुलम्। १८४ 'गुणवचनं च'। शुक्लः पटः। शुक्ला पटी। शुक्लं वस्त्रम्। १८५ 'कृत्याश्च'। १८६ 'करणाधिकरणयोर्ल्युट्'। १८७ 'सर्वादीनि सर्वनामानि'। स्पष्टार्थेयं त्रिसूत्री।

---

इति लिङ्गानुशासनप्रकरणम्।

---

इति श्रीभट्टोजिदीक्षितविरचिता वैयाकरणसिद्धान्तकौमुदी समाप्ता।

# ॥ सिद्धान्तकौमुदीपरिशिष्टानि ॥

## (१) अष्टाध्यायीसूत्रपाठः ।

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥
येन धौता गिरः पुंसां विमलैः शब्दवारिभिः ।
तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥

**अइउण् । ऋऌक् । एओङ् । ऐऔच् । हयवरट् । लण् । ञमङणनम् । झभञ् । घढधष् । जबगडदश् । खफछठथचटतव् । कपय् । शषसर् । हल् ॥ इति प्रत्याहारसूत्राणि ॥**

---

### प्रथमोऽध्यायः ।

#### प्रथमः पादः ।

१ वृद्धिरादैच् १६ । २ अदेङ्गुणः १७ । ३ इको गुणवृद्धी ३४ । ४ न धातुलोप आर्धधातुके २६५६ । ५ क्ङिति च २२१७ । ६ दीधीवेवीटाम् २१९० । ७ हलोऽनन्तराः संयोगः ३० । ८ मुखनासिकावचनोऽनुनासिकः ९ । ९ तुल्यास्यप्रयत्नं सवर्णम् १० । १० नाज्झलौ १३ । ११ ईदूदेद्द्विवचनं प्रगृह्यम् १०० । १२ अदसो मात् १०१ । १३ शे १०२ । १४ निपात एकाजनाङ् १०३ । १५ ओत् १०४ । १६ संबुद्धौ शाकल्यस्येतावनार्षे १०५ । १७ उञः १०६ । १८ ऊँ १०७ । १९ ईदूतौ च सप्तम्यर्थे १०९ । २० दाधा घ्वदाप् २३७३ ॥ १ ॥ २१ आद्यन्तवदेकस्मिन् ३४८ । २२ तरप्तमपौ घः २००३ । २३ बहुगणवतुडति संख्या २५८ । २४ ष्णान्ता षट् ३६९ । २५ डति च २५९ । २६ क्तक्तवतू निष्ठा ३०१२ । २७ सर्वादीनि सर्वनामानि २१३ । २८ विभाषा दिक्समासे बहुव्रीहौ २९२ । २९ न बहुव्रीहौ २२२ । ३० तृतीयासमासे २२३ । ३१ द्वन्द्वे च २२४ । ३२ विभाषा जसि २२५ । ३३ प्रथमचरमतयाल्पार्धकतिपयनेमाश्च २२६ । ३४ पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् २१८ । ३५ स्वमज्ञातिधनाख्यायाम् २१९ । ३६ अन्तरं बहिर्योगोपसंव्यानयोः २२० । ३७ स्वरादिनिपातमव्ययम् ४४७ । ३८ तद्धितश्चासर्वविभक्तिः ४४८ । ३९ कृन्मेजन्तः ४४९ । ४० क्त्वातोसुन्कसुनः ४५० ॥ २ ॥ ४१ अव्ययीभावश्च ४५१ । ४२ शि सर्वनामस्थानम् ३१३ । ४३ सुडनपुंसकस्य २२९ । ४४ न वेति विभाषा २४ । ४५ इग्यणः संप्रसारणम् ३२८ । ४६ आद्यन्तौ टकितौ ३६ । ४७ मिदचोऽन्त्यात्परः ३७ । ४८ एच इग्घ्रस्वादेशे ३२३ । ४९ षष्ठी स्थानेयोगा ३८ । ५० स्थानेऽन्तरतमः ३९ । ५१ उरण्रपरः ७० । ५२ अलोऽन्त्यस्य

४२ । ५३ क्ङिच ४३ । ५४ आदेः परस्य ४४ । ५५ अनेकाल्शित्सर्वस्य ४५ । ५६ स्थानिवदादेशोऽनल्विधौ ४९ । ५७ अचः परस्मिन्पूर्वविधौ ५० । ५८ न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ५१ । ५९ द्विर्वचनेऽचि २२४३ । ६० अदर्शनं लोपः ५२ ॥ ३ ॥ ६१ प्रत्ययस्य लुक्श्लुलुपः २६० । ६२ प्रत्ययलोपे प्रत्ययलक्षणम् २६२ । ६३ न लुमताङ्गस्य २६३ । ६४ अचोऽन्त्यादि टि ७९ । ६५ अलोऽन्त्यात्पूर्व उपधा २४९ । ६६ तस्मिन्निति निर्दिष्टे पूर्वस्य ४० । ६७ तस्मादित्युत्तरस्य ४१ । ६८ स्वं रूपं शब्दस्याशब्दसंज्ञा २५ । ६९ अणुदित्सवर्णस्य चाप्रत्ययः १४ । ७० तपरस्तत्कालस्य १५ । ७१ आदिरन्त्येन सहेता २ । ७२ येन विधिस्तदन्तस्य २६ । ७३ वृद्धिर्यस्याचामादिस्तद्वृद्धम् १३३५ । ७४ त्यदादीनि च १३३६ । ७५ एङ् प्राचां देशे १३३८ ॥ वृद्धिरायन्तवदव्ययीभावः प्रत्ययस्य लुक्पञ्चदश ॥

## द्वितीयः पादः ।

१ गाङ्कुटादिभ्योऽञ्णिन्ङित् २४६१ । २ विज इट् २५३६ । ३ विभाषोर्णोः २४४७ । ४ सार्वधातुकमपित् २२३४ । ५ असंयोगाल्लिट् कित् २२४२ । ६ इन्धिभवतिभ्यां च ३३९३ । ७ मृडमृदगुधकुषक्लिशवदवसः क्त्वा ३३२३ । ८ रुदविदमुषग्रहिस्वपिप्रच्छः संश्च २६०९ । ९ इको झल् २६१२ । १० हलन्ताच्च २६१३ । ११ लिङ्सिचावात्मनेपदेषु २३०० । १२ उश्च २३६८ । १३ वा गमः २७०० । १४ हनः सिच् २६९७ । १५ यमो गन्धने २६९८ । १६ विभाषोपयमने २७३० । १७ स्थाघ्वोरिच्च २३८९ । १८ न क्त्वा सेट् ३३२२ । १९ निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ३०५२ । २० मृषस्तितिक्षायाम् ३०५५ ॥ १ ॥ २१ उदुपधाद्भावादिकर्मणोरन्यतरस्याम् ३०५६ । २२ पूङः क्त्वा च ३०५१ । २३ नोपधात्थफान्ताद्वा ३३२४ । २४ वञ्चिलुञ्च्यृतश्च ३३२५ । २५ तृषिमृषिकृशेः काश्यपस्य ३३२६ । २६ रलो व्युपधाद्धलादेः संश्च २६१७ । २७ ऊकालोऽज्झ्रस्वदीर्घप्लुतः ४ । २८ अचश्च ३५ । २९ उच्चैरुदात्तः ५ । ३० नीचैरनुदात्तः ६ । ३१ समाहारः स्वरितः ७ । ३२ तस्यादित उदात्तमर्धह्रस्वम् ८ । ३३ एकश्रुति दूरात्संबुद्धौ ३६६२ । ३४ यज्ञकर्मण्यजपन्यूङ्खसामसु ३६६३ । ३५ उच्चैस्तरां वा वषट्कारः ३६६४ । ३६ विभाषा छन्दसि ३६६५ । ३७ न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ३६६६ । ३८ देवब्रह्मणोरनुदात्तः ३६६७ । ३९ स्वरितात्संहितायामनुदात्तानाम् ३६६८ । ४० उदात्तस्वरितपरस्य सन्नतरः ३६६९ ॥ २ ॥ ४१ अपृक्त एकाल्प्रत्ययः २५१ । ४२ तत्पुरुषः समानाधिकरणः कर्मधारयः ७४५ । ४३ प्रथमानिर्दिष्टं समास उपसर्जनम् ६५३ । ४४ एकविभक्ति चापूर्वनिपाते ६५५ । ४५ अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १७८ । ४६ कृत्तद्धितसमासाश्च १७९ । ४७ ह्रस्वो नपुंसके प्रातिपदिकस्य ३१८ । ४८ गोस्त्रियोरुपसर्जनस्य ६५६ । ४९ लुक्तद्धितलुकि १४०८ । ५० इद्गोण्याः १७०३ । ५१ लुपि युक्तवद्व्यक्तिवचने १२९४ । ५२ विशेषणानां चाजातेः १३०० । ५३ तदशिष्यं संज्ञाप्रमाणत्वात् १२९५ । ५४ लुब्योगाप्रख्यानात् १२९६ । ५५ योगप्रमाणे च तदभावेऽदर्शनं स्यात् १२९७ । ५६ प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् १२९८ । ५७ कालोपसर्जने च तुल्यम् १२९९ । ५८ जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् ८१७ । ५९ अस्मदो द्वयोश्च ८१८ । ६० फल्गुनीप्रोष्ठपदानां च नक्षत्रे ८१९ ॥ ३ ॥ ६१ छन्दसि पुनर्वस्वोरेकवचनम् ३३८७ । ६२ विशाखयोश्च

३३८८ । ६३ तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् ८३० । ६४ सरूपाणामेकशेष एकविभक्तौ १८८ । ६५ वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ९३१ । ६६ स्त्री पुंवच्च ९३२ । ६७ पुमान्स्त्रिया ९३३ । ६८ भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ९३४ । ६९ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ९३५ । ७० पिता मात्रा ९३६ । ७१ श्वशुरः श्वश्र्वा ९३७ । ७२ त्यदादीनि सर्वैर्नित्यम् ९३८ । ७३ ग्राम्यपशुसंघेष्वतरुणेषु स्त्री ९३९ ॥ गाङ्कुटाद्युदुपधाद्‍ग्रक्तश्छन्दांसि पुनर्वस्वाश्चयोदश ॥

## तृतीयः पादः ।

१ भूवादयो धातवः १८ । २ उपदेशेऽजनुनासिक इत् ३ । ३ हलन्त्यम् १ । ४ न विभक्तौ तुस्माः १९० । ५ आदिर्ञिटुडवः २२८९ । ६ षः प्रत्ययस्य ४७४ । ७ चुटू १८९ । ८ लशक्वतद्धिते १९५ । ९ तस्य लोपः ६२ । १० यथासंख्यमनुदेशः समानाम् १२८ । ११ स्वरितेनाधिकारः ४६ । १२ अनुदात्तङित आत्मनेपदम् २१५७ । १३ भावकर्मणोः २६७९ । १४ कर्तरि कर्मव्यतिहारे २६८० । १५ न गतिहिंसार्थेभ्यः २६८१ । १६ इतरेतरान्योन्योपपदाच्च २६८२ । १७ नेर्विशः २६८३ । १८ परिव्यवेभ्यः क्रियः २६८४ । १९ विपराभ्यां जेः २६८५ । २० आङो दोऽनास्यविहरणे २६८६ ॥ १ ॥ २१ क्रीडोऽनुसंपरिभ्यश्च २६८७ । २२ समवप्रविभ्यः स्थः २६८९ । २३ प्रकाशनस्थेयाख्ययोश्च २६९० । २४ उदोऽनूर्ध्वकर्मणि २६९१ । २५ उपान्मन्त्रकरणे २६९२ । २६ अकर्मकाच्च २६९३ । २७ उद्विभ्यां तपः २६९४ । २८ आङो यमहनः २६९५ । २९ समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः २६९९ । ३० निसमुपविभ्यो ह्वः २७०३ । ३१ स्पर्धायामाङः २७०४ । ३२ गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः २७०५ । ३३ अधेः प्रसहने २७०६ । ३४ वेः शब्दकर्मणः २७०७ । ३५ अकर्मकाच्च २७०८ । ३६ संमाननोत्संजनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः २७०९ । ३७ कर्तृस्थे चाशरीरे कर्मणि २७१० । ३८ वृत्तिसर्गतायनेषु क्रमः २७११ । ३९ उपपराभ्याम् २७१२ । ४० आङ उद्गमने २७१३ ॥ २ ॥ ४१ वेः पादविहरणे २७१४ । ४२ प्रोपाभ्यां समर्थाभ्याम् २७१५ । ४३ अनुपसर्गाद्वा २७१६ । ४४ अपह्नवे ज्ञः २७१७ । ४५ अकर्मकाच्च २७१८ । ४६ संप्रतिभ्यामनाध्याने २७१९ । ४७ भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः २७२० । ४८ व्यक्तवाचां समुच्चारणे २७२१ । ४९ अनोरकर्मकात् २७२२ । ५० विभाषा विप्रलापे २७२३ । ५१ अवाद्ग्रः २७२४ । ५२ समः प्रतिज्ञाने २७२५ । ५३ उदश्चरः सकर्मकात् २७२६ । ५४ समस्तृतीयायुक्तात् २७२७ । ५५ दाणश्च सा चेच्चतुर्थ्यर्थे २७२८ । ५६ उपाद्यमः स्वकरणे २७२९ । ५७ ज्ञाश्रुस्मृदृशां सनः २७३१ । ५८ नानोर्ज्ञः २७३२ । ५९ प्रत्याङ्भ्यां श्रुवः २७३३ । ६० शदेः शितः २३६२ ॥ ३ ॥ ६१ म्रियतेर्लुङ्लिङोश्च २५३८ । ६२ पूर्ववत्सनः २७३४ । ६३ आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य २२४० । ६४ प्रोपाभ्यां युजेरयज्ञपात्रेषु २७३५ । ६५ समः क्ष्णुवः २७३६ । ६६ भुजोऽनवने २७३७ । ६७ णेरणौ यत्कर्म णौ चेत्स कर्तानाध्याने २७३८ । ६८ भीस्म्योर्हेतुभये २५९४ । ६९ गृधिवञ्च्योः प्रलम्भने २७३९ । ७० लियः संमाननशालीनीकरणयोश्च २५९२ । ७१ मिथ्योपपदात्कृञोऽभ्यासे २७४० । ७२ स्वरितञितः कर्त्रभिप्राये क्रियाफले २१५८ । ७३ अपाद्वदः २७४१ । ७४ णिचश्च २५६४ । ७५ समुदाङ्भ्यो यमोऽग्रन्थे २७४२ । ७६ अनुपसर्गाज्ज्ञः

२७४३ । ७७ विभाषोपपदेन प्रतीयमाने २७४४ । ७८ शेषात्कर्तरि परस्मैपदम् २१५९ । ७९ अनुपराभ्यां कृञः २७४५ । ८० अभिप्रत्यतिभ्यः क्षिपः २७४६ ॥ ४ ॥ ८१ प्राद्वहः २७४७ । ८२ परेर्मृषः २७४८ । ८३ व्याङ्परिभ्यो रमः २७४९ । ८४ उपाच्च २७५० । ८५ विभाषाकर्मकात् २७५१ । ८६ बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः २७५२ । ८७ निगरणचलनार्थेभ्यश्च २७५३ । ८८ अणावकर्मकाच्चित्तवत्कर्तृकात् २७५४ । ८९ न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः २७५५ । ९० वा क्यषः २६६९ । ९१ द्युद्भ्यो लुङि २३४५ । ९२ वृद्भ्यः स्यसनोः २३४७। ९३ लुटि च क्लृपः २३५१ ॥ भूवादयः क्रीडोऽनु वेः पादम्रियतेः प्राद्वहस्त्रयोदश ॥

## चतुर्थः पादः ।

१ आ कडारादेका संज्ञा २३२ । २ विप्रतिषेधे परं कार्यम् १७५ । ३ यू स्त्र्याख्यौ नदी २६६ । ४ नेयङुवङ्स्थानावस्त्री ३०३ । ५ वामि ३०४ । ६ ङिति ह्रस्वश्च २९६ । ७ शेषो घ्यसखि २४३ । ८ पतिः समास एव २५७ । ९ षष्ठीयुक्तश्छन्दसि वा ३३८९ । १० ह्रस्वं लघु ३१ । ११ संयोगे गुरु ३२ । १२ दीर्घं च ३३ । १३ यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १९९ । १४ सुप्तिङन्तं पदम् २९ । १५ नः क्ये २६५९ । १६ सिति च १२५२ । १७ स्वादिष्वसर्वनामस्थाने २३० । १८ यचि भम् २३१ । १९ तसौ मत्वर्थे १८९६ । २० अयस्मयादीनि छन्दसि ३३९० ॥ १ ॥ २१ बहुषु बहुवचनम् १८७ । २२ द्व्येकयोर्द्विवचनैकवचने १८६ । २३ कारके ५३४ । २४ ध्रुवमपायेऽपादानम् ५८६ । २५ भीत्रार्थानां भयहेतुः ५८८ । २६ पराजेरसोढः ५८९ । २७ वारणार्थानामीप्सितः ५९० । २८ अन्तर्धौ येनादर्शनमिच्छति ५९१ । २९ आख्यातोपयोगे ५९२ । ३० जनिकर्तुः प्रकृतिः ५९३ । ३१ भुवः प्रभवः ५९४ । ३२ कर्मणा यमभिप्रैति स संप्रदानम् ५६९ । ३३ रुच्यर्थानां प्रीयमाणः ५७१ । ३४ श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ५७२ । ३५ धारेरुत्तमर्णः ५७३ । ३६ स्पृहेरीप्सितः ५७४ । ३७ क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ५७५ । ३८ क्रुधद्रुहोरुपसृष्टयोः कर्म ५७६ । ३९ राधीक्ष्योर्यस्य विप्रश्नः ५७७ । ४० प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ५७८ ॥ २ ॥ ४१ अनुप्रतिगृणश्च ५७९ । ४२ साधकतमं करणम् ५६० । ४३ दिवः कर्म च ५६२ । ४४ परिक्रयणे संप्रदानमन्यतरस्याम् ५८० । ४५ आधारोऽधिकरणम् ६३२ । ४६ अधिशीङ्स्थासां कर्म ५४२ । ४७ अभिनिविशश्च ५४३ । ४८ उपान्वध्याङ्वसः ५४४ । ४९ कर्तुरीप्सिततमं कर्म ५३५ । ५० तथायुक्तं चानीप्सितम् ५३८ । ५१ अकथितं च ५३९ । ५२ गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ ५४० । ५३ हृक्रोरन्यतरस्याम् ५४१ । ५४ स्वतन्त्रः कर्ता ५५९ । ५५ तत्प्रयोजको हेतुश्च २५७५ । ५६ प्राग्रीश्वरान्निपाताः १९ । ५७ चादयोऽसत्त्वे २० । ५८ प्रादयः २१ । ५९ उपसर्गाः क्रियायोगे २२ । ६० गतिश्च २३ ॥ ३ ॥ ६१ ऊर्यादिच्विडाचश्च ७६२ । ६२ अनुकरणं चानितिपरम् ७६३ । ६३ आदरानादरयोः सदसती ७६४ । ६४ भूषणेऽलम् ७६५ । ६५ अन्तरपरिग्रहे ७६६ । ६६ कणेमनसी श्रद्धाप्रतीघाते ७६७ । ६७ पुरोऽव्ययम् ७६८ । ६८ अस्तं च ७६९ । ६९ अच्छ गत्यर्थवदेषु ७७० । ७० अदोऽनुपदेशे ७७१ । ७१ तिरोऽन्तर्धौ ७७२ । ७२ विभाषा कृञि ७७३ । ७३ उपाजेऽन्वाजे ७७४ । ७४ साक्षात्प्रभृतीनि च ७७५ । ७५ अनत्याधान उरसिमनसी ७७६ । ७६ मध्येपदेनिवचने च ७७७ । ७७ नित्यं हस्तेपाणावुपयमने ७७८ ।

७८ प्राध्वं बन्धने ७७९ । ७९ जीविकोपनिषदावौपम्ये ७८० । ८० ते प्राग्धातोः २२३० ॥ ४ ॥ ८१ छन्दसि परेऽपि ३३९१ । ८२ व्यवहिताश्च ३३९२ । ८३ कर्मप्रवचनीयाः ५४६ । ८४ अनुर्लक्षणे ५४७ । ८५ तृतीयार्थे ५४९ । ८६ हीने ५५० । ८७ उपोऽधिके च ५५१ । ८८ अपपरी वर्जने ५९६ । ८९ आङ्मर्यादावचने ५९७ । ९० लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः ५५२ । ९१ अभिरभागे ५५३ । ९२ प्रतिः प्रतिनिधिप्रतिदानयोः ५९९ । ९३ अधिपरी अनर्थकौ ५५४ । ९४ सुः पूजायाम् ५५५ । ९५ अतिरतिक्रमणे च ५५६ । ९६ अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु ५५७ । ९७ अधिरीश्वरे ६४४ । ९८ विभाषा कृञि ६४६ । ९९ लः परस्मैपदम् २१५५ । १०० तङानावात्मनेपदम् २१५६ । ५ ॥ १०१ तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः २१६० । १०२ तान्येकवचनद्विवचनबहुवचनान्येकशः २१६१ । १०३ सुपः १८५ । १०४ विभक्तिश्च १८४ । १०५ युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः २१६२ । १०६ प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च २१६३ । १०७ अस्मद्युत्तमः २१६४ । १०८ शेषे प्रथमः २१६५ । १०९ परः संनिकर्षः संहिता २८ । ११० विरामोऽवसानम् २७ ॥ आ कडाराद्बहुष्वनुप्रतिगृण ङ्याद्दिच्छन्दसि तिङो दश ॥

इति प्रथमोऽध्यायः ।

---

# द्वितीयोऽध्यायः ।

## प्रथमः पादः ।

१ समर्थः पदविधिः ६४७ । २ सुबामन्त्रिते पराङ्गवत्स्वरे ३६५६ । ३ प्राक्कडारात्समासः ६४८ । ४ सह सुपा ६४९ । ५ अव्ययीभावः ६५१ । ६ अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु ६५२ । ७ यथासादृश्ये ६६१ । ८ यावदवधारणे ६६२ । ९ सुप्प्रतिना मात्रार्थे ६६३ । १० अक्षशलाकासंख्याः परिणा ६६४ । ११ विभाषा ६६५ । १२ अपपरिबहिरञ्चवः पञ्चम्या ६६६ । १३ आङ्मर्यादाभिविध्योः ६६७ । १४ लक्षणेनाभिप्रती आभिमुख्ये ६६८ । १५ अनुर्यत्समया ६६९ । १६ यस्य चायामः ६७० । १७ तिष्ठद्गुप्रभृतीनि च ६७१ । १८ पारे मध्ये षष्ठ्या वा ६७२ । १९ संख्या वंश्येन ६७३ । २० नदीभिश्च ६७४ ॥ १ ॥ २१ अन्यपदार्थे च संज्ञायाम् ६७५ । २२ तत्पुरुषः ६८४ । २३ द्विगुश्च ६८५ । २४ द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ६८६ । २५ स्वयं क्तेन ६८७ । २६ खट्वा क्षेपे ६८८ । २७ सामि ६८९ । २८ कालाः ६९० । २९ अत्यन्तसंयोगे च ६९१ । ३० तृतीया तत्कृतार्थेन गुणवचनेन ६९२ । ३१ पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ६९३ । ३२ कर्तृकरणे कृता बहुलम् ६९४ । ३३ कृत्यैरधिकार्थवचने ६९५ । ३४ अन्नेन व्यञ्जनम् ६९६ । ३५ भक्ष्येण मिश्रीकरणम् ६९७ । ३६ चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ६९८ । ३७ पञ्चमी भयेन ६९९ । ३८ अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ७०० । ३९ स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ७०१ । ४० सप्तमी शौण्डैः ७१७ ॥ २ ॥ ४१ सिद्धशुष्कपक्वबन्धैश्च ७१८ । ४२ ध्वाङ्क्षेण क्षेपे ७१९ । ४३ कृत्यैर्ऋणे ७२० । ४४ संज्ञायाम् ७२१ । ४५ क्तेनाहोरात्रा-

वयवाः ७२२ । ४६ तत्र ७२३ । ४७ क्षेपे ७२४ । ४८ पात्रेसमितादयश्च ७२५ । ४९ पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ७२६ । ५० दिक्संख्ये संज्ञायाम् ७२७ । ५१ तद्धितार्थोत्तरपदसमाहारे च ७२८ । ५२ संख्यापूर्वो द्विगुः ७३० । ५३ कुत्सितानि कुत्सनैः ७३२ । ५४ पापाणके कुत्सितैः ७३३ । ५५ उपमानानि सामान्यवचनैः ७३४ । ५६ उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ७३५ । ५७ विशेषणं विशेष्येण बहुलम् ७३६ । ५८ पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च ७३७ । ५९ श्रेण्यादयः कृतादिभिः ७३८ । ६० क्तेन नञ्विशिष्टेनानञ् ७३९ ॥ ३ ॥ ६१ सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ७४० । ६२ वृन्दारकनागकुञ्जरैः पूज्यमानम् ७४१ । ६३ कतरकतमौ जातिपरिप्रश्ने ७४२ । ६४ किं क्षेपे ७४३।६५ पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्वष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः ७४४ । ६६ प्रशंसावचनैश्च ७४७ । ६७ युवा खलतिपलितवलिनजरतीभिः ७४८ । ६८ कृत्यतुल्याख्या अजात्या ७४९ । ६९ वर्णो वर्णेन ७५० । ७० कुमारःश्रमणादिभिः ७५२ । ७१ चतुष्पादो गर्भिण्या ७५३।७२ मयूरव्यंसकादयश्च ७५४ ॥ समर्थोऽन्यपदार्थे त्र सिद्धशुष्कसन्महद्वादश ॥

## द्वितीयः पादः ।

१ पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ७१२ । २ अर्धं नपुंसकम् ७१३ । ३ द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ७१४।४ प्राप्तापन्ने च द्वितीयया ७१५।५ कालाः परिमाणिना ७१६ । ६ नञ् ७५६। ७ ईषदकृता ७५५।८ षष्ठी ७०२।९ याजकादिभिश्च ७०३।१० न निर्धारणे ७०४ । ११ पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन ७०५ । १२ क्तेन च पूजायाम् ७०६ । १३ अधिकरणवाचिना च ७०७ ।१४ कर्मणि च ७०८ । १५ तृजकाभ्यां कर्तरि ७०९ । १६ कर्तरि च ७१० । १७ नित्यं क्रीडाजीविकयोः ७११ ।१८ कुगतिप्रादयः ७६१ । १९ उपपदमतिङ् ७८२ । २० अमैवाव्ययेन ७८३ ॥ १ ॥ २१ तृतीयाप्रभृतीन्यन्यतरस्याम् ७८४ । २२ क्त्वा च ७८५ । २३ शेषो बहुव्रीहिः ८२९ । २४ अनेकमन्यपदार्थे ८३० । २५ संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये ८४३ ।२६ दिङ्नामान्यन्तराले ८४५ ।२७ तत्र तेनेदमिति सरूपे ८४६ । २८ तेन सहेति तुल्ययोगे ८४८ । २९ चार्थे द्वन्द्वः ९०१ । ३० उपसर्जनं पूर्वम् ६५४ । ३१ राजदन्तादिषु परम् ९०२ । ३२ द्वन्द्वे घि ९०३ । ३३ अजाद्यदन्तम् ९०४ । ३४ अल्पाच्तरम् ९०५ । ३५ सप्तमीविशेषणे बहुव्रीहौ ८९८ । ३६ निष्ठा ८९९ । ३७ वाहिताग्न्यादिषु ९०० । ३८ कडाराः कर्मधारये ७५१ ॥ पूर्वापराधरोत्तरं तृतीयाप्रभृतीयष्टादश ॥

## तृतीयः पादः ।

१ अनभिहिते ५३६ । २ कर्मणि द्वितीया ५३७ । ३ तृतीया च होश्छन्दसि ३३९४ । ४ अन्तरान्तरेणयुक्ते ५४५ । ५ कालाध्वनोरत्यन्तसंयोगे ५५८ । ६ अपवर्गे तृतीया ५६३ । ७ सप्तमीपञ्चम्यौ कारकमध्ये ६४३ ।८ कर्मप्रवचनीययुक्ते द्वितीया ५४८ ।९ यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ६४५ ।१० पञ्चम्यपाङ्परिभिः ५९८ ।११ प्रतिनिधिप्रतिदाने च यस्मात् ६०० ।१२ गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ५८५ । १३ चतुर्थी संप्रदाने ५७० । १४ क्रियार्थोपपदस्य च कर्मणि स्थानिनः ५८१ ।१५ तुमर्थाच्च भाववचनात् ५८२ ।

१६ नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ५८३ । १७ मन्यकर्मण्यनादरे विभाषाप्राणिषु ५८४ । १८ कर्तृकरणयोस्तृतीया ५६१ । १९ सहयुक्तेऽप्रधाने ५६४ । २० येनाङ्गविकारः ५६५ ॥ १ ॥ २१ इत्थंभूतलक्षणे ५६६ । २२ संज्ञोऽन्यतरस्यां कर्मणि ५६७ । २३ हेतौ ५६८ । २४ अकर्तर्यृणे पञ्चमी ६०१ । २५ विभाषा गुणेऽस्त्रियाम् ६०२ । २६ षष्ठी हेतुप्रयोगे ६०७ । २७ सर्वनाम्नस्तृतीया च ६०८ । २८ अपादाने पञ्चमी ५८७ । २९ अन्यारादितरर्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते ५९५ । ३० षष्ठ्यतसर्थप्रत्ययेन ६०९ । ३१ एनपा द्वितीया ६१० । ३२ पृथग्विनानानाभिस्तृतीयान्यतरस्याम् ६०३ । ३३ करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ६०४ । ३४ दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् ६११ । ३५ दूरान्तिकार्थेभ्यो द्वितीया च ६०५ । ३६ सप्तम्यधिकरणे च ६३३ । ३७ यस्य च भावेन भावलक्षणम् ६३४ । ३८ षष्ठी चानादरे ६३५ । ३९ स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च ६३६ । ४० आयुक्तकुशलाभ्यां चासेवायाम् ६३७ ॥ २ ॥ ४१ यतश्च निर्धारणम् ६३८ । ४२ पञ्चमी विभक्ते ६३९ । ४३ साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ६४० । ४४ प्रसितोत्सुकाभ्यां तृतीया च ६४१ । ४५ नक्षत्रे च लुपि ६४२ । ४६ प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ५३२ । ४७ संबोधने च ५३३ । ४८ सामन्त्रितम् ४११ । ४९ एकवचनं संबुद्धिः १९२ । ५० षष्ठी शेषे ६०६ । ५१ ज्ञोऽविदर्थस्य करणे ६१२ । ५२ अधीगर्थदयेशां कर्मणि ६१३ । ५३ कृञः प्रतियत्ने ६१४ । ५४ रुजार्थानां भाववचनानामज्वरेः ६१५ । ५५ आशिषि नाथः ६१६ । ५६ जासिनिप्रहणनाटक्राथपिषां हिंसायाम् ६१७ । ५७ व्यवहृपणोः समर्थयोः ६१८ । ५८ दिवस्तदर्थस्य ६१९ । ५९ विभाषोपसर्गे ६२० । ६० द्वितीया ब्राह्मणे ३३९५ ॥ ३ ॥ ६१ प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने ६२१ । ६२ चतुर्थ्यर्थे बहुलं छन्दसि ३३९६ । ६३ यजेश्च करणे ३३९७ । ६४ कृत्वोर्थप्रयोगे कालेऽधिकरणे ६२२ । ६५ कर्तृकर्मणोः कृति ६२३ । ६६ उभयप्राप्तौ कर्मणि ६२४ । ६७ क्तस्य च वर्तमाने ६२५ । ६८ अधिकरणवाचिनश्च ६२६ । ६९ न लोकाव्ययनिष्ठाखलर्थतृनाम् ६२७ । ७० अकेनोर्भविष्यदाधमर्ण्ययोः ६२८ । ७१ कृत्यानां कर्तरि वा ६२९ । ७२ तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् ६३० । ७३ चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः ६३१ ॥ अनभिहित इत्थंभूतयतश्च प्रेष्यब्रुवोस्त्रयोदश ॥

## चतुर्थः पादः ।

१ द्विगुरेकवचनम् ७३१ । २ द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ९०६ । ३ अनुवादे चरणानाम् ९०७ । ४ अध्वर्युक्रतुरनपुंसकम् ९०८ । ५ अध्ययनतोऽविप्रकृष्टाख्यानाम् ९०९ । ६ जातिरप्राणिनाम् ९१० । ७ विशिष्टलिङ्गो नदीदेशोऽग्रामाः ९११ । ८ क्षुद्रजन्तवः ९१२ । ९ येषां च विरोधः शाश्वतिकः ९१३ । १० शूद्राणामनिरवसितानाम् ९१४ । ११ गवाश्वप्रभृतीनि च ९१५ । १२ विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ९१६ । १३ विप्रतिषिद्धं चानधिकरणवाचि ९१७ । १४ न दधिपयआदीनि ९१८ । १५ अधिकरणैतावत्त्वे च ९१९ । १६ विभाषा समीपे ९२० । १७ स नपुंसकम् ८२१ । १८ अव्ययीभावश्च ६५९ । १९ तत्पुरुषोऽनञ्कर्मधारयः ८२२ । २० संज्ञायां कन्थोशीनरेषु

८२३ ॥ १ ॥ २१ उपज्ञोपक्रमं तदाद्याचिख्यासायाम् ८२४ । २२ छाया बाहुल्ये ८२५ । २३ सभा राजामनुष्यपूर्वा ८२६ । २४ अशाला च ८२७ । २५ विभाषा सेनासुराच्छायाशालानिशानाम् ८२८ । २६ परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ८१२ । २७ पूर्ववदश्ववडवौ ८१३ । २८ हेमन्तशिशिरावहोरात्रे च च्छन्दसि ३३९९ । २९ रात्राह्नाहाः पुंसि ८१४ । ३० अपथं नपुंसकम् ८१५ । ३१ अर्धर्चाः पुंसि च ८१६ । ३२ इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ३५० । ३३ एतदस्त्रतसोस्त्रतसौ चानुदात्तौ १९६२ । ३४ द्वितीयाटौस्स्वेनः ३५१ । ३५ आर्धधातुके २४३२ । ३६ अदो जग्धिर्ल्यप्ति किति ३०८० । ३७ लुङ्सनोर्घसॢ २४२७ । ३८ घञपोश्च ३२३६ । ३९ बहुलं छन्दसि ३३९८ । ४० लिट्यन्यतरस्याम् २४२४ ॥ २ ॥ ४१ वेञो वयिः २४११ । ४२ हनो वध लिङि २४३३ । ४३ लुङि च २४३४ । ४४ आत्मनेपदेष्वन्यतरस्याम् २६९६ । ४५ इणो गा लुङि २४५८ । ४६ णौ गमिरबोधने २६०७ । ४७ सनि च २६१५ । ४८ इङश्च २६१६ । ४९ गाङ्लिटि २४५९ । ५० विभाषा लुङ्लृङोः २४६० । ५१ णौ च संश्चङोः २६७९ । ५२ अस्तेर्भूः २४७० । ५३ ब्रुवो वचिः २४५३ । ५४ चक्षिङः ख्याञ् २४३६ । ५५ वा लिटि २४३७ । ५६ अजेर्व्यघञपोः २२९२ । ५७ वा यौ ३२९२ । ५८ ण्यक्षत्रियार्षञितो यूनि लुगणिञोः १२७६ । ५९ पैलादिभ्यश्च १०८४ । ६० इञः प्राचाम् १०८५ ॥ ३ ॥ ६१ न तौल्वलिभ्यः १०८६ । ६२ तद्राजस्य बहुषु तेनैवास्त्रियाम् ११९३ । ६३ यस्कादिभ्यो गोत्रे ११४६ । ६४ यञञोश्च ११०८ । ६५ अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च ११४७ । ६६ बह्वच इञः प्राच्यभरतेषु ११४८ । ६७ न गोपवनादिभ्यः ११४९ । ६८ तिककितवादिभ्यो द्वन्द्वे ११५० । ६९ उपकादिभ्योऽन्यतरस्यामद्वन्द्वे ११५१ । ७० आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ११५२ । ७१ सुपो धातुप्रातिपदिकयोः ६५० । ७२ अदिप्रभृतिभ्यः शपः २४२३ । ७३ बहुलं छन्दसि ३४०० । ७४ यङोऽचि च २६५० । ७५ जुहोत्यादिभ्यः श्लुः २४८९ । ७६ बहुलं छन्दसि ३४०१ । ७७ गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु २२२३ । ७८ विभाषा घ्राधेट्शाच्छासः २३७६ । ७९ तनादिभ्यस्तथासोः २५४७ । ८० मन्त्रे घसह्वरणशवृहदहाद्वृच्कृगमिजनिभ्यो लेः ३४०२ ॥ ४ ॥ ८१ आमः २२३८ । ८२ अव्ययादाप्सुपः ४५२ । ८३ नाव्ययीभावादतोऽम्त्वपञ्चम्याः ६५७ । ८४ तृतीयासप्तम्योर्बहुलम् ६५८ । ८५ लुटः प्रथमस्य डारौरसः २१८८ ॥ द्विगुरुपज्ञोपक्रमं वेञो वयिर्न तौल्वलिभ्य आमः पञ्च ॥

इति द्वितीयोऽध्यायः ।

---

# तृतीयोऽध्यायः ।

## प्रथमः पादः ।

१ प्रत्ययः १८० । २ परश्च १८१ । ३ आद्युदात्तश्च ३७०८ । ४ अनुदात्तौ सुप्पितौ ३७०९ । ५ गुप्तिज्किद्भ्यः सन् २३९३ । ६ मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य २३९४ । ७ धातोः कर्मणः समानकर्तृकादिच्छायां वा २६०८ । ८ सुप आत्मनः क्यच् २६५७ । ९ काम्यच्च २६६३ । १० उपमानादाचारे २६६४ । ११ कर्तुः क्यङ्सलोपश्च २६६५ । १२ भृशादिभ्यो

भृश्यच्वेर्लोपश्च हलः २६६७ । १३ लोहितादिडाज्भ्यः क्यष् २६६८ । १४ कष्टाय क्रमणे २६७० । १५ कर्मणो रोमन्थतपोभ्यां वर्तिचरोः २६७१ । १६ बाष्पोष्मभ्यामुद्वमने २६७२ । १७ शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे २६७३ । १८ सुखादिभ्यः कर्तृवेदनायाम् २६७४ । १९ नमोवरिवश्चित्रङः क्यच् २६७५ । २० पुच्छभाण्डचीवराण्णिङ् २६७६ ॥ १ ॥ २१ मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच् २६७७ । २२ धातोरेकाचो हलादेः क्रियासमभिहारे यङ् २६२९ । २३ नित्यं कौटिल्ये गतौ २६३४ । २४ लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम् २६३५ । २५ सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् २५६३ । २६ हेतुमति च २५७६ । २७ कण्ड्वादिभ्यो यक् २६७८ । २८ गुपूधूपविच्छिपणिपनिभ्य आयः २३०३ । २९ ऋतेरीयङ् २४२२ । ३० कमेर्णिङ् २३१० । ३१ आयादय आर्धधातुके वा २३०५ । ३२ सनाद्यन्ता धातवः २३०४ । ३३ स्यतासी लृलुटोः २१८६ । ३४ सिब्बहुलं लेटि ३४२५ । ३५ कास्प्रत्ययादाममन्त्रे लिटि २३०६ । ३६ इजादेश्च गुरुमतोऽनृच्छः २२३७ । ३७ दयायासश्च २२२४ । ३८ उषविदजागृभ्योऽन्यतरस्याम् २३४१ । ३९ भीह्रीभृहुवां श्लुवच्च २४९१ । ४० कृञ्चानुप्रयुज्यते लिटि २२३९ ॥ २ ॥ ४१ विदांकुर्वन्त्वित्यन्यतरस्याम् २४६५ । ४२ अभ्युत्सादयांप्रजनयांचिकयांरमयामकः पावयांक्रियाद्विदामक्रन्निति च्छन्दसि ३४०३ । ४३ च्लि लुङि २२११ । ४४ च्लेः सिच् २२१२ । ४५ शल इगुपधादनिटः क्सः २३३६ । ४६ श्लिष आलिङ्गने २५१४ । ४७ न दृशः २४०७ । ४८ णिश्रिद्रुस्रुभ्यः कर्तरि चङ् २३१२ । ४९ विभाषा धेट्श्व्योः २३७५ । ५० गुपेश्छन्दसि ३४०४ । ५१ नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ३४०५ । ५२ अस्यतिवक्तिख्यातिभ्योऽङ् २४३८ । ५३ लिपिसिचिह्वश्च २४१८ । ५४ आत्मनेपदेष्वन्यतरस्याम् २४१९ । ५५ पुषादिद्युताद्यॢदितः परस्मैपदेषु २३४३ । ५६ सर्तिशास्त्यर्तिभ्यश्च २३८२ । ५७ इरितो वा २२६९ । ५८ जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च २२९१ । ५९ कृमृदृरुहिभ्यश्छन्दसि ३४०६ । ६० चिण् ते पदः २५१३ ॥ ३ ॥ ६१ दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् २३२८ । ६२ अचः कर्मकर्तरि २७६८ । ६३ दुहश्च २७६९ । ६४ न रुध २७७० । ६५ तपोऽनुतापे च २७६० । ६६ चिण्भावकर्मणोः २७५८ । ६७ सार्वधातुके यक् २७५६ । ६८ कर्तरि शप् २१६७ । ६९ दिवादिभ्यः श्यन् २५०५ । ७० वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः २३२१ । यसोऽनुपसर्गात् २५२१ । ७२ संयसश्च २५२२ । ७३ स्वादिभ्यः श्नुः २५२३ । ७४ श्रुवः शृ च २३८६ । ७५ अक्षोऽन्यतरस्याम् २३३८ । ७६ तनूकरणे तक्षः २३३९ । ७७ तुदादिभ्यः शः २५३४ । ७८ रुधादिभ्यः श्नम् २५४३ । ७९ तनादिकृञ्भ्य उः २४६६ । ८० धिन्विकृण्व्योर च २३३२ ॥ ४ ॥ ८१ क्र्यादिभ्यः श्ना २५५४ । ८२ स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च २५५५ । ८३ हलः श्नः शानज्झौ २५५७ । ८४ छन्दसि शायजपि ३४३२ । ८५ व्यत्ययो बहुलम् ३४३३ । ८६ लिङ्याशिष्यङ् ३४३४ । ८७ कर्मवत्कर्मणा तुल्यक्रियः २७६६ । ८८ तपस्तपःकर्मकस्यैव २७७१ । ८९ न दुहस्नुनमां यक्चिणौ २७६७ । ९० कुषिरजोः प्राचां श्यन्परस्मैपदं च २७७२ । ९१ धातोः २८२९ । ९२ तत्रोपपदं सप्तमीस्थम् ७८१ । ९३ कृदतिङ् ३०४ । ९४ वासरूपोऽस्त्रियाम् २८३० । ९५ कृत्याः प्राङ्ण्वुलः २८३१ । ९६ तव्यत्तव्यानीयरः २८३४ ।

९७ अचो यत् २८४३ | ९८ पोरदुपधात् २८४४ | ९९ शकिसहोश्च २८४७ | १०० गदमदचरयमश्चानुपसर्गे २८४८ || ५ || १०१ अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु २८४९ | १०२ वह्यं करणम् २८५० | १०३ अर्यः स्वामिवैश्ययोः २८५१ | १०४ उपसर्या काल्या प्रजने २८५२ | १०५ अजर्यं संगतम् २८५३ | १०६ वदः सुपि क्यप्च २८५४ | १०७ भुवो भावे २८५५ | १०८ हनस्त च २८५६ | १०९ एतिस्तुशास्वृदृजुषः क्यप् २८५७ | ११० ऋदुपधाचाक्लृपिचृतेः २८५९ | १११ ई च खनः २८६० | ११२ भृञोऽसंज्ञायाम् २८६१ | ११३ मृजेर्विभाषा २८६२ | ११४ राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः २८६५ | ११५ भिद्योद्ध्यौ नदे २८६६ | ११६ पुष्यसिध्यौ नक्षत्रे २८६७ | ११७ विपूयविनीयजित्या मुञ्जकल्कहलिषु २८६८ | ११८ प्रत्यपिभ्यां ग्रहेश्छन्दसि २८६९ | ११९ पदास्वैरिबाह्यापक्ष्येषु च २८७० | १२० विभाषा कृवृषोः २८७१ || ६ || १२१ युग्यं च पत्रे २८७३ | १२२ अमावस्यदन्यतरस्याम् २८७४ | १२३ छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्याापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ३४०७ | १२४ ऋहलोर्ण्यत् २८७२ | १२५ ओरावश्यके २८८६ | १२६ आसुयुवपिरपिलपित्रपिचमश्च २८८७ | १२७ आनाय्योऽनित्ये २८८८ | १२८ प्रणाय्योऽसंमतौ २८८९ | १२९ पाय्यसांनाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु २८९० | १३० क्रतौ कुण्डपाय्यसंचाय्यौ २८९१ | १३१ अग्नौ परिचाय्योपचाय्यसमूह्याः २८९२ | १३२ चित्याग्निचित्ये च २८९३ | १३३ ण्वुल्तृचौ २८९५ | १३४ नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः २८९६ | १३५ इगुपधज्ञाप्रीकिरः कः २८९७ | १३६ आतश्चोपसर्गे २८९८ | १३७ पाघ्राध्माधेट्दृशः शः २८९९ | १३८ अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च २९०० | १३९ ददातिदधात्योर्विभाषा २९०१ | १४० ज्वलितिकसन्तेभ्यो णः २९०२ || ७ || १४१ श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च २९०३ | १४२ दुन्योरनुपसर्गे २९०४ | १४३ विभाषा ग्रहः २९०५ | १४४ गेहे कः २९०६ | १४५ | शिल्पिनि ष्वुन् २९०७ | १४६ गस्थकन् २९०८ | १४७ ण्युट् च २९०९ | १४८ हश्च व्रीहिकालयोः २९१० | १४९ प्रसृल्वः समभिहारे वुन् २९११ | १५० आशिषि च २९१२ ||
प्रत्ययो मुण्डविदांदीपजनत्र्यादिभ्योऽवद्ययुग्यं च श्याद्व्यधा दश ||

## द्वितीयः पादः ।

१ कर्मण्यण् २९१३ | २ ह्वावामश्च २९१४ | ३ आतोऽनुपसर्गे कः २९१५ | ४ सुपि स्थः २९१६ | ५ तुन्दशोकयोः परिमृजापनुदोः २९१९ | ६ प्रे दाज्ञः २९२० | ७ सामि ख्यः २९२१ | ८ गापोष्टक् २९२२ | ९ हरतेरनुद्यमनेऽच् २९२३ | १० वयसि च २९२४ | ११ आङि ताच्छील्ये २९२५ | १२ अर्हः २९२६ | १३ स्तम्बकर्णयो रमिजपोः २९२७ | १४ शमि धातोः संज्ञायाम् २९२८ | १५ अधिकरणे शेतेः २९२९ | १६ चरेष्टः २९३० | १७ भिक्षासेनादायेषु च २९३१ | १८ पुरोऽग्रतोऽग्रेषु सर्तेः २९३२ | १९ पूर्वे कर्तरि २९३३ | २० कृञो हेतुताच्छील्यानुलोम्येषु २९३४ || १ || २१ दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुःषु २९३५ | २२ कर्मणि भृतौ २९३६ | २३ न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु २९३७ | २४ स्तम्बशकृतोरिन् २९३८ | २५ हरतेर्दृतिनाथयोः पशौ २९३९ | २६ फलेग्रहिरात्मंभरिश्च २९४०-

२७ छन्दसि वनसनरक्षिमथाम् ३४०८ । २८ एजेः खश् २९४१ । २९ नासिकास्तनयोर्ध्माधेटोः २९४४ । ३० नाडीमुष्ट्योश्च २९४५ । ३१ उदि कूले रुजिवहोः २९४६ । ३२ वहाभ्रे लिहः २९४७ । ३३ परिमाणे पचः २९४८ । ३४ मितनखे च २९४९ । ३५ विध्वरुषोस्तुदः २९५० । ३६ असूर्यललाटयोर्दृशितपोः २९५१ । ३७ उग्रंपश्येरंमदपाणिंधमाश्च २९५२ । ३८ प्रियवशे वदः खच् २९५३ । ३९ द्विषत्परयोस्तापेः २९५४ । ४० वाचि यमो व्रते २९५६ । ॥ २ ॥ ४१ पूःसर्वयोर्दारिसहोः २९५८ । ४२ सर्वकूलाभ्रकरीषेषु कषः २९५९ । ४३ मेघर्तिभयेषु कृञः २९६० । ४४ क्षेमप्रियमद्रेऽण्च २९६१ । ४५ आशिते भुवः करणभावयोः २९६२ । ४६ संज्ञायां भृतृवृजिधारिसहितपिदमः २९६३ । ४७ गमश्च २९६४ । ४८ अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः २९६५ । ४९ आशिषि हनः २९६६ । ५० अपे क्लेशतमसोः २९६७ । ५१ कुमारशीर्षयोर्णिनिः २९६८ । ५२ लक्षणे जायापत्योष्टक् २९६९ । ५३ अमनुष्यकर्तृके च २९७० । ५४ शक्तौ हस्तिकपाटयोः २९७१ । ५५ पाणिघताडघौ शिल्पिनि २९७२ । ५६ आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् २९७३ । ५७ कर्तरि भुवः खिष्णुच्खुकञौ २९७४ । ५८ स्पृशोऽनुदके क्विन् ४३२ । ५९ ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ३७३ । ६० त्यदादिषु दृशोऽनालोचने कञ्च ४२९ ॥ ३ ॥ ६१ सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् २९७५ । ६२ भजो ण्विः २९७६ । ६३ छन्दसि सहः ३४०९ । ६४ वहश्च ३४१० । ६५ कव्यपुरीषपुरीष्येषु ञ्युट् ३४११ । ६६ हव्येऽनन्तःपादम् ३४१२ । ६७ जनसनखनक्रमगमो विट् ३४१३ । ६८ अदोऽनन्ने २९७७ । ६९ क्रव्ये च २९७८ । ७० दुहः कब्घश्च २९७९ । ७१ मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ३४१४ । ७२ अवे यजः ३४१५ । ७३ विजुपे छन्दसि ३४१७ । ७४ आतो मनिन्क्वनिब्वनिपश्च ३४१८ । ७५ अन्येभ्योऽपि दृश्यन्ते २९८० । ७६ क्विप्च २९८३ । ७७ स्थः क च २९८७ । ७८ सुप्यजातौ णिनिस्ताच्छील्ये २९८८ । ७९ कर्तर्युपमाने २९८९ । ८० व्रते २९९० ॥ ४ ॥ ८१ बहुलमाभीक्ष्ण्ये २९९१ । ८२ मनः २९९२ । ८३ आत्ममाने खश्च २९९३ । ८४ भूते २९९५ । ८५ करणे यजः २९९६ । ८६ कर्मणि हनः २९९७ । ८७ ब्रह्मभ्रूणवृत्रेषु क्विप् २९९८ । ८८ बहुलं छन्दसि ३४१९ । ८९ सुकर्मपापमन्त्रपुण्येषु कृञः २९९९ । ९० सोमे सुञः ३००० । ९१ अग्नौ चेः ३००१ । ९२ कर्मण्यग्न्याख्यायाम् ३००२ । ९३ कर्मणीनिविक्रियः ३००३ । ९४ दृशेः क्वनिप् ३००४ । ९५ राजनि युधिकृञः ३००५ । ९६ सहे च ३००६ । ९७ सप्तम्यां जनेर्डः ३००७ । ९८ पञ्चम्यामजातौ ३००८ । ९९ उपसर्गे च संज्ञायाम् ३००९ । १०० अनौ कर्मणि ३०१० ॥ ५ ॥ १०१ अन्येष्वपि दृश्यते ३०११ । १०२ निष्ठा ३०१३ । १०३ सुयजोर्ङ्वनिप् ३०९१ । १०४ जीर्यतेरतृन् ३०९२ । १०५ छन्दसि लिट् ३०९३ । १०६ लिटः कानज्वा ३०९४ । १०७ क्वसुश्च ३०९५ । १०८ भाषायां सदवसश्रुवः ३०९७ । १०९ उपेयिवाननाश्वाननूचानश्च ३०९८ । ११० लुङ् २२१८ । १११ अनद्यतने लङ् २२०५ । ११२ अभिज्ञावचने लृट् २७७३ । ११३ न यदि २७७४ । ११४ विभाषा साकाङ्क्षे २७७५ । ११५ परोक्षे लिट् २१७१ । ११६ हशश्वतोर्लङ् च २७७६ । ११७ प्रश्ने चासन्नकाले २७७७ । ११८ लट् स्मे २७७८ । ११९ अपरोक्षे च २७७९ । १२० ननौ पृष्टप्रतिवचने २७८० ॥ ६ ॥ १२१ नन्वोर्विभाषा २७८१ । १२२ पुरि लुङ्चास्मे २७८२ । १२३

वर्तमाने लट् २१५१ । १२४ लटः शतृशानचावप्रथमासमानाधिकरणे ३१०० । १२५ संबोधने च ३१०२ । १२६ लक्षणहेत्वोः क्रियायाः ३१०३ । १२७ तौ सत् ३१०६ । १२८ पूङ्यजोः शानन् ३१०८ । १२९ ताच्छील्यवयोवचनशक्तिषु चानश् ३१०९ । १३० इङ्धार्योः शत्रकृच्छ्रिणि ३११० । १३१ द्विषोऽमित्रे ३१११ । १३२ सुञो यज्ञसंयोगे ३११२ । १३३ अर्हः प्रशंसायाम् ३११३ । १३४ आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ३११४ । १३५ तृन् ३११५ । १३६ अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच् ३११६ । १३७ णेश्छन्दसि ३११७ । १३८ भुवश्च ३११८ । १३९ ग्लाजिस्थश्च ग्स्नुः ३११९ । १४० त्रसिगृधिधृषिक्षिपेः क्नुः ३१२० ॥ ७ ॥ १४१ शमित्यष्टाभ्यो घिनुण् ३१२१ । १४२ संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च ३१२२ । १४३ वौ कषलसकत्थस्रम्भः ३१२३ । १४४ अपे च लषः ३१२४ । १४५ प्रे लपसृद्रुमथवदवसः ३१२५ । १४६ निन्दाहिंसाक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् ३१२६ । १४७ देविक्रुशोश्चोपसर्गे ३१२७ । १४८ चलनशब्दार्थादकर्मकाद्युच् ३१२८ । १४९ अनुदात्तेतश्च हलादेः ३१२९ । १५० जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ३१३० । १५१ क्रुधमण्डार्थेभ्यश्च ३१३१ । १५२ न यः ३१३२ । १५३ सूददीपदीक्षश्च ३१३३ । १५४ लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ् ३१३४ । १५५ जल्पभिक्षकुट्टलुण्टवृङः षाकन् ३१३५ । १५६ प्रजोरिनिः ३१३६ । १५७ जिदृक्षिविश्रीण्वमाव्यथाभ्यमपरिभूप्रसूभ्यश्च ३१३७ । १५८ स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ३१३८ । १५९ दाधेट्सिशदसदो रुः ३१३९ । १६० सृघस्यदः क्मरच् ३१४० ॥ ८ ॥ १६१ भञ्जभासमिदो घुरच् ३१४१ । १६२ विदिभिदिच्छिदेः कुरच् ३१४२ । १६३ इण्नशजिसर्तिभ्यः क्वरप् ३१४३ । १६४ गत्वरश्च ३१४४ । १६५ जागरूकः ३१४५ । १६६ यजजपदशां यङः ३१४६ । ३१६७ नमिकम्पिस्म्यजसकमहिंसदीपो रः ३१४७ । १६८ सनाशंसभिक्ष उः ३१४८ । १६९ विन्दुरिच्छुः ३१४९ । १७० क्याच्छन्दसि ३१५० । १७१ आदृगमहनजनः किकिनौ लिट् च ३१५१ । १७२ स्वपितृषोर्नजिङ् ३१५२ । १७३ शॄवन्द्योरारुः ३१५३ । १७४ भियः क्रुक्लुकनौ ३१५४ । १७५ स्थेशभासपिसकसो वरच् ३१५५ । १७६ यश्च यङः ३१५६ । १७७ भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप् ३१५७ । १७८ अन्येभ्योऽपि दृश्यते ३१५८ । १७९ भुवः संज्ञान्तरयोः ३१५९ । १८० विप्रसंभ्यो ड्वसंज्ञायाम् ३१६० ॥ ९ ॥ १८१ धः कर्मणि ष्ट्रन् ३१६१ । १८२ दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे ३१६२ । १८३ हलसूकरयोः पुवः ३१६४ । १८४ अर्तिलूधूसूखनसहचर इत्रः ३१६५ । १८५ पुवः संज्ञायाम् ३१६६ । १८६ कर्तरि चर्षिदेवतयोः ३१६७ । १८७ ञीतः क्तः ३०८८ । १८८ मतिबुद्धिपूजार्थेभ्यश्च ३०८९ ॥ कर्मणि दिवापूःसर्वसत्सूबहुलमन्येष्वपि नन्वोः शामिति भञ्जभासधः कर्मण्यष्टौ ॥

## तृतीयः पादः ।

१ उणादयो बहुलम् ३१६९ । २ भूतेऽपि दृश्यन्ते ३१७० । ३ भविष्यति गम्यादयः ३१७१ । ४ यावत्पुरानिपातयोर्लट् २७८३ । ५ विभाषा कदाकर्ह्योः २७८४ । ६ किंवृत्ते लिप्सायाम् २७८५ । ७ लिप्स्यमानसिद्धौ च २७८६ । ८ लोडर्थलक्षणे च २७८७ । ९ लिङ्

चोर्ध्वमौहूर्तिके २१७८ । १० तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ३१७९ । ११ भाववचनाश्च ३१८० । १२ अण्कर्मणि च ३१८१ । १३ लृट् शेषे च ३१९३ । १४ लृटः सद्वा ३१०७ ।१५ अनद्यतने लुट् २१८९ । १६ पदरुजविशस्पृशो घञ् ३१८२ । १७ सृ स्थिरे ३१८३ । १८ भावे ३१८४ । १९ अकर्तरि च कारके संज्ञायाम् ३१८८ । २० परिमाणाख्यायां सर्वेभ्यः ३१९० ॥ १ ॥ २१ इङश्च ३१९१ । २२ उपसर्गे रुवः ३१९२ । २३ समि युद्रुदुवः ३१९४ । २४ श्रिणीभुवोऽनुपसर्गे ३१९५ । २५ वौ क्षुश्रुवः ३१९६ । २६ अवोदोर्नियः ३१९७ । २७ प्रे द्रुस्तुस्रुवः ३१९८ । २८ निरभ्योः पूल्वोः ३१९९ । २९ उन्न्योर्ग्रः ३२०० । ३० कॄ धान्ये ३२०१ । ३१ यज्ञे सामि स्तुवः ३२०२ । ३२ प्रे स्त्रोऽयज्ञे ३२०३ । ३३ प्रथने वावशब्दे ३२०४ । ३४ छन्दोनाम्नि च ३२०५ । ३५ उदि ग्रहः ३२०७ । ३६ समि मुष्टौ ३२०८ । ३७ परिन्योर्नीणोर्द्यूताभ्रेषयोः ३२०९ । ३८ परावनुपात्यय इणः ३२१० । ३९ व्युपयोः शेतेः पर्याये ३२११ । ४० हस्तादाने चेरस्तेये ३२१२ ॥ २ ॥ ४१ निवासचितिशरीरोपसमाधाने-ष्वादेश्च कः ३२१३ । ४२ संघे चानौत्तराधर्ये ३२१४ । ४३ कर्मव्यतिहारे णच्स्त्रियाम् ३२१५ । ४४ अभिविधौ भाव इनुण् ३२१८ । ४५ आक्रोशेऽवन्योर्ग्रहः ३२२० । ४६ प्रे लिप्सायाम् ३२२१ । ४७ परौ यज्ञे ३२२२ । ४८ नौ वृ धान्ये ३२२३ । ४९ उदि श्रयतियौतिपूद्रुवः ३२२४ । ५० विभाषाङि रुप्लुवोः ३२२५ । ५१ अवे ग्रहो वर्षप्रतिबन्धे ३२२६ । ५२ प्रे वणिजाम् ३२२७ । ५३ रश्मौ च ३२२८ । ५४ वृणोतेराच्छादने ३२२९ । ५५ परौ भुवोऽवज्ञाने ३२३० । ५६ एरच् ३२३१ । ५७ ऋदोरप् ३२३२ । ५८ ग्रहवृदृनिश्चिगमश्च ३२३४ । ५९ उपसर्गेऽदः ३२३५ । ६० नौ ण च ३२३७ ॥ ३ ॥ ६१ व्यधजपोरनुपसर्गे ३२३८ । ६२ स्वनहसोर्वा ३२३९ । ६३ यमः समुपनिविषु च ३२४० । ६४ नौ गदनदपठस्वनः ३२४१ । ६५ क्वणो वीणायां च ३२४२ । ६६ नित्यं पणः परिमाणे ३२४३ । ६७ मदोऽनुपसर्गे ३२४४ । ६८ प्रमदसंमदौ हर्षे ३२४५ । ६९ समुदोरजः पशुषु ३२४६ । ७० अक्षेषु ग्लहः ३२४७ । ७१ प्रजने सर्तेः ३२४८ । ७२ ह्वः संप्रसारणं च न्यभ्युपविषु ३२४९ । ७३ आङि युद्धे ३२५० । ७४ निपानमाहावः ३२५१ । ७५ भावेऽनुप-सर्गस्य ३२५२ । ७६ हनश्च वधः ३२५३ । ७७ मूर्तौ घनः ३२५४ । ७८ अन्तर्घनो देशे ३२५५ । ७९ अगारैकदेशे प्रघणः प्रघाणश्च ३२५६ । ८० उद्घनोऽत्याधानम् ३२५७ ॥ ४ ॥ ८१ अपघनोऽङ्गम् ३२५८ । ८२ करणेऽयोविद्रुषु ३२५९ । ८३ स्तम्बे क च ३२६० । ८४ परौ घः ३२६१ । ८५ उपघ्न आश्रये ३२६३ । ८६ संघोद्घौ गणप्रशंसयोः ३२६४ । ८७ निघो निमितम् ३२६५ । ८८ ड्वितः क्त्रिः ३२६६ । ८९ ट्वितोऽथुच् ३२६७ । ९० यजयाचयतविच्छप्रच्छरक्षो नङ् ३२६८ । ९१ स्वपो नन् ३२६९ । ९२ उपसर्गे घोः किः ३२७० । ९३ कर्मण्यधिकरणे च ३२७१ । ९४ स्त्रियां क्तिन् ३२७२ । ९५ स्थागापापचो भावे ३२७३ । ९६ मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः ३४२० । ९७ ऊतियूतिजूतिसातिहेतिकीर्तयश्च ३२७४ । ९८ व्रजयजोर्भावे क्यप् ३२७५ । ९९ संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः ३२७६ । १०० कृञः श च ३२७७ ॥ ५ ॥ १०१ इच्छा ३२७८ । १०२ अ प्रत्ययात् ३२७९ । १०३ गुरोश्च हलः ३२८० । १०४ षिद्भिदा-दिभ्योऽङ् ३२८१ । १०५ चिन्तिपूजिकथिकुम्बिचर्चश्च ३२८२ । १०६ आतश्चोपसर्गे

३२८३ । १०७ ण्यासश्रन्थो युच् ३२८४ । १०८ रोगाख्यायां ण्वुल्बहुलम् ३२८५ । १०९ संज्ञायाम् ३२८६ । ११० विभाषाख्यानपरिप्रश्नयोरिञ्च ३२८७ । १११ पर्यायार्हर्णोत्पत्तिषु ण्वुच् ३२८८ । ११२ आक्रोशे नञ्यनिः ३२८९ । ११३ कृत्यल्युटो बहुलम् २८४१ । ११४ नपुंसके भावे क्तः ३०९० । ११५ ल्युट् च ३२९० । ११६ कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम् ३२९१ । ११७ करणाधिकरणयोश्च ३२९३ । ११८ पुंसि संज्ञायां घः प्रायेण ३२९६ । ११९ गोचरसंचरवहव्रजव्यजापणनिगमाश्च ३२९८ । १२० अवे तॄस्त्रोर्घञ् ३२९९ ॥ ६ ॥ १२१ हलश्च ३३०० । १२२ अध्यायन्यायोद्यावसंहाराधारावायाश्च ३३०१ । १२३ उदङ्कोऽनुदके ३३०२ । १२४ जालमानायः ३३०३ । १२५ खनो घ च ३३०४ । १२६ ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ३३०५ । १२७ कर्तृकर्मणोश्च भूकृञोः ३३०८ । १२८ आतो युच् ३३०९ । १२९ छन्दसि गत्यर्थेभ्यः ३४२१ । १३० अन्येभ्योऽपि दृश्यते ३४२२ । १३१ वर्तमानसामीप्ये वर्तमानवद्वा २७८९ । १३२ आशंसायां भूतवच्च २७९० । १३३ क्षिप्रवचने लृट् २७९१ । १३४ आशंसावचने लिङ् २७९२ । १३५ नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः २७९३ । १३६ भविष्यति मर्यादावचनेऽवरस्मिन् २७९४ । १३७ कालविभागे चानहोरात्राणाम् २७९५ । १३८ परस्मिन्विभाषा २७९६ । १३९ लिङ्निमित्ते लृङ् क्रियातिपत्तौ २२२९ । १४० भूते च २७९७ ॥ ७ ॥ १४१ वोताप्योः २७९८ । १४२ गर्हायां लडपिजात्वोः २७९९ । १४३ विभाषा कथमि लिङ् च २८०० । १४४ किंवृत्ते लिङ्लृटौ २८०१ । १४५ अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि २८०२ । १४६ किंकिलास्त्यर्थेषु लृट् २८०३ । १४७ जातुयदोर्लिङ् २८०४ । १४८ यच्चयत्रयोः २८०५ । १४९ गर्हायां च २८०६ । १५० चित्रीकरणे च २८०७ । १५१ शेषे लडयदौ २८०८ । १५२ उताप्योः समर्थयोर्लिङ् २८०९ । १५३ कामप्रवेदनेऽकच्चिति २८१० । १५४ संभावनेऽलमिति चेत्सिद्धाप्रयोगे २८११ । १५५ विभाषा धातौ संभावनवचनेऽयदि २८१२ । १५६ हेतुहेतुमतोर्लिङ् २८१३ । १५७ इच्छार्थेषु लिङ्लोटौ २८१४ । १५८ समानकर्तृकेषु तुमुन् ३१७६ । १५९ लिङ् च २८१५ । १६० इच्छार्थेभ्यो विभाषा वर्तमाने २८१६ ॥ ८ ॥ १६१ विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् २२०८ । १६२ लोट् च २१९४ । १६३ प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च २८१७ । १६४ लिङ् चोर्ध्वमौहूर्तिके २८१८ । १६५ स्मे लोट् २८१९ । १६६ अधीष्टे च २८२० । १६७ कालसमयवेलासु तुमुन् ३१७९ । १६८ लिङ्यदि २८२१ । १६९ अर्हे कृत्यतृचश्च २८२२ । १७० आवश्यकाधमर्ण्ययोर्णिनिः ३३११ । १७१ कृत्याश्च ३३१२ । १७२ शकि लिङ् च २८२३ । १७३ आशिषि लिङ्लोटौ २१९५ । १७४ क्तिच्क्तौ च संज्ञायाम् ३३१३ । १७५ माङि लुङ् २२१९ । १७६ स्मोत्तरे लङ् च २२२० ॥ उणादय इङो निवासव्यधजपोरपघन इच्छा हलश्च वोताप्योर्विधिषोडश ॥

## चतुर्थः पादः ।

१ धातुसंबन्धे प्रत्ययाः २८२४ । २ क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः २८२५ । ३ समुच्चयेऽन्यतरस्याम् २८२६ । ४ यथाविध्यनुप्रयोगः पूर्वस्मिन् २८२७ । ५ समुच्चये सामान्यवचनस्य २८२८ । ६ छन्दसि लुङ्लङ्लिटः ३४२३ । ७ लिङर्थे लेट् ३४२४ । ८ उपसंवादाशङ्क-

योश्च ३४३१ । ९ तुमर्थे सेसेनसेऽसेन्क्सेकसेनध्यैअध्यैन्कध्यैकध्यैन्शध्यैशध्यैन्तवैतवेङ्तवेनः ३४३६ । १० प्रयै रोहिष्यै अव्यथिष्यै ३४३७ । ११ दृशे विख्ये च ३४३८ । १२ शकि णमुल्कमुलौ ३४३९ । १३ ईश्वरे तोसुन्कसुनौ ३४४० । १४ कृत्यार्थे तवैकेन्केन्यत्वनः ३४४१ । १५ अवचक्षे च ३४४२ । १६ भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् ३४४३ । १७ सृपितृदोः कसुन् ३४४४ । १८ अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ३३१६ । १९ उदीचां माङो व्यतीहारे ३३१७ । २० परावरयोगे च ३३१९ ॥ १ ॥ २१ समानकर्तृकयोः पूर्वकाले ३३२० । २२ आभीक्ष्ण्ये णमुल्च ३३४३ । २३ न यद्यनाकाङ्क्ष्ये ३३४४ । २४ विभाषाग्रेप्रथमपूर्वेषु ३३४५ । २५ कर्मण्याक्रोशे कृञः खमुञ् ३३४६ । २६ स्वादुमि णमुल् ३३४७ । २७ अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ३३४८ । २८ यथातथयोरसूयाप्रतिवचने ३३४९ । २९ कर्मणि दृशिविदोः साकल्ये ३३५० । ३० यावति विन्दजीवोः ३३५१ । ३१ चर्मोदरयोः पूरेः ३३५२ । ३२ वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम् ३३५३ । ३३ चेले क्नोपेः ३३५४ । ३४ निमूलसमूलयोः कषः ३३५५ । ३५ शुष्कचूर्णरूक्षेषु पिषः ३३५६ । ३६ समूलाकृतजीवेषु हन्कृञ्ग्रहः ३३५७ । ३७ करणे हनः ३३५८ । ३८ स्नेहने पिषः ३३५९ । ३९ हस्ते वर्तिग्रहोः ३३६० । ४० स्वे पुषः ३३६१ ॥ २ ॥ ४१ अधिकरणे बन्धः ३३६२ । ४२ संज्ञायाम् ३३६३ । ४३ कर्त्रोर्जीवपुरुषयोर्नशिवहोः ३३६४ । ४४ ऊर्ध्वे शुषिपूरोः ३३६५ । ४५ उपमाने कर्मणि च ३३६६ । ४६ कषादिषु यथाविध्यनुप्रयोगः ३३६७ । ४७ उपदंशस्तृतीयायाम् ३३६८ । ४८ हिंसार्थानां च समानकर्मकाणाम् ३३६९ । ४९ सतम्यां चोपपीडरुधकर्षः ३३७० । ५० समासत्तौ ३३७१ । ५१ प्रमाणे च ३३७२ । ५२ अपादाने परीप्सायाम् ३३७३ । ५३ द्वितीयायां च ३३७४ । ५४ स्वाङ्गेऽध्रुवे ३३७६ । ५५ परिक्लिश्यमाने च ३३७७ । ५६ विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ३३७८ । ५७ अस्यतितृषोः क्रियान्तरे कालेषु ३३७९ । ५८ नाम्न्यादिशिग्रहोः ३३८० । ५९ अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ३३८१ । ६० तिर्यच्यपवर्गे ३३८२ ॥ ३ ॥ ६१ स्वाङ्गे तस्प्रत्यये कृभ्वोः ३३८३ । ६२ नाधार्थप्रत्यये च्व्यर्थे ३३८४ । ६३ तूष्णीमि भुवः ३३८५ । ६४ अन्वच्यानुलोम्ये ३३८६ । ६५ शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ३१७७ । ६६ पर्याप्तिवचनेष्वलमर्थेषु ३१७८ । ६७ कर्तरि कृत् २८३२ । ६८ भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा २८९४ । ६९ लः कर्मणि च भावे चाकर्मकेभ्यः २१५२ । ७० तयोरेव कृत्यक्तखलर्थाः २८३३ । ७१ आदिकर्मणि क्तः कर्तरि च ३०५३ । ७२ गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च ३०८६ । ७३ दाशगोघ्नौ संप्रदाने ३१७२ । ७४ भीमादयोऽपादाने ३१७३ । ७५ ताभ्यामन्यत्रोणादयः ३१७४ ७६ क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः ३०८७ । ७७ लस्य २१५३ । ७८ तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् २१५४ । ७९ टित आत्मनेपदानां टेरे २२३३ । ८० थासः से २२३६ ॥ ४ ॥ ८१ लिटस्तझयोरेशिरेच् २२४१ । ८२ परस्मैपदानां णलतुसुस्थलथुसणल्वमाः २१७३ । ८३ विदो लटो वा २४६४ । ८४ ब्रुवः पञ्चानामादित आहो ब्रुवः २४५० । ८५ लोटो लङ्वत् २१९८ । ८६ एरुः २१९६ । ८७ सेर्ह्यपिच्च २२०१ । ८८ वा छन्दसि ३५५२ । ८९ मेर्निः २२०३ । ९० आमेतः २२५१ । ९१ सवाभ्यां वामौ २२५२ । ९२ आडुत्तमस्य पिच्च २२०४ । ९३ एत ऐ २२५३ । ९४

लेटोऽडाटौ ३४२७ । ९५ आत ऐ ३४२९ । २६ वैतोऽन्यत्र ३४३० । ९७ इतश्च लोपः परस्मैपदेषु ३४२६ । ९८ स उत्तमस्य ३४२८ । ९९ नित्यं ङितः २२०० । १०० इतश्च २२०७ ॥ ५ ॥ १०१ तस्थस्थमिपां तान्तन्तामः २१९९ । १०२ लिङः सीयुट् २२५५ । १०३ यासुट्परस्मैपदेषूदात्तो ङिच्च २२०९ । १०४ किदाशिषि २२१६ । १०५ झस्य रन् २२५६ । १०६ इटोऽत् २२५७ । १०७ सुट् तिथोः २२१० । १०८ झेर्जुस् २२१३ । १०९ सिजभ्यस्तविदिभ्यश्च २२२६ । ११० आतः २२२७ । १११ लङः शाकटायनस्यैव २४६३ । ११२ द्विषश्च २४३५ । ११३ तिङ्शित्सार्वधातुकम् २१६६ । ११४ आर्धधातुकं शेषः २१८७ । ११५ लिट् च २१७२ । ११६ लिङाशिषि २२१५ । ११७ छन्दस्युभयथा ३४३५ ॥ धातुसंबन्धे समानाधिकरणे स्वाङ्गे लिटस्तस्थस्थमिपां सप्तदश ॥

इति तृतीयोऽध्यायः ।

---

## चतुर्थोऽध्यायः ।

### प्रथमः पादः ।

१ ङ्याप्प्रातिपदिकात् १८२ । २ स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् १८३ । ३ स्त्रियाम् ४५३ । ४ अजाद्यतष्टाप् ४५४ । ५ ऋन्नेभ्यो ङीप् ३०६ । ६ उगितश्च ४५५ । ७ वनो र च ४५६ । ८ पादोऽन्यतरस्याम् ४५७ । ९ टाबृचि ४५८ । १० न षट्स्वस्रादिभ्यः ३०८ । ११ मनः ४५९ । १२ अनो बहुव्रीहेः ४६० । १३ डाबुभाभ्यामन्यतरस्याम् ४६१ । १४ अनुपसर्जनात् ४६९ । १५ टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ४७० । १६ यञश्च ४७१ । १७ प्राचां ष्फस्तद्धितः ४७३ । १८ सर्वत्र लोहितादिकतन्तेभ्यः ४७६ । १९ कौरव्यमाण्डूकाभ्यां च ४७७ । २० वयसि प्रथमे ४७८ ॥ १ ॥ २१ द्विगोः ४७९ । २२ अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि ४८० । २३ काण्डान्तात्क्षेत्रे ४८१ । २४ पुरुषात्प्रमाणेऽन्यतरस्याम् ४८२ । २५ बहुव्रीहेरूधसो ङीष् ४८४ । २६ संख्याव्ययादेर्ङीप् ४८५ । २७ दामहायनान्ताच्च ४८६ । २८ अन उपधालोपिनोऽन्यतरस्याम् ४६२ । २९ नित्यं संज्ञाछन्दसोः ४८७ । ३० केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ४८८ । ३१ रात्रेश्चाजसौ ३४४५ । ३२ अन्तर्वत्पतिवतोर्नुक् ४८९ । ३३ पत्युर्नो यज्ञसंयोगे ४९० । ३४ विभाषा सपूर्वस्य ४९१ । ३५ नित्यं सपत्न्यादिषु ४९२ । ३६ पूतक्रतोरै च ४९३ । ३७ वृषाकप्यग्निकुसितकुसिदानामुदात्तः ४९४ । ३८ मनोरौ वा ४९५ । ३९ वर्णादनुदात्तात्तोपधात्तो नः ४९६ । ४० अन्यतो ङीष् ४९७ ॥ २ ॥ ४१ षिद्गौरादिभ्यश्च ४९८ । ४२ जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ५०० । ४३ शोणात्प्राचाम् ५०१ । ४४ वोतो गुणवचनात् ५०२ । ४५ बह्वादिभ्यश्च ५०३ । ४६ नित्यं छन्दसि ३४४६ । ४७ भुवश्च ३४४७ । ४८ पुंयोगादाख्यायाम् ५०४ । ४९ इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ५०५ । ५० क्रीतात्करणपूर्वात् ५०६ । ५१ क्तादल्पाख्यायाम् ५०७ । ५२ बहुव्रीहेश्चान्तोदात्तात् ५०८ । ५३ अस्वाङ्गपूर्वपदाद्वा ५०९ । ५४ स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ५१० । ५५ नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ५११ । ५६ न क्रोडा-

दिबह्वचः ५१२ । ५७ सहनञ्विद्यमानपूर्वाच्च ५१३ । ५८ नखमुखात्संज्ञायाम् ५१४ । ५९ दीर्घजिह्वी च छन्दसि ३४४८ । ६० दिक्पूर्वपदान्ङीप् ५१५ ॥ ३ ॥ ६१ वाहः ५१६ । ६२ सख्याशिश्वीति भाषायाम् ५१७ । ६३ जातेरस्त्रीविषयादयोपधात् ५१८ । ६४ पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च ५१९ । ६५ इतो मनुष्यजातेः ५२० । ६६ ऊङुतः ५२१ । ६७ बाह्वन्तात्संज्ञायाम् ५२२ । ६८ पङ्गोश्च ५२३ । ६९ ऊरूत्तरपदादौपम्ये ५२४ । ७० संहितशफलक्षणवामादेश्च ५२५ । ७१ कद्रुकमण्डल्वोश्छन्दसि ३४४९ । ७२ संज्ञायाम् ५२६ । ७३ शार्ङ्गरवाद्यञो ङीन् ५२७ । ७४ यङश्चाप् ५२८ । ७५ आवट्याच्च ५२९ । ७६ तद्धिताः ५३० । ७७ यूनस्तिः ५३१ । ७८ अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ११९८ । ७९ गोत्रावयवात् ११९९ । ८० क्रौड्यादिभ्यश्च १२०० ॥ ४ ॥ ८१ दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम् १२०१ । ८२ समर्थानां प्रथमाद्वा १०७२ । ८३ प्राग्दीव्यतोऽण् १०७३ । ८४ अश्वपत्यादिभ्यश्च १०७४ । ८५ दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः १०७७ । ८६ उत्सादिभ्योऽञ् १०७८ । ८७ स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् १०७९ । ८८ द्विगोर्लुगनपत्ये १०८० । ८९ गोत्रेऽलुगचि १०८१ । ९० यूनि लुक् १०८३ । ९१ फक्फिञोरन्यतरस्याम् १०८७ । ९२ तस्यापत्यम् १०८८ । ९३ एको गोत्रे १०९३ । ९४ गोत्राद्यून्यस्त्रियाम् १०९४ । ९५ अत इञ् १०९५ । ९६ बाह्वादिभ्यश्च १०९६ । ९७ सुधातुरकङ् च १०९७ । ९८ गोत्रे कुञ्जादिभ्यश्च्फञ् १०९९ । ९९ नडादिभ्यः फक् ११०१ । १०० हरितादिभ्योऽञः ११०२ ॥ ५ ॥ १०१ यञिञोश्च ११०३ । १०२ शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु ११०४ । १०३ द्रोणपर्वतजीवन्तादन्यतरस्याम् ११०५ । १०४ अनृष्यानन्तर्ये बिदादिभ्योऽञ् ११०६ । १०५ गर्गादिभ्यो यञ् ११०७ । १०६ मधुबभ्र्वोर्ब्राह्मणकौशिकयोः ११०९ । १०७ कपिबोधादाङ्गिरसे १११० । १०८ वतण्डाच्च ११११ । १०९ लुक् स्त्रियाम् १११२ । ११० अश्वादिभ्यः फञ् १११३ । १११ भर्गात्त्रैगर्ते १११४ । ११२ शिवादिभ्योऽण् १११५ । ११३ अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः १११६ । ११४ ऋष्यन्धकवृष्णिकुरुभ्यश्च १११७ । ११५ मातुरुत्संख्यासंभद्रपूर्वायाः १११८ । ११६ कन्यायाः कनीन च १११९ । ११७ विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु ११२० । ११८ पीलाया वा ११२१ । ११९ ढक्च मण्डूकात् ११२२ । १२० स्त्रीभ्यो ढक् ११२३ ॥ ६ ॥ १२१ द्व्यचः ११२४ । १२२ इतश्चानिञः ११२५ । १२३ शुभ्रादिभ्यश्च ११२६ । १२४ विकर्णकुषीतकात्काश्यपे ११२७ । १२५ भ्रुवो वुक्च ११२८ । १२६ कल्याण्यादीनामिनङ् ११३१ । १२७ कुलटाया वा ११३२ । १२८ चटकाया ऐरक् ११३४ । १२९ गोधाया ढ्रक् ११३५ । १३० आरगुदीचाम् ११३६ । १३१ क्षुद्राभ्यो वा ११३७ । १३२ पितृष्वसुश्छण् ११३८ । १३३ ढकि लोपः ११३९ । १३४ मातृष्वसुश्च ११४० । १३५ चतुष्पाद्भ्यो ढञ् ११४१ । १३६ गृष्ट्यादिभ्यश्च ११४३ । १३७ राजश्वशुराद्यत् ११५३ । १३८ क्षत्राद्घः ११६१ । १३९ कुलात्खः ११६२ । १४० अपूर्वपदादन्यतरस्यां यड्ढकञौ ११६३ ॥ ७ ॥ १४१ महाकुलादञ्खञौ ११६४ । १४२ दुष्कुलाड्ढक् ११६५ । १४३ स्वसुश्छः ११६६ । १४४ भ्रातुर्व्यच्च ११६७ । १४५ व्यन्सपत्ने ११६८ । १४६ रेवत्यादिभ्यष्ठक् ११६९ । १४७ गोत्रस्त्रियाः कुत्सने ण च ११७१ । १४८ वृद्धाट्ठक्सौवीरेषु बहुलम् ११७२ । १४९ फेश्छ च ११७३ । १५० फाण्टाहृतिमिमताभ्यां णफिञौ ११७४ । १५१ कुर्वादिभ्यो ण्यः ११७५ ।

१५२ सेनान्तलक्षणकारिभ्यश्च ११७६ । १५३ उदीचामिञ् ११७७ । १५४ तिकादिभ्यः फिञ् ११७८ । १५५ कौशल्यकार्मार्याभ्यां च ११७९ । १५६ अणो द्व्यचः ११८० । १५७ उदीचां वृद्धादगोत्रात् ११८१ । १५८ वाकिनादीनां कुक्च ११८२ । १५९ पुत्रान्तादन्यतरस्याम् ११८३ । १६० प्राचामवृद्धात्फिन्बहुलम् ११८४ ॥ ८ ॥ १६१ मनोर्जातावञ्यतौ षुक्च ११८५ । १६२ अपत्यं पौत्रप्रभृति गोत्रम् १०८९ । १६३ जीवति तु वंश्ये युवा १०९० । १६४ भ्रातरि च ज्यायसि १०९१ । १६५ वान्यस्मिन्सपिण्डे स्थविरतरे जीवति १०९२ । १६६ वृद्धस्य च पूजायाम् १०९२ (वा २६५५) । १६७ यूनश्च कुत्सायाम् १०९२ (वा २६५२) १६८ जनपदशब्दात्क्षत्रियादञ् ११८६ । १६९ साल्वेयगान्धारिभ्यां च ११८७ । १७० द्व्यञ्मगधकलिङ्गसूरमसादण् ११८८ । १७१ वृद्धेत्कोसलाजादाञ्ञ्यङ् ११८९ । १७२ कुरुनादिभ्यो ण्यः ११९० । १७३ साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ११९१ । १७४ ते तद्राजाः ११९२ । १७५ कम्बोजाल्लुक् ११९४ । १७६ स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ११९५ । १७७ अतश्च ११९६ । १७८ न प्राच्यभर्गादियौधेयादिभ्यः ११९७ ॥ ङ्याब्द्विगोः षित्रौरादिवाहो दैवयज्ञियञिओर्द्व्यचो महाकुलान्मनोर्जातावष्टादश ॥

## द्वितीयः पादः ।

१ तेन रक्तं रागात् १२०२ । २ लाक्षारोचनाशकलकर्दमाट्ठक् १२०३ । ३ नक्षत्रेण युक्तः कालः १२०४ । ४ लुबविशेषे १२०५ । ५ संज्ञायां श्रवणाश्वत्थाभ्याम् १२०६ । ६ द्वन्द्वाच्छः १२०७ । ७ दृष्टं साम १२०८ । ८ कलेर्ढक् १२०९ (वा २६८९) ९ वामदेवाड्ड्यड्ड्यौ १२१० । १० परिवृतो रथः १२११ । ११ पाण्डुकम्बलादिनिः १२१२ । १२ द्वैपवैयाघ्रादञ् १२१३ । १३ कौमारापूर्ववचने १२१४ । १४ तत्रोद्धृतममत्रेभ्यः १२१५ । १५ स्थण्डिलाच्छयितरि व्रते १२१६ । १६ संस्कृतं भक्षाः १२१७ । १७ शूलोखाद्यत् १२१८ । १८ दध्नष्ठक् १२१९ । १९ उदश्वितोऽन्यतरस्याम् १२२० । २० क्षीराड्ढञ् १२२२ ॥ १ ॥ २१ सास्मिन्पौर्णमासीति संज्ञायाम् १२२३ । २२ आग्रहायण्यश्वत्थाट्ठक् १२२४ । २३ विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः १२२५ । २४ सास्य देवता १२२६ । २५ कस्येत् १२२७ । २६ शुक्राद्घन् १२२८ । २७ अपोनप्त्रपांनप्तृभ्यां घः १२२९ । २८ छ च १२३० । २९ महेन्द्राद्घाणौ च १२३१ । ३० सोमाट्ट्यण् १२३२ । ३१ वाय्वृतुपित्रुषसो यत् १२३३ । ३२ द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च १२३५ । ३३ अग्नेर्ढक् १२३६ । ३४ कालेभ्यो भववत् १२३७ । ३५ महाराजप्रोष्ठपदाट्ठञ् १२३८ । ३६ पितृव्यमातुलमातामहपितामहाः १२४२ । ३७ तस्य समूहः १२४३ । ३८ भिक्षादिभ्योऽण् १२४४ । ३९ गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् १२४६ । ४० केदाराद्यञ्च १२४८ ॥ २ ॥ ४१ ठञ्कवचिनश्च १२४९ । ४२ ब्राह्मणमाणववाडवाद्यत् १२५० । ४३ ग्रामजनबन्धुसहायेभ्यस्तल् १२५१ । ४४ अनुदात्तादेरञ् १२५३ । ४५ खण्डिकादिभ्यश्च १२५४ । ४६ चरणेभ्यो धर्मवत् १२५५ । ४७ अचित्तहस्तिधेनोष्ठक् १२५६ । ४८ केशाश्वाभ्यां यञ्छावन्यतरस्याम् १२५७ । ४९ पाशादिभ्यो यः १२५८ । ५० खलगोरथात् १२५९ । ५१ इनित्रकट्यचश्च १२६० । ५२ विषयो देशे १२६१ । ५३ राजन्यादिभ्यो वुञ् १२६२ । ५४ भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ १२६३ । ५५ सोऽस्यादिरिति छन्दसः प्रगाथेषु १२६४ । ५६ संग्रामे प्रयोजनयोद्धृभ्यः १२६५ ।

५७ तदस्यां प्रहरणमिति क्रीडायां णः १२६६ । ५८ घञः सास्यां क्रियेति ञः १२६७ । ५९ तदधीते तद्वेद १२६९ । ६० क्रतूक्थादिसूत्रान्ताट्ठक् १२७० ॥ ३ ॥ ६१ क्रमादिभ्यो वुन् १२७१ । ६२ अनुब्राह्मणादिनिः १२७२ । ६३ वसन्तादिभ्यष्ठक् १२७३ । ६४ प्रोक्ताल्लुक् १२७४ । ६५ सूत्राच्च कोपधात् १२७७ । ६६ छन्दोब्राह्मणानि च तद्विषयाणि १२७८ । ६७ तदस्मिन्नस्तीति देशे तन्नाम्नि १२७९ । ६८ तेन निर्वृत्तम् १२८० । ६९ तस्य निवासः १२८१ । ७० अदूरभवश्च १२८२ । ७१ ओरञ् १२८३ । ७२ मतोश्च बह्वजङ्गात् १२८४ । ७३ बह्वचः कूपेषु १२८५ । ७४ उदक्च विपाशः १२८६ । ७५ संकलादिभ्यश्च १२८७ । ७६ स्त्रीषु सौवीरसाल्वप्राक्षु १२८८ । ७७ सुवास्त्वादिभ्योऽण् १२८९ । ७८ रोणी १२९० । ७९ कोपधाच्च १२९१ । ८० वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतंगमप्रगादिन्वराहकुमुदादिभ्यः १२९२ ॥ ४ ॥ ८१ जनपदे लुप् १२९३ । ८२ वरणादिभ्यश्च १३०१ । ८३ शर्कराया वा १३०२ । ८४ ठक्छौ च १३०३ । ८५ नद्यां मतुप् १३०४ । ८६ मध्वादिभ्यश्च १३०५ । ८७ कुमुदनडवेतसेभ्यो ड्मतुप् १३०६ । ८८ नडशादाड्ड्वलच् १३०७ । ८९ शिखाया वलच् १३०८ । ९० उत्करादिभ्यश्छः १३०९ । ९१ नडादीनां कुक्च १३१० । ९२ शेषे १३१२ । ९३ राष्ट्रावारपाराद्घखौ १३१३ । ९४ ग्रामाद्यखञौ १३१४ । ९५ कत्र्यादिभ्यो ढकञ् १३१५ । ९६ कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु १३१६ । ९७ नद्यादिभ्यो ढक् १३१७ । ९८ दक्षिणापश्चात्पुरसस्त्यक् १३१८ । ९९ कापिश्याः ष्फक् १३१९ । १०० रङ्कोरमनुष्येऽण्च १३२० ॥ ५ ॥ १०१ द्युप्रागपागुदक्प्रतीचो यत् १३२१ । १०२ कन्थायाष्ठक् १३२२ । १०३ वर्णौ वुक् १३२३ । १०४ अव्ययात्त्यप् १३२४ । १०५ ऐषमोह्यः-श्वसोऽन्यतरस्याम् १३२६ । १०६ तीररूप्योत्तरपदादञ्ञौ १३२७ । १०७ दिक्पूर्वपदादसंज्ञायां ञः १३२८ । १०८ मद्रेभ्योऽञ् १३२९ । १०९ उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् १३३० । ११० प्रस्थोत्तरपदपलद्यादिकोपधादण् १३३१ । १११ कण्वादिभ्यो गोत्रे १३३२ । ११२ इञश्च १३३३ । ११३ न द्व्यचः प्राच्यभरतेषु १३३४ । ११४ वृद्धाच्छः १३३७ । ११५ भवतष्ठक्छसौ १३३९ । ११६ काश्यादिभ्यष्ठञ्ञिठौ १३४० । ११७ वाहीकग्रामेभ्यश्च १३४१ । ११८ विभाषोशीनरेषु १३४२ । ११९ ओर्देशे ठञ् १३४३ । १२० वृद्धात्प्राचाम् १३४४ ॥ ६ ॥ १२१ धन्वयोपधाद्वुञ् १३४५ । १२२ प्रस्थपुरवहान्ताच्च १३४६ । १२३ रोपधेतोः प्राचाम् १३४७ । १२४ जनपदतदवध्योश्च १३४८ । १२५ अवृद्धादपि बहुवचनविषयात् १३४९ । १२६ कच्छाग्निवक्त्रवर्तोत्तरपदात् १३५० । १२७ धूमादिभ्यश्च १३५१ । १२८ नगरात्कुत्सनप्रावीण्ययोः १३५२ । १२९ अरण्यान्मनुष्ये १३५३ । १३० विभाषा कुरुयुगंधराभ्याम् १३५४ । १३१ मद्रवृज्योः कन् १३५५ । १३२ कोपधादण् १३५६ । १३३ कच्छादिभ्यश्च १३५७ । १३४ मनुष्यतत्स्थयोर्वुञ् १३५८ । १३५ अपदातौ साल्वात् १३५९ । १३६ गोयवाग्वोश्च १३६० । १३७ गर्तोत्तरपदाच्छः १३६१ । १३८ गहादिभ्यश्च १३६२ । १३९ प्राचां कटादेः १३६३ । १४० राज्ञः क च १३६४ ॥ ७ ॥ १४१ वृद्धादकेकान्तखोपधात् १३६५ । १४२ कन्थापलदनगरग्रामह्रदोत्तरपदात् १३६६ । १४३ पर्वताच्च १३६७ । १४४ विभाषामनुष्ये १३६८ । १४५ कृकणपर्णाद्भारद्वाजे १३६९ । तेन दीव्यन्तठ्क्रमादिभ्यो जनपदे द्युप्रागपाग्धन्ववृद्धात्पञ्च ॥

## तृतीयः पादः ।

१ युष्मदस्मदोरन्यतरस्यां खञ्च १३७० । २ तस्मिन्नणि च युष्माकास्माकौ १३७१ । ३ तवकममकावेकवचने १३७२ । ४ अर्धाद्यत् १३७४ । ५ परावराधमोत्तमपूर्वाच्च १३७५ । ६ दिक्पूर्वपदाट्टञ्च १३७६ । ७ ग्रामजनपदैकदेशादञ्ठञौ १३७७ । ८ मध्यान्मः १३७८ । ९ अ सांप्रतिके १३७९ ।१० द्वीपादनुसमुद्रं यञ् १३८०।११ कालाट्ठञ् १३८१ । १२ श्राद्धे शरदः १३८२ । १३ विभाषा रोगातपयोः १३८३ । १४ निशाप्रदोषाभ्यां च १३८४ । १५ श्वसस्तुट् च १३८५ । १६ संधिवेलाद्यृतुनक्षत्रेभ्योऽण १३८७ । १७ प्रावृष एण्यः १३८८।१८ वर्षाभ्यष्ठक् १३८९ । १९ छन्दांसि ठञ् ३४५० ।२० वसन्ताच्च ३४५१ ॥ १ ॥ २१ हेमन्ताच्च ३४५२ । २२ सर्वत्राण्च तलोपश्च १३९० । २३ सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च १३९१ । २४ विभाषा पूर्वाह्णापराह्णाभ्याम् १३९२ । २५ तत्र जातः १३९३।२६ प्रावृषष्ठप् १३९४ ।२७ संज्ञाय शरदो वुञ् १३९५ । २८ पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्कराद्वुन् १४०१ । २९ पथः पन्थ च १४०२ । ३० अमावास्याया वा १४०३ । ३१ अ च १४०४ । ३२ सिन्ध्वपकराभ्यां कन् १४०५। ३३ अणञौ च १४०६ । ३४ श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुला-ल्लुक् १४०७।३५ स्थानान्तगोशालखरशालाच्च १४१०।३६ वत्सशालाभिजिदश्वयुक्छतभिषजो वा १४११ । ३७ नक्षत्रेभ्यो बहुलम् १४१२ । ३८ कृतलब्धक्रीतकुशलाः १४१३ । ३९ प्रायभवः १४१४ । ४० उपजानूपकर्णोपनीवेष्ठक् १४१५ ॥ २ ॥ ४१ संभूते १४१६ । ४२ कोशाड्ढञ् १४१७ । ४३ कालात्साधुपुष्प्यत्पच्यमानेषु १४१८ । ४४ उप्ते च १४१९ । ४५ आश्वयुज्या वुञ् १४२० । ४६ ग्रीष्मवसन्तादन्यतरस्याम् १४२१ । ४७ देयमृणे १४२२ । ४८ कलाप्यश्वत्थयवबुसाद्वुन् १४२३ । ४९ ग्रीष्मावरसमाद्वुञ् १४२४ । ५० संवत्सराग्रहायणीभ्यां ठञ्च १४२५। ५१ व्याहरति मृगः १४२६ ।५२ तदस्य सोढम् १४२७।५३ तत्र भवः १४२८ । ५४ दिगादिभ्यो यत् १४२९ । ५५शरीरावयवाच्च १४३०।५६ दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् १४३३ । ५७ ग्रीवाभ्योऽण्च १४३४ । ५८ गम्भीराञ्ञ्यः १४३५ । ५९ अव्ययीभावाच्च १४३६ । ६० अन्तःपूर्वपदाट्ठञ् १४३७ ॥ ३ ॥ ६१ ग्रामात्पर्यनुपूर्वात् १४४० । ६२ जिह्वामूलाङ्गुलेश्छः १४४१ । ६३ वर्गान्ताच्च १४४२ । ६४ अशब्दे यत्खावन्यतरस्याम् १४४३ । ६५ कर्णललाटात्कनलंकारे १४४४ । ६६ तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः १४४५ । ६७ बह्वचोऽन्तोदात्ताट्ठञ् १४४६ । ६८ क्रतुयज्ञेभ्यश्च १४४७ । ६९ अध्यायेष्वेवर्षेः १४४८ । ७० पौरोडाशपुरोडाशात्ष्ठन् १४४९ । ७१ छन्दसो यदणौ १४५० । ७२ द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् १४५१ । ७३ अणृगयनादिभ्यः १४५२ । ७४ तत आगतः १४५३ । ७५ ठगायस्थानेभ्यः १४५४ । ७६ शुण्डिकादिभ्योऽण् १४५५ । ७७ विद्यायोनिसंबन्धेभ्यो वुञ् १४५६ । ७८ ऋतष्ठञ् १४५७ । ७९ पितुर्यच्च १४५८ । ८० गोत्रादङ्कवत् १४५९ ॥ ४ ॥ ८१ हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः १४६१ । ८२ मयट् च १४६२ । ८३ प्रभवति १४६३ । ८४ विदूराञ्ञ्यः १४६४ । ८५ तद्गच्छति पथिदूतयोः १४६५ । ८६ अभिनिष्क्रामति द्वारम् १४६६ । ८७ अधिकृत्य कृते ग्रन्थे १४६७ । ८८ शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः १४६८ । ८९ सोऽस्य निवासः १४६९ । ९० अभिजनश्च १४७० । ९१ आयुधजीविभ्यश्छः पर्वते १४७१ । ९२ शण्डिकादिभ्यो ञ्यः १४७२ ।

९३ सिन्धुतक्षशिलादिभ्योऽणञौ १४७३ । ९४ तुदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः १४७४ ।९५ भक्तिः १४७५ । ९६ अचित्तादेशकालाट्ठञ् १४७६ । ९७ महाराजाट्ठञ् १४७७ ९८ वासुदेवार्जुनाभ्यां वुन् १४७८ । ९९ गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् १४७९ । १०० जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने १४८० ॥५॥ १०१ तेन प्रोक्तम् १४८१ । १०२ तित्तिरिवरतन्तुखण्डिकोखाच्छण् १४८२ । १०३ काश्यपकौशिकाभ्यामृषिभ्यां णिनिः १४८३ । १०४ कलापिवैशम्पायनान्तेवासिभ्यश्च १४८४ । १०५ पुराणप्रोक्तेषु ब्राह्मणकल्पेषु १४८५ । १०६ शौनकादिभ्यश्छन्दसि १४८६ । १०७ कठचरकाल्लुक् १४८७ । १०८ कलापिनोऽण् १४८८ । १०९ छगलिनो ढिनुक् १४८९ । ११० पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः १४९० । १११ कर्मन्दकृशाश्वादिनिः १४९१ । ११२ तेनैकदिक् १४९२ । ११३ तसिश्च १४९३ । ११४ उरसो यच्च १४९४ । ११५ उपज्ञाते १४९५ । ११६ कृते ग्रन्थे १४९६ । ११७ संज्ञायाम् १४९७ । ११८ कुलालादिभ्यो वुञ् १४९८ । ११९ क्षुद्राभ्रमरवटरपादपादञ् १४९९ । १२० तस्येदम् १५०० ॥६॥ १२१ रथाद्यत् १५०१ । १२२ पत्रपूर्वादञ् १५०२ । १२३ पत्राध्वर्युपरिषदश्च १५०३ । १२४ हलसीराट्ठक् १५०४ । १२५ द्वन्द्वाद्वुन्वैरमैथुनिकयोः १५०५ । १२६ गोत्रचरणाद्वुञ् १५०६ । १२७ संघाङ्कलक्षणेष्वञ्यञिञामण् १५०७ । १२८ शाकलाद्वा १५०८ । १२९ छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः १५०९ । १३० न दण्डमाणवान्तेवासिषु १५१० । १३१ रैवतिकादिभ्यश्छः १५११ । १३२ कौपिञ्जलहास्तिपदादण् १५१२(वा २९२१) । १३३ आथर्वणिकस्येकलोपश्च १५१३ । १३४ तस्य विकारः १५१४ । १३५ अवयवे च प्राण्योषधिवृक्षेभ्यः १५१५ । १३६ बिल्वादिभ्योऽण् १५१६ । १३७ कोपधाच्च १५१७ । १३८ त्रपुजतुनोः षुक् १५१८ । १३९ ओरञ् १५१९ । १४० अनुदात्तादेश्च १५२० ॥ ७ ॥ १४१ पलाशादिभ्यो वा १५२१ । १४२ शम्याः ष्लञ् १५२२ । १४३ मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः १५२३ । १४४ नित्यं वृद्धशरादिभ्यः १५२४ । १४५ गोश्च पुरीषे १५२५ । १४६ पिष्टाच्च १५२६ । १४७ संज्ञायां कन् १५२७ । १४८ व्रीहेः पुरोडाशे १५२८ । १४९ असंज्ञायां तिलयवाभ्याम् १५२९ । १५० द्व्यचश्छन्दसि ३४५३ । १५१ नोत्वद्वर्ध्रबिल्वात् ३४५४ । १५२ तालादिभ्योऽण् १५३० । १५३ जातरूपेभ्यः परिमाणे १५३१ । १५४ प्राणिरजतादिभ्योऽञ् १५३२ । १५५ ञितश्च तत्प्रत्ययात् १५३३ । १५६ क्रीतवत्परिमाणात् १५३४ । १५७ उष्ट्राद्वुञ् १५३५ । १५८ उमोर्णयोर्वा १५३६ । १५९ एण्या ढञ् १५३७ । १६० गोपयसोर्यत् १५३८ ॥ ८ ॥ १६१ द्रोश्च १५३९ । १६२ माने वयः १५४० । १६३ फले लुक् १५४१ । १६४ प्लक्षादिभ्योऽण् १५४२ । १६५ जम्ब्वा वा १५४४ । १६६ लुप् च १५४५ । १६७ हरीतक्यादिभ्यश्च १५४६ । १६८ कंसीयपरशव्ययोर्यञञौ लुक्च १५४७ ॥ युष्मद्धेमन्तात्संभूते ग्रामाद्धेतुतेन रथात्पलाशादिभ्यो द्रोश्चाष्टौ ॥

## चतुर्थः पादः ।

१ प्राग्वहतेष्ठक् १५४८ । २ तेन दीव्यति खनति जयति जितम् १५५० । ३ संस्कृतम् १५५१ । ४ कुलत्थकोपधादण् १५५२ । ५ तरति १५५३ । ६ गोपुच्छाट्ठञ् १५५४ । ७ नौद्व्यचष्ठन् १५५५ । ८ चरति १५५६ । ९ आकर्षात्ष्ठल् १५५७ । १० पर्पादिभ्यः ष्ठन् १५५८ । ११ श्वगणाट्ठञ्च १५५९ । १२ वेतनादिभ्यो जीवति १५६२ । १३ वस्नक्रयविक्रयाट्ठन् १५६३ ।

१४ आयुधाच्छ च १५६४ । १५ हरत्युत्सङ्गादिभ्यः १५६५ । १६ भस्त्रादिभ्यः ष्ठन् १५६६ । १७ विभाषा विवधवीवधात् १५६७ । १८ अण्कुटिलिकायाः १५६८ । १९ निर्वृत्तेऽक्षद्यूतादिभ्यः १५६९ । २० त्रेर्मम्नित्यम् १५७० ॥ १ ॥ २१ अपमित्ययाचिताभ्यां कक्कनौ १५७१ । २२ संसृष्टे १५७२ । २३ चूर्णादिनिः १५७३ । २४ लवणाल्लुक् १५७४ । २५ मुद्गादण् १५७५ । २६ व्यञ्जनैरुपसिक्ते १५७६ । २७ ओजःसहोऽम्भसा वर्तते १५७७ । २८ तत्प्रत्यनुपूर्वमीपलोमकूलम् १५७८ । २९ परिमुखं च १५७९ । ३० प्रयच्छति गर्ह्यम् १५८० । ३१ कुसीददशैकादशात्ष्ठन्ष्ठचौ १५८१ । ३२ उञ्छति १५८२ । ३३ रक्षति १५८३ । ३४ शब्ददर्दुरं करोति १५८४ । ३५ पक्षिमत्स्यमृगान्हन्ति १५८५ । ३६ परिपन्थं च तिष्ठति १५८६ । ३७ माथोत्तरपदपदव्यनुपदं धावति १५८७ । ३८ आक्रन्दाट्ठञ्च १५८८ । ३९ पदोत्तरपदं गृह्णाति १५८९ । ४० प्रतिकण्ठार्थललामं च १५९० ॥ २ ॥ ४१ धर्मं चरति १५९१ । ४२ प्रतिपथमेति ठंश्च १५९२ । ४३ समवायान्समवैति १५९३ । ४४ परिषदो ण्यः १५९४ । ४५ सेनाया वा १५९५ । ४६ संज्ञायां ललाटकुक्कुट्यौ पश्यति १५९६ । ४७ तस्य धर्म्यम् १५९७ । ४८ अण्महिष्यादिभ्यः १५९८ । ४९ ऋतोऽञ् १५९९ । ५० अवक्रयः १६०० । ५१ तदस्य पण्यम् १६०१ । ५२ लवणाट्ठञ् १६०२ । ५३ किसरादिभ्यः ष्ठन् १६०३ । ५४ शलालुनोऽन्यतरस्याम् १६०४ । ५५ शिल्पम् १६०५ । ५६ मड्डुकझर्झरादणन्यतरस्याम् १६०६ । ५७ प्रहरणम् १६०७ । ५८ परश्वधाट्ठञ्च १६०८ । ५९ शक्तियष्ट्योरीकक् १६०९ । ६० अस्तिनास्तिदिष्टं मतिः १६१० ॥ ३ ॥ ६१ शीलम् १६११ । ६२ छत्रादिभ्यो णः १६१२ । ६३ कर्माध्ययने वृत्तम् १६१४ । ६४ बह्वच्पूर्वपदाट्ठच् १६१५ । ६५ हितं भक्षाः १६१६ । ६६ तदस्मै दीयते नियुक्तम् १६१७ । ६७ श्राणामांसौदनाट्टिठन् १६१८ । ६८ भक्तादणन्यतरस्याम् १६१९ । ६९ तत्र नियुक्तः १६२० । ७० अगारान्ताट्ठन् १६२१ । ७१ अध्यायिन्यदेशकालात् १६२२ । ७२ कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति १६२३ । ७३ निकटे वसति १६२४ । ७४ आवसथात्ष्ठल् १६२५ । ७५ प्राग्घिताद्यत् १६२६ । ७६ तद्वहति रथयुगप्रासङ्गम् १६२७ । ७७ धुरो यड्ढकौ १६२८ । ७८ खः सर्वधुरात् १६३० । ७९ एकधुराल्लुक्च १६३१ । ८० शकटादण् १६३२ ॥ ४ ॥ ८१ हलसीराट्ठक् १६३३ । ८२ संज्ञायां जन्या १६३४ । ८३ विध्यत्यधनुषा १६३५ । ८४ धनगणं लब्धा १६३६ । ८५ अन्नाण्णः १६३७ । ८६ वशं गतः १६३८ । ८७ पदमस्मिन्दृश्यम् १६३९ । ८८ मूलमस्याबर्हि १६४० । ८९ संज्ञायां धेनुष्या १६४१ । ९० गृहपतिना संयुक्ते ञ्यः १६४२ । ९१ नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु १६४३ । ९२ धर्मपथ्यर्थन्यायादनपेते १६४४ । ९३ छन्दसो निर्मिते १६४५ । ९४ उरसोऽण्च १६४६ । ९५ हृदयस्य प्रियः १६४७ । ९६ बन्धने चर्षौ १६४८ । ९७ मतजनहलात्करणजल्पकर्षेषु १६४९ । ९८ तत्र साधुः १६५० । ९९ प्रतिजनादिभ्यः खञ् १६५१ । १०० भक्ताण्णः १६५२ ॥ ५ ॥ १०१ परिषदो ण्यः १६५३ । १०२ कथादिभ्यष्ठक् १६५४ । १०३ गुडादिभ्यष्ठञ् १६५५ । १०४ पथ्यतिथिवसतिस्वपतेर्ढञ् १६५६ । १०५ सभाया यः १६५७ । १०६ ढश्छन्दसि ३४५५ । १०७ समानतीर्थे वासी १६५८ । १०८ समानोदरे शयित ओ चोदात्तः १६५९ । १०९ सोदराद्यः १६६० । ११० भवे छन्दसि ३४५६ । १११ पाथोनदीभ्यां ड्यण् ३४५७ । ११२ वेशन्तहिमवद्भ्यामण् ३४५८ । ११३ स्रोतसो विभाषा

ड्यड्ढ्यौ २४५९ । ११४ सगर्भसयूथसनुताद्यन् २४६० । ११५ तुग्राद्घन् २४६१ । ११६ अग्राद्यत् २४६२ । ११७ घच्छौ च २४६३ । ११८ समुद्राभ्राद्घः २४६४ । ११९ बर्हिषि दत्तम् २४६५ । १२० दूतस्य भागकर्मणी २४६६ ॥ ६ ॥ १२१ रक्षोयातूनां हननी २४६७ । १२२ रेवतीजगतीहविष्याभ्यः प्रशस्ये २४६८ । १२३ असुरस्य स्वम् २४६९ । १२४ मायायामण् २४७० । १२५ तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक्च मतोः २४७१ । १२६ अश्विमानण् २४७२ । १२७ वयस्यासु मूर्ध्नो मतुप् २४७३ । १२८ मत्वर्थे मासतन्वोः २४७४ । १२९ मधोर्ञ च २४७५ । १३० ओजसोऽहनि यत्खौ २४७६ । १३१ वेशोयशआदेर्भगाद्यल् २४७७ । १३२ ख च २४७८ । १३३ पूर्वैः कृतमिनियौ च २४७९ । १३४ अद्भिः संस्कृतम् २४८० । १३५ सहस्रेण संमितौ घः २४८१ । १३६ मतौ च २४८२ । १३७ सोममर्हति यः २४८३ । १३८ मये च २४८४ । १३९ मधोः २४८५ । १४० वसोः समूहे च २४८६ ॥ ७ ॥ १४१ नक्षत्राद्घः २४८७ । १४२ सर्वदेवात्तातिल् २४८८ । १४३ शिवशमरिष्टस्य करे २४८९ । १४४ भावे च २४९० ॥ प्राग्वहतेरपमित्यधर्मे शीलं हलपरिषदो रक्षोनक्षत्राच्चत्वारि ॥

इति चतुर्थोऽध्यायः ।

---

# पञ्चमोऽध्यायः ।

## प्रथमः पादः ।

१ प्राक् क्रीताच्छः १६६१ । २ उगवादिभ्यो यत् १६६२ । ३ कम्बलाच्च संज्ञायाम् १६६३ । ४ विभाषा हविरपूपादिभ्यः १६६४ । ५ तस्मै हितम् १६६५ । ६ शरीरावयवाद्यत् १६६६ । ७ खलयवमाषतिलवृषब्रह्मणश्च १६६८ । ८ अजाविभ्यां थ्यन् १६६९ । ९ आत्मन्विश्वजनभोगोत्तरपदात्खः १६७० । १० सर्वपुरुषाभ्यां णढञौ १६७२ । ११ माणवचरकाभ्यां खञ् १६७३ । १२ तदर्थं विकृतेः प्रकृतौ १६७४ । १३ छदिरुपधिबलेर्ढञ् १६७५ । १४ ऋषभोपानहोर्ञ्यः १६७६ । १५ चर्मणोऽञ् १६७७ । १६ तदस्य तास्मिन्स्यादिति १६७८ । १७ परिखाया ढञ् १६७९ । १८ प्राग्वतेष्ठञ् १६८० । १९ आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् १६८१ । २० असमासे निष्कादिभ्यः १६८२ ॥ १ ॥ २१ शताच्च ठन्यतावशते १६८६ ॥ २२ संख्याया अतिशदन्तायाः कन् १६८७ । २३ वतोरिड्वा १६८८ । २४ विंशतित्रिंशद्भ्यां ड्वुन्नसंज्ञायाम् १६८९ । २५ कंसाट्टिठन् १६९० । २६ शूर्पादञन्यतरस्याम् १६९१ । २७ शतमानविंशतिकसहस्रवसनादण् १६९२ । २८ अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् १६९३ । २९ विभाषा कार्षापणसहस्राभ्याम् १६९४ । ३० द्वित्रिपूर्वान्निष्कात् १६९५ । ३१ बिस्ताच्च १६९६ । ३२ विंशतिकात्खः १६९७ । ३३ खार्या ईकन् १६९८ । ३४ पणपादमाषशताद्यत् १६९९ । ३५ शाणाद्वा १७०० । ३६ द्वित्रिपूर्वादण्च १७०१ । ३७ तेन क्रीतम् १७०२ । ३८ तस्य निमित्तं संयोगोत्पातौ १७०४ । ३९ गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् १७०५ । ४० पुत्राच्छ च १७०६ ॥ २ ॥ ४१ सर्वभूमिपृथिवीभ्यामणञौ १७०७ । ४२ तस्येश्वरः १७०८ । ४३ तत्र विदित इति च १७०९ । ४४ लोकसर्वलोकाट्ठञ् १७१० । ४५ तस्य वापः १७११ । ४६ पात्रात्ष्ठन् १७१२ । ४७ तदस्मिन्वृद्ध्या-

यत्लाभशुल्कोपदा दीयते १७१३ । ४८ पूरणार्धाट्ठन् १७१४ । ४९ भागाद्यच्च १७१५ । ५० तद्धरति वहत्यावहति भाराद्वंशादिभ्यः १७१६ । ५१ वस्नद्रव्याभ्यां ठन्कनौ १७१७ । ५२ संभवत्यवहरति पचति १७१८ । ५३ आढकाचितपात्रात्खोऽन्यतरस्याम् १७१९ । ५४ द्विगोः ष्ठंश्च १७२० । ५५ कुलिजाल्लुक्खौ च १७२१ । ५६ सोऽस्यांशवस्नभृतयः १७२२ । ५७ तदस्य परिमाणम् १७२३ । ५८ संख्यायाः संज्ञासंघसूत्राध्ययनेषु १७२४ । ५९ पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् १७२५ । ६० पञ्चद्दशतौ वर्गे वा १७२६ ॥३॥ ६१ सप्तनोऽञ्छन्दसि ३४९१ । ६२ त्रिंशच्चत्वारिंशतो ब्राह्मणे संज्ञायां डण् १७२७ । ६३ तदर्हति १७२८ । ६४ छेदादिभ्यो नित्यम् १७२९ । ६५ शीर्षच्छेदाद्यच्च १७३० । ६६ दण्डादिभ्यो यः १७३१ । ६७ छन्दसि च ३४९२ । ६८ पात्राद्घंश्च १७३२ । ६९ कडंकरदक्षिणाच्छ च १७३३ । ७० स्थालीबिलात् १७३४ । ७१ यज्ञर्त्विग्भ्यां घखञौ १७३५ । ७२ पारायणतुरायणचान्द्रायणं वर्तयति १७३६ । ७३ संशयमापन्नः १७३७ । ७४ योजनं गच्छति १७३८ । ७५ पथः ष्कन् १७३९ । ७६ पन्थो ण नित्यम् १७४० । ७७ उत्तरपथेनाहृतं च १७४१ । ७८ कालात् १७४२ । ७९ तेन निर्वृत्तम् १७४३ । ८० तमधीष्टो भृतो भूतो भावी १७४४ ॥ ४ ॥ ८१ मासाद्वयसि यत्खञौ १७४५ । ८२ द्विगोर्यप् १७४६ । ८३ षण्मासाण्ण्यच्च १७४७ । ८४ अवयसि ठंश्च १७४८ । ८५ समायाः खः १७४९ । ८६ द्विगोर्वा १७५० । ८७ रात्र्यहःसंवत्सराच्च १७५१ । ८८ वर्षाल्लुक्च १७५२ । ८९ चित्तवति नित्यम् १७५५ । ९० षाष्टिकाः षष्टिरात्रेण पच्यन्ते १७५६ । ९१ वत्सरान्ताच्छश्छन्दसि ३४९३ । ९२ संपरिपूर्वात्ख च ३४९४ । ९३ तेन परिजय्यलभ्यकार्यसुकरम् १७५७ । ९४ तदस्य ब्रह्मचर्यम् १७५८ । ९५ तस्य च दक्षिणा यज्ञाख्येभ्यः १७५९ । ९६ तत्र च दीयते कार्यं भववत् १७६० । ९७ व्युष्टादिभ्योऽण् १७६१ । ९८ तेन यथाकथाचहस्ताभ्यां णयतौ १७६२ । ९९ संपादिनि १७६३ । १०० कर्मवेषाद्यत् १७६४ ॥५॥ १०१ तस्मै प्रभवति संतापादिभ्यः १७६५ । १०२ योगाद्यच्च १७६६ । १०३ कर्मण उकञ् १७६७ । १०४ समयस्तदस्य प्राप्तम् १७६८ । १०५ ऋतोरण् १७६९ । १०६ छन्दसि घस् ३४९५ । १०७ कालाद्यत् १७७० । १०८ प्रकृष्टे ठञ् १७७१ । १०९ प्रयोजनम् १७७२ । ११० विशाखाषाढादण्मन्थदण्डयोः १७७३ । १११ अनुप्रवचनादिभ्यश्छः १७७४ । ११२ समापनात्सपूर्वपदात् १७७५ । ११३ ऐकागारिकट् चौरे १७७६ । ११४ आकालिकडाद्यन्तवचने १७७७ । ११५ तेन तुल्यं क्रिया चेद्वतिः १७७८ । ११६ तत्र तस्येव १७७९ । ११७ तदर्हम् १७८० । ११८ उपसर्गाच्छन्दसि धात्वर्थे ३४९६ । ११९ तस्य भावस्त्वतलौ १७८१ । १२० आ च

त्वात् १७८२ ॥ ६ ॥ १२१ न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटयुधकतरसलसेभ्यः १७८३ । १२२ पृथ्वादिभ्य इमनिज्वा १७८४ । १२३ वर्णदृढादिभ्यः ष्यञ्च १७८७ । १२४ गुणवचनब्राह्मणादिभ्यः कर्मणि च १७८८ । १२५ स्तेनाद्यन्नलोपश्च १७९० । १२६ सख्युर्यः १७९१ । १२७ कपिज्ञात्योर्ढक् १७९२ । १२८ पत्यन्तपुरोहितादिभ्यो यक् १७९३ । १२९ प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् १७९४ । १३० हायनान्तयुवादिभ्योऽण् १७९५ । १३१ इगन्ताच्च लघुपूर्वात् १७९६ । १३२ योपधाद्गुरूपोत्तमाद्वुञ् १७९७ । १३३ द्वन्द्वमनोज्ञादिभ्यश्च १७९८ । १३४ गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु

१७९९ । १३५ होत्राभ्यश्छः १८०० । १३६ ब्रह्मणस्त्वः १८०१ ॥ प्राक् क्रीताच्छताच संवभूमिसततनोऽन्मासात्तस्मै प्रभवति न नञ्पूर्वात्षोडश ॥

## द्वितीयः पादः ।

१ धान्यानां भवने क्षेत्रे खञ् १८०२ । २ व्रीहिशाल्योर्ढक् १८०३ । ३ यवयवकषष्टिकाद्यत् १८०४ । ४ विभाषा तिलमाषोमाभङ्गाणुभ्यः १८०५ । ५ सर्वचर्मणः कृतः खखञौ १८०६ । ६ यथामुखसंमुखस्य दर्शनः खः १८०७ । ७ तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति १८०८ । ८ आप्रपदं प्राप्नोति १८०९ । ९ अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु १८१० । १० परोवरपरंपरपुत्रपौत्रमनुभवति १८११ । ११ अवारपारात्यन्तानुकामं गामी १८१२ । १२ समांसमां विजायते १८१३ । १३ अद्यश्वीनावष्टब्धे १८१४ । १४ आगवीनः १८१५ । १५ अनुग्वलंगामी १८१६ । १६ अध्वनो यत्खौ १८१७ । १७ अभ्यमित्राच्छ च १८१८ । १८ गोष्ठात्खञ्भूतपूर्वे १८१९ । १९ अश्वस्यैकाहगमः १८२० । २० शालीनकौपीने अधृष्टाकार्ययोः १८२१ ॥ १ ॥ २१ व्रातेन जीवति १८२२ । २२ सातपदीनं सख्यम् १८२३ । २३ हैयङ्गवीनं संज्ञायाम् १८२४ । २४ तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ १८२५ । २५ पक्षात्तिः १८२६ । २६ तेन वित्तश्चुञ्चुप्चणपौ १८२७ । २७ विनञ्भ्यां नानाञौ न सह १८२८ । २८ वेः शालच्छङ्कटचौ १८२९ । २९ संप्रोदश्च कटच् १८३० । ३० अवात्कुटारच १८३१ । ३१ नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः १८३२ । ३२ नेर्बिडज्बिरीसचौ १८३३ । ३३ इनच्पिटच्चिकचि च १८३४ । ३४ उपाधिभ्यां त्यकन्नासन्नारूढयोः १८३५ । ३५ कर्मणि घटोऽठच् १८३६ । ३६ तदस्य संजातं तारकादिभ्य इतच् १८३७ । ३७ प्रमाणे द्वयसज्दघ्नञ्मात्रचः १८३८ । ३८ पुरुषहस्तिभ्यामण्च १८३९ । ३९ यत्तदेतेभ्यः परिमाणे वतुप् १८४० । ४० किमिदंभ्यां वो घः १८४१ ॥ २ ॥ ४१ किमः संख्यापरिमाणे डति च १८४२ । ४२ संख्याया अवयवे तयप् १८४३ । ४३ द्वित्रिभ्यां तयस्यायज्वा १८४४ । ४४ उभादुदात्तो नित्यम् १८४५ । ४५ तदस्मिन्नधिकमिति दशान्ताड्डः १८४६ । ४६ शदन्तविंशतेश्च १८४७ । ४७ संख्याया गुणस्य निमाने मयट् १८४८ । ४८ तस्य पूरणे डट् १८४९ । ४९ नान्तादसंख्यादेर्मट् १८५० । ५० थट् च च्छन्दसि ३४९७ । ५१ षट्कतिकतिपयचतुरां थुक् १८५१ । ५२ बहुपूगगणसंघस्य तिथुक् १८५२ । ५३ वतोरिथुक् १८५३ । ५४ द्वेस्तीयः १८५४ । ५५ त्रेः संप्रसारणं च १८५५ । ५६ विंशत्यादिभ्यस्तमडन्यतरस्याम् १८५६ । ५७ नित्यं शतादिमासार्धमाससंवत्सराच्च १८५७ । ५८ षष्ट्यादेश्चासंख्यादेः १८५८ । ५९ मतौ छः सूक्तसाम्नोः १८५९ । ६० अध्यायानुवाकयोर्लुक् १८६० ॥ ३ ॥ ६१ विमुक्तादिभ्योऽण् १८६१ । ६२ गोषदादिभ्यो वुन् १८६२ । ६३ तत्र कुशलः पथः १८६३ । ६४ आकर्षादिभ्यः कन् १८६४ । ६५ धनहिरण्यात्कामे १८६५ । ६६ स्वाङ्गेभ्यः प्रसिते १८६६ । ६७ उदराट्ठगाद्यूने १८६७ । ६८ सस्येन परिजातः १८६८ । ६९ अंशं हारी १८६९ । ७० तन्त्रादचिरापहृते १८७० । ७१ ब्राह्मणकोष्णिके संज्ञायाम् १८७१ । ७२ शीतोष्णाभ्यां कारिणि १८७२ । ७३ अधिकम् १८७३ । ७४ अनुकाभिकाभीकः कमिता १८७४ । ७५ पार्श्वेनान्विच्छति १८७५ । ७६ अयःशूलदण्डाजि-

नाभ्यां ठञ्खञौ १८७६ । ७७ तावतिथं ग्रहणमिति लुग्वा १८७७ । ७८ स एषां ग्रामणीः १८७८ । ७९ शृङ्खलमस्य बन्धनं करभे १८७९ । ८० उत्क उन्मनाः १८८० ॥ ४ ॥ ८१ कालप्रयोजनाद्रोगे १८८१ । ८२ तदस्मिन्नन्नं प्रायेण संज्ञायाम् १८८२ । ८३ कुल्माषादञ् १८८३ । ८४ श्रोत्रियश्छन्दोऽधीते १८८४ । ८५ श्राद्धमनेन भुक्तमिनिठनौ १८८५ । ८६ पूर्वादिनिः १८८६ । ८७ सपूर्वाच्च १८८७ । ८८ इष्टादिभ्यश्च १८८८ । ८९ छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि १८८९ । ९० अनुपद्यन्वेष्टा १८९० । ९१ साक्षाद्द्रष्टरि संज्ञायाम् १८९१ । ९२ क्षेत्रियच्परक्षेत्रे चिकित्स्यः १८९२ । ९३ इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा १८९३ । ९४ तदस्यास्त्यस्मिन्निति मतुप् १८९४ । ९५ रसादिभ्यश्च १८९५ । ९६ प्राणिस्थादातो लजन्यतरस्याम् १९०३ । ९७ सिध्मादिभ्यश्च १९०४ । ९८ वत्सांसाभ्यां कामबले १९०५ । ९९ फेनादिलच्च १९०६ । १०० लोमादिपामादिपिच्छादिभ्यः शनेलचः १९०७ ॥ ५ ॥ १०१ प्रज्ञाश्रद्धार्चाभ्यो णः १९०८ । १०२ तपःसहस्राभ्यां विनीनी १९०९ । १०३ अण्च १९१० । १०४ सिकताशर्कराभ्यां च १९११ । १०५ देशे लुबिलचौ च १९१२ । १०६ दन्त उन्नत उरच् १९१३ । १०७ ऊषसुषिमुष्कमधो रः १९१४ । १०८ द्युद्रुभ्यां मः १९१५ । १०९ केशाद्वोऽन्यतरस्याम् १९१६ । ११० गाण्ड्यजगात्संज्ञायाम् १९१७ । १११ काण्डाण्डादीरन्नीरचौ १९१८ । ११२ रजःकृष्यासुतिपरिषदो वलच् १९१९ । ११३ दन्तशिखात्संज्ञायाम् १९२० । ११४ ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः १९२१ । ११५ अत इनिठनौ १९२२ । ११६ व्रीह्यादिभ्यश्च १९२३ । ११७ तुन्दादिभ्य इलच्च १९२४ । ११८ एकगोपूर्वाट्ठञ्नित्यम् १९२५ । ११९ शतसहस्रान्ताच्च निष्कात् १९२६ । १२० रूपादाहतप्रशंसयोर्यप् १९२७ ॥ ६ ॥ १२१ अस्मायामेधास्रजो विनिः १९२८ । १२२ बहुलं छन्दसि ३४९८ । १२३ ऊर्णाया युस् १९२९ । १२४ वाचो ग्मिनिः १९३० । १२५ आलजाटचौ बहुभाषिणि १९३१ । १२६ स्वामिन्नैश्वर्ये १९३२ । १२७ अर्शआदिभ्योऽच् १९३३ । १२८ द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः १९३४ । १२९ वातातीसाराभ्यां कुक्च १९३५ । १३० वयसि पूरणात् १९३६ । १३१ सुखादिभ्यश्च १९३७ । १३२ धर्मशीलवर्णान्ताच्च १९३८ । १३३ हस्ताज्जातौ १९३९ । १३४ वर्णाद्ब्रह्मचारिणि १९४० । १३५ पुष्करादिभ्यो देशे १९४१ । १३६ बलादिभ्यो मतुबन्यतरस्याम् १९४२ । १३७ संज्ञायां मन्माभ्याम् १९४३ । १३८ कंशंभ्यां बभयुस्तितुतयसः १९४४ । १३९ तुन्दिबलिवटेर्भः १९४५ । १४० अहंशुभमोर्युस् १९४६ ॥ ७ ॥ धान्यानां व्रातेन किमो विमुक्तादिभ्यो कालप्रयोजनात्प्रज्ञाश्रद्धास्मायामेधाविंशतिः ॥

## तृतीयः पादः ।

१ प्राग्दिशो विभक्तिः १९४७ । २ किंसर्वनामबहुभ्योऽद्व्यादिभ्यः १९४८ । ३ इदम इश् १९४९ । ४ एतेतौ रथोः १९५० । ५ एतदोऽन् १९५१ । ६ सर्वस्य सोऽन्यतरस्यां दि १९५२ । ७ पञ्चम्यास्तसिल् १९५३ । ८ तसेश्च १९५५ । ९ पर्यभिभ्यां च १९५६ । १० सप्तम्यास्त्रल् १९५७ । ११ इदमो हः १९५८ । १२ किमोऽत् १९५९ । १३ वा ह च च्छन्दसि १९६१ । १४ इतराभ्योऽपि दृश्यन्ते १९६२ । १५ सर्वैकान्यकियत्तदः काले दा १९६४ । १६ इदमो र्हिल् १९६५ । १७ अधुना १९६६ । १८ दानीं च १९६७ । १९

तदो दा च १९६८ । २० तयोर्दार्हिलौ च च्छन्दसि ३४९९ ॥ १ ॥ २१ अनद्यतने र्हिलन्य-
तरस्याम् १९६९ । २२ सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्यु-
रधरेद्युरुभयेद्युरुत्तरेद्युः १९७० । २३ प्रकारवचने थाल् १९७१ । २४ इदमस्थमुः १९७२ ।
२५ किमश्च १९७३ । २६ था हेतौ च च्छन्दसि ३५०० । २७ दिक्छब्देभ्यः सप्तमी-
पञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः १९७४ । २८ दक्षिणोत्तराभ्यामतसुच् १९७८ ।
२९ विभाषा परावराभ्याम् १९७९ । ३० अञ्चेर्लुक् १९८० । ३१ उपर्युपरिष्टात् १९८१ ।
३२ पश्चात् १९८२ । ३३ पश्च पश्चा च च्छन्दसि ३५०१ । ३४ उत्तराधरदक्षिणा-
दातिः १९८३ । ३५ एनबन्यतरस्यामदूरेऽपञ्चम्याः १९८४ । ३६ दक्षिणादाच् १९८५ ।
३७ आहि च दूरे १९८६ । ३८ उत्तराच्च १९८७ । ३९ पूर्वाधरावराणामसि पुरधवश्चै-
षाम् १९७५ । ४० अस्ताति च १९७६ ॥ २ ॥ ४१ विभाषावरस्य १९७७ । ४२ संख्याया
विधार्थे धा १९८८ । ४३ अधिकरणविचाले च १९८९ । ४४ एकाद्धो ध्यमुञन्यतरस्याम्
१९९० । ४५ द्वित्र्योश्च धमुञ् १९९१ । ४६ एधाच्च १९९२ । ४७ याप्ये पाशप् १९९३ ।
४८ पूरणाद्भागे तीयादन् १९९४ । ४९ प्रागेकादशभ्योऽच्छन्दसि १९९५ । ५० षष्ठाष्टमाभ्यां
ञ च १९९६ । ५१ मानपश्वङ्गयोः कन्लुकौ च १९९७ । ५२ एकादाकिनिच्चासहाये
१९९८ । ५३ भूतपूर्वे चरट् १९९९ । ५४ षष्ठ्या रूप्य च २००० । ५५ अतिशायने तम-
बिष्ठनौ २००१ । ५६ तिङश्च २००२ । ५७ द्विवचनविभज्योपपदे तरबीयसुनौ २००५ । ५८
अजादी गुणवचनादेव २००६ । ५९ तुश्छन्दसि २००७ । ६० प्रशस्यस्य श्रः २००९ ॥३॥
६१ ज्य च २०११ । ६२ वृद्धस्य च २०१३ । ६३ अन्तिकबाढयोर्नेदसाधौ २०१४ । ६४
युवाल्पयोः कनन्यतरस्याम् २०१९ । ६५ विन्मतोर्लुक् २०२० । ६६ प्रशंसायां रूपप् २०२१ ।
६७ ईषदसमाप्तौ कल्पब्देश्यदेशीयरः २०२२ । ६८ विभाषा सुपो बहुच्पुरस्तात्तु २०२३ ।
६९ प्रकारवचने जातीयर् २०२४ । ७० प्रागिवात्कः २०२५ । ७१ अव्ययसर्वनाम्नामक-
च्प्राक्टेः २०२६ । ७२ कस्य च दः २०२७ । ७३ अज्ञाते २०२८ । ७४ कुत्सिते २०२९ ।
७५ संज्ञायां कन् २०३० । ७६ अनुकम्पायाम् २०३१ । ७७ नीतौ च तद्युक्तात् २०३२ ।
७८ बह्वचो मनुष्यनाम्नष्ठज्वा २०३३ । ७९ घनिलचौ च २०३४ । ८० प्राचामुपादेरड-
ज्वुचौ च २०३६ ॥४॥ ८१ जातिनाम्नः कन् २०३७ । ८२ अजिनान्तस्योत्तरपदलोपश्च २०३९ ।
८३ ठाजादावूर्ध्वं द्वितीयादचः २०३५ । ८४ शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात्
२०३८ । ८५ अल्पे २०४० । ८६ ह्रस्वे २०४१ । ८७ संज्ञायां कन् २०४२ । ८८ कुटीश-
मीशुण्डाभ्यो रः २०४३ । ८९ कुत्वा डुपच् २०४४ । ९० कासूगोणीभ्यां ष्टरच् २०४५ ।
९१ वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे २०४६ । ९२ किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच् २०४७ ।
९३ वा बहूनां जातिपरिप्रश्ने डतमच् २०४८ । ९४ एकाच्च प्राचाम् २०४९ । ९५
अवक्षेपणे कन् २०५० । ९६ इवे प्रतिकृतौ २०५१ । ९७ संज्ञायां च २०५२ । ९८ लुम्म-
नुष्ये २०५३ । ९९ जीविकार्थे चापण्ये २०५४ । १०० देवपथादिभ्यश्च २०५५ ॥ ५ ॥
१०१ वस्तेर्ढञ् २०५६ । १०२ शिलाया ढः २०५७ । १०३ शाखादिभ्यो यः २०५८ । १०४
द्रव्यं च भव्ये २०५९ । १०५ कुशाग्राच्छः २०६० । १०६ समासाच्च तद्विषयात् २०६१ ।
१०७ शर्करादिभ्योऽण् २०६२ । १०८ अङ्गुल्यादिभ्यष्ठक् २०६३ । १०९ एकशालायाष्ठजन्यत-

रस्याम् २०६४। ११० कर्कलोहितादीकक् २०६५। १११ प्रत्नपूर्वविश्वेमात्थाल्छन्दसि ३५०२। ११२ पूगाञ्ञ्योऽग्रामणीपूर्वात् २०६६। ११३ व्रातच्फञोरस्त्रियाम् ११००। ११४ आयुधजीविसंघाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात् २०६७। ११५ वृकाट्टेण्यण् २०६८। ११६ दामन्यादित्रिगर्तषष्ठाच्छः २०६९। ११७ पर्श्वादियौधेयादिभ्योऽणञौ २०७०। ११८ अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् २०७१। ११९ ञ्यादयस्तद्राजाः २०७२। प्राग्दिशोऽनद्यतने विभाषाञ्य च जातिनाम्नो वस्तेरेकोनविंशतिः॥

## चतुर्थः पादः।

१ पादशतस्य संख्यादेर्वीप्सायां वुन्लोपश्च २०७३। २ दण्डव्यवसर्गयोश्च २०७४। ३ स्थूलादिभ्यः प्रकारवचने कन् २०७५। ४ अनत्यन्तगतौ क्तात् २०७६। ५ न सामिवचने २०७७। ६ बृहत्या आच्छादने २०७८। ७ अषडक्षाशितंग्वलंकर्मालंपुरुषाध्युत्तरपदात्खः २०७९। ८ विभाषाञ्चेरदिक्स्त्रियाम् २०८०। ९ जात्यन्ताच्छ बन्धुनि २०८१। १० स्थानान्ताद्विभाषा सस्थानेनेति चेत् २०८२। ११ किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे २००४। १२ अमु च च्छन्दसि ३५०३। १३ अनुगादिनष्ठक् २०८३। १४ णचः स्त्रियामञ् ३२१६। १५ अणिनुणः ३२१९। १६ विसारिणो मत्स्ये २०८४। १७ संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् २०८५। १८ द्वित्रिचतुर्भ्यः सुच् २०८६। १९ एकस्य सकृच्च २०८७। २० विभाषा बहोर्धाविप्रकृष्टकाले २०८८॥ १॥ २१ तत्प्रकृतवचने मयट् २०८९। २२ समूहवच्च बहुषु २०९०। २३ अनन्तावसथेतिहभेषजाञ्ञ्यः २०९१। २४ देवतान्तात्तादर्थ्ये यत् २०९२। २५ पादार्घाभ्यां च २०९३। २६ अतिथेर्ञ्यः २०९४। २७ देवात्तल् २०९५। २८ अवेः कः २०९६। २९ यावादिभ्यः कन् २०९७। ३० लोहितान्मणौ २०९८। ३१ वर्णे चानित्ये २०९९। ३२ रक्ते २१००। ३३ कालाच्च २१०१। ३४ विनयादिभ्यष्ठक् २१०२। ३५ वाचो व्याहृतार्थायाम् २१०३। ३६ तद्युक्तात्कर्मणोऽण् २१०४। ३७ ओषधेरजातौ २१०५। ३८ प्रज्ञादिभ्यश्च २१०६। ३९ मृदस्तिकन् २१०७। ४० सस्नौ प्रशंसायाम् २१०८॥ २॥ ४१ वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि ३५०४। ४२ बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् २१०९। ४३ संख्यैकवचनाच्च वीप्सायाम् २११०। ४४ प्रतियोगे पञ्चम्यास्तसिः २१११। ४५ अपादाने चाहीयरुहोः २११२। ४६ अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः २११३। ४७ हीयमानपापयोगाच्च २११४। ४८ षष्ठ्या व्याश्रये २११५। ४९ रोगाच्चापनयने २११६। ५० अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरि च्विः २११७। ५१ अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च २१२१। ५२ विभाषा साति कार्त्स्न्ये २१२२। ५३ अभिविधौ संपदा च २१२४। ५४ तदधीनवचने २१२५। ५५ देये त्रा च २१२६। ५६ देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् २१२७। ५७ अव्यक्तानुकरणाद्व्यजवरार्धादनितौ डाच् २१२८। ५८ कृञो द्वितीयतृतीयशम्बबीजात्कृषौ २१२९। ५९ संख्यायाश्च गुणान्तायाः २१३०। ६० समयाच्च यापनायाम् २१३१॥ ३॥ ६१ सपत्रनिष्पत्रादतिव्यथने २१३२। ६२ निष्कुलान्निष्कोषणे २१३३। ६३ सुखप्रियादानुलोम्ये २१३४। ६४ दुःखात्प्रातिलोम्ये २१३५। ६५ शूलात्पाके २१३६। ६६ सत्यादशपथे २१३७। ६७ मद्रात्परिवापणे २१३८। ६८ समासान्ताः ६७६। ६९ न पूजनात् ९५४। ७० किमः क्षेपे ९५५। ७१ नञस्तत्पुरुषात् ९५६। ७२

पथो विभाषा ९५७ । ७३ बहुव्रीहौ संख्येये डजबहुगणात् ८५१ । ७४ ऋक्पूरब्धूःपथामानक्षे ९४० । ७५ अच्प्रत्यन्ववपूर्वात्सामलोम्नः ९४३ । ७६ अक्ष्णोऽदर्शनात् ९४४ । ७७ अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ९४५ । ७८ ब्रह्महस्तिभ्यां वर्चसः ९४६ । ७९ अवसमन्धेभ्यस्तमसः ९४७ । ८० श्वसो वसीयःश्रेयसः ९४८ ॥ ४ ॥ ८१ अन्ववतप्ताद्रहसः ९४९ । ८२ प्रतेरुरसः सप्तमीस्थात् ९५० । ८३ अनुगवमायामे ९५१ । ८४ द्विस्तावा त्रिस्तावा वेदिः ९५२ । ८५ उपसर्गादध्वनः ९५३ । ८६ तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ७८६ । ८७ अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ७८७ । ८८ अह्नोऽह्न एतेभ्यः ७९० । ८९ न संख्यादेः समाहारे ७९३ । ९० उत्तमैकाभ्यां च ७९४ । ९१ राजाहःसखिभ्यष्टच् ७८८ । ९२ गोरतद्धितलुकि ७२९ । ९३ अग्राख्यायामुरसः ७९५ । ९४ अनोश्मायःसरसां जातिसंज्ञयोः ७९६ । ९५ ग्रामकौटाभ्यां च तक्ष्णः ७९७ । ९६ अतेः शुनः ७९८ । ९७ उपमानादप्राणिषु ७९९ । ९८ उत्तरमृगपूर्वाच्च सक्थ्नः ८०० । ९९ नावो द्विगोः ८०१ । १०० अर्धाच्च ८०२ ॥ ५ ॥ १०१ खार्याः प्राचाम् ८०३ । १०२ द्वित्रिभ्यामञ्जलेः ८०४ । १०३ अनसन्तान्नपुंसकाच्छन्दसि ३५०५ । १०४ ब्रह्मणो जानपदाख्यायाम् ८०५ । १०५ कुमहद्भ्यामन्यतरस्याम् ८०६ । १०६ द्वन्द्वाच्चुदषहान्तात्समाहारे ९३० । १०७ अव्ययीभावे शरत्प्रभृतिभ्यः ६७७ । १०८ अनश्च ६७८ । १०९ नपुंसकादन्यतरस्याम् ६८० । ११० नदीपौर्णमास्याग्रहायणीभ्यः ६८१ । १११ झयः ६८२ । ११२ गिरेश्च सेनकस्य ६८३ । ११३ बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ८५२। ११४ अङ्गुलेर्दारुणि ८५३ । ११५ द्वित्रिभ्यां ष मूर्ध्नः ८५४ । ११६ अप्पूरणीप्रमाण्योः ८३२ । ११७ अन्तर्बहिर्भ्यां च लोम्नः ८५५ । ११८ अञ्नासिकायाः संज्ञायां नसं चास्थूलात् ८५६ । ११९ उपसर्गाच्च ८५८ । १२० सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदाः ८६० ॥ ६ ॥ १२१ नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् ८६१ । १२२ नित्यमसिच्प्रजामेधयोः ८६२ । १२३ बहुप्रजाश्छन्दसि ३५०६ । १२४ धर्मादनिच्केवलात् ८६३ । १२५ जम्भा सुहरिततृणसोमेभ्यः ८६४ । १२६ दक्षिणेर्मा लुब्धयोगे ८६५ । १२७ इच्कर्मव्यतिहारे ८६६ । १२८ द्विदण्ड्यादिभ्यश्च ८६७ । १२९ प्रसंभ्यां जानुनोर्ज्ञुः ८६८ । १३० ऊर्ध्वाद्विभाषा ८६९ । १३१ ऊधसोऽनङ् ४८३ । १३२ धनुषश्च ८७० । १३३ वा संज्ञायाम् ८७१ । १३४ जायाया निङ् ८७२ । १३५ गन्धस्येदुत्पूतिसुसुरभिभ्यः ८७४ । १३६ अल्पाख्यायाम् ८७५ । १३७ उपमानाच्च ८७६ । १३८ पादस्य लोपोऽहस्त्यादिभ्यः ८७७ । १३९ कुम्भपदीषु च ८७८ । १४० संख्यासुपूर्वस्य ८७९ ॥ ७ ॥ १४१ वयसि दन्तस्य दतृ ८८० । १४२ छन्दसि च ३५०७ । १४३ स्त्रियां संज्ञायाम् ८८१ । १४४ विभाषा श्यावारोकाभ्याम् ८८२ । १४५ अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ८८३ । १४६ ककुदस्यावस्थायां लोपः ८८४ । १४७ त्रिककुत्पर्वते ८८५ । १४८ उद्विभ्यां काकुदस्य ८८६ । १४९ पूर्णाद्विभाषा ८८७ । १५० सुहृद्दुर्हृदौ मित्रामित्रयोः ८८८ । १५१ उरःप्रभृतिभ्यः कप् ८८९ । १५२ इनः स्त्रियाम् ८९० । १५३ नद्यृतश्च ८३३ । १५४ शेषाद्विभाषा ८९१ । १५५ न संज्ञायाम् ८९३ । १५६ ईयसश्च ८९४ । १५७ वन्दिते भ्रातुः ८९५ । १५८ ऋतश्छन्दसि

३५०८ । १५९ नाडीतन्त्र्योः स्वाङ्गे ८९६ । १६० निष्प्रवाणिश्च ८९७ ॥ ४ ॥ पादशतस्य तत्प्रकृतवृकज्येष्ठाभ्यां सपत्राम्ब्वतशास्त्रार्थो नन्दुःसुभ्यो वयसि विंशतिः ॥

इति पञ्चमोऽध्यायः ।

---

## षष्ठोऽध्यायः ।

### प्रथमः पादः ।

१ एकाचो द्वे प्रथमस्य २१७५ । २ अजादेर्द्वितीयस्य २१७६ । ३ न न्द्राः संयोगादयः २४४६ । ४ पूर्वोऽभ्यासः २१७८ । ५ उभे अभ्यस्तम् ४२६ । ६ जक्षित्यादयः षट् ४२८ । ७ तुजादीनां दीर्घोऽभ्यासस्य ३५०९ । ८ लिटि धातोरनभ्यासस्य २१७७ । ९ सन्यङोः २३९५ । १० श्लौ २४९० । ११ चङि २३१५ । १२ दाश्वान्साह्वान्मीढ्वांश्च ३६२९ । १३ ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे १००३ । १४ बन्धुनि बहुव्रीहौ १००५ । १५ वचिस्वपियजादीनां किति २४०९ । १६ ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च २४१२ । १७ लिट्यभ्यासस्योभयेषाम् २४०८ । १८ स्वापेश्चङि २५८४ । १९ स्वपिस्यमिव्येञां यङि २६४५ । २० न वशः २६४६ ॥ १ ॥ २१ चायः की २६४७ । २२ स्फायः स्फी निष्ठायाम् ३०४४ । २३ स्त्यः प्रपूर्वस्य ३०३३ । २४ द्रवमूर्तिस्पर्शयोः श्यः ३०२० । २५ प्रतेश्च ३०२१ । २६ विभाषाभ्यवपूर्वस्य ३०२२ । २७ शृतं पाके ३०६७ । २८ प्यायः पी ३०७२ । २९ लिड्यङोश्च २३२७ । ३० विभाषा श्वेः २४२० । ३१ णौ च संश्चङोः २६०१ । ३२ ह्वः संप्रसारणम् २५८६ । ३३ अभ्यस्तस्य च २४१७ । ३४ बहुलं छन्दसि ३५१० । ३५ चायः की ३५११ । ३६ अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताः श्रितमाशीराशीर्ताः ३५१२ । ३७ न संप्रसारणे संप्रसारणम् ३६३ । ३८ लिटि वयो यः २४१३ । ३९ वश्चास्यान्यतरस्यां किति २४१४ । ४० वेञः २४१५ ॥ २ ॥ ४१ ल्यपि च ३३३९ । ४२ ज्यश्च ३३४० । ४३ व्यश्च ३३४१ । ४४ विभाषा परेः ३३४२ । ४५ आदेच उपदेशेऽशिति २३७० । ४६ न व्यो लिटि २४१६ । ४७ स्फुरतिस्फुलत्योर्घञि ३१८५ । ४८ क्रीङ्जीनां णौ २६०० । ४९ सिध्यतेरपारलौकिके २६०२ । ५० मीनातिमिनोतिदीङां ल्यपि च २५०८ । ५१ विभाषा लीयतेः २५०९ । ५२ खिदेश्छन्दसि ३५१३ । ५३ अपगुरो णमुलि ३३७५ । ५४ चिस्फुरोर्णौ २५६९ । ५५ प्रजने वीयतेः २६०३ । ५६ बिभेतेर्हेतुभये २५९३ । ५७ नित्यं स्मयतेः २५९६ । ५८ सृजिदृशोर्झल्यमकिति २४०५ । ५९ अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् २४०२ । ६० शीर्षंश्छन्दसि ३५१४ ॥ ३ ॥ ६१ ये च तद्धिते १६६७ । ६२ अचि शीर्षः १६६७ (वा ३४९२) । ६३ पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु २२८ । ६४ धात्वादेः षः सः २२६४ । ६५ णो नः २२८६ । ६६ लोपो व्योर्वलि ८७३ । ६७ वेरपृक्तस्य ३०३ । ६८ हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् २५२ । ६९ एङ्ह्रस्वात्संबुद्धेः १९३ । ७० शेश्छन्दसि बहुलम् ३५१६ । ७१ ह्रस्वस्य पिति कृति तुक् २८५८ । ७२ संहितायाम् १४५ । ७३ छे च १४६ । ७४ आङ्माङोश्च १४७ । ७५ दीर्घात् १४८ । ७६ पदान्ताद्वा १४९ । ७७ इको यणचि ४७ । ७८ एचोऽयवायावः ६१ । ७९ वान्तो यि प्रत्यये ६२ । ८० धातोस्तन्निमित्तस्यैव ६४ ॥ ४ ॥

८१ क्षय्यजय्यौ शक्यार्थे ६५ । ८२ क्रय्यस्तदर्थे ६६ । ८३ भय्यप्रवय्ये च च्छन्दसि ३५१७ । ८४ एकः पूर्वपरयोः ६८ । ८५ अन्तादिवच्च ७५ । ८६ षत्वतुकोरसिद्धः ३३३३ । ८७ आद्गुणः ६९ । ८८ वृद्धिरेचि ७२ । ८९ एत्येधत्यूठ्सु ७३ । ९० आटश्च २६९ । ९१ उपसर्गादृति धातौ ७४ । ९२ वा सुप्यापिशलेः ७७ । ९३ औतोम्शसोः २८५। ९४ एङि पररूपम् ७८ । ९५ ओमाङोश्च ८० । ९६ उस्यपदान्तात् २२१४ । ९७ अतो गुणे १९१ । ९८ अव्यक्तानुकरणस्यात इतौ ८१ । ९९ नाम्रेडितस्यान्त्यस्य तु वा ८२ । १०० नित्यमाम्रेडिते डाचि २१२८ (वा ३६३६) ॥ ५ ॥ १०१ अकः सवर्णे दीर्घः ८५ । १०२ । प्रथमयोःपूर्वसवर्णः १६४ । १०३ तस्माच्छसो नः पुंसि १९६ । १०४ नादिचि १६५ । १०५ दीर्घाज्जसि च २३९ । १०६ वा छन्दसि ३५१५ । १०७ अमि पूर्वः १९४ । १०८ संप्रसारणाच्च ३३० । १०९ एङः पदान्तादति ८६ । ११० ङसिङसोश्च २४६ । १११ ऋत उत् २७९ । ११२ ख्यत्यात्परस्य २५५ । ११३ अतो रोरप्लुतादप्लुते १६३ । ११४ हशि च १६६ । ११५ प्रकृत्यान्तःपादमव्यपरे ३५१८ । ११६ अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ३५१९ । ११७ यजुष्युरः ३५२० । ११८ आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालेऽम्बिकेपूर्वे ३५२१ । ११९ अङ्ग इत्यादौ च ३५२२ । १२० अनुदात्ते च कुधपरे ३५२३ ॥ ६ ॥ १२१ अवपथासि च ३५२४ । १२२ सर्वत्र विभाषा गोः ८७ । १२३ अवङ् स्फोटायनस्य ८८ । १२४ इन्द्रे च नित्यम् ८९ । १२५ प्लुतप्रगृह्या अचि ९० । १२६ आङोऽनुनासिकश्छन्दसि ३५२५ । १२७ इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ९१ । १२८ ऋत्यकः ९२ । १२९ अप्लुतवदुपस्थिते ९८ । १३० ई३ चाक्रवर्मणस्य ९९ । १३१ दिव उत् ३३७ । १३२ एतत्तदोः सुलोपोऽकोरनञ्समासे हलि १७६ । १३३ स्यश्छन्दसि बहुलम् ३५२६ । १३४ सोऽचि लोपे चेत्पादपूरणम् १७७ । १३५ सुट्कात्पूर्वः २५५३ । १३६ अड्भ्यासव्यवायेऽपि २५३९ ( वा ३६९८ ३६९९)।१३७ संपर्युपेभ्यः करोतौ भूषणे २५५० । १३८ समवाये च २५५१ । १३९ उपात्प्रतियत्न वैकृतवाक्याध्याहारेषु २५५२ । १४० किरतौ लवने २५३९ ॥ ७ ॥ १४१ हिंसायां प्रतेश्च २५४० ।१४२ अपाच्चतुष्पाच्छकुनिष्वालेखने २६८८ । १४३ कुस्तुम्बुरूणि जातिः १०५८ । १४४ अपरस्पराः क्रियासातत्ये १०५९ । १४५ गोष्पदं सेवितासेवितप्रमाणेषु १०६० । १४६ आस्पदंप्रतिष्ठायाम् १०६१ । १४७ आश्चर्यमनित्ये १०६२। १४८ वर्चस्केऽवस्करः १०६३ । १४९ अपस्करो रथाङ्गम् १०६४ । १५० विष्किरः शकुनौ वा १०६५ । १५१ ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ३५२७ । १५२ प्रतिष्कशश्च कशेः १०६६ । १५३ प्रस्कण्वहरिश्चन्द्रावृषी १०६७ । १५४ मस्करमस्करिणौ वेणुपरिव्राजकयोः १०६८ । १५५ कास्तीराजस्तुन्दे नगरे १०६९ । १५६ कारस्करो वृक्षः १०७० (ग २०५) । १५७ पारस्करप्रभृतीनि च संज्ञायाम् १०७१ । १५८ अनुदात्तं पदमेकवर्जम् ३६५० । १५९ कर्षात्वतो घञोऽन्त उदात्तः ३६८० । १६० उञ्छादीनां च ३६८१ ॥ ८ ॥ १६१ अनुदात्तस्य च यत्रोदात्तलोपः ३६५१ । १६२ धातोः ३६७१ १६३ चितः ३७१० । १६४ तद्धितस्य ३७११ । १६५ कितः ३७१२ । १६६ तिसृभ्यो जसः ३७१३ । १६७ चतुरः शसि ३६८२ । १६८ सावेकाचस्तृतीयादिर्विभक्तिः ३७१४ । १६९ अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे ३७१५ । १७० अञ्चेश्छन्दस्यसर्वनामस्थानम् ३७१६ । १७१ ऊडिदंपदाद्यप्पुम्रैद्युभ्यः ३७१७ । १७२ अष्टनो दीर्घात् ३७१८ । १७३ शतुर-

नुमो नयजादी ३७१९ । १७४ उदात्तयणो हल्पूर्वात् ३७२० । १७५ नाद्धात्वाः ३७२१ । १७६ ह्रस्वनुड्भ्यां मतुप् ३७२२ । १७७ नामन्यतरस्याम् ३७२३ । १७८ ङ्यश्छन्दसि बहुलम् ३७२४ । १७९ षट्त्रिचतुर्भ्यो हलादिः ३७२५ । १८० झल्युपोत्तमम् ३६८३ ॥ ९ ॥ १८१ विभाषा भाषायाम् ३६८४ । १८२ न गोश्वन्त्साववर्णराडङ्क्रुङ्कृद्भ्यः ३७२६ । १८३ दिवो झल् ३७२७ । १८४ नृ चान्यतरस्याम् ३७२८ । १८५ तित्स्वरितम् ३७२९ । १८६ तास्यनुदात्तेन्ङिदुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङोः ३७३० । १८७ आदिः सिचोऽन्यतरस्याम् ३७३१ । १८८ स्वपादिर्हिंसामच्यनिटि ३६७२ । १८९ अभ्यस्तानामादिः ३६७३ । १९० अनुदात्ते च ६७४ । १९१ सर्वस्य सुपि ३६८५ । १९२ भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति ३६७५ । १९३ लिति ३६७६ । १९४ आदिर्णमुल्यन्यतरस्याम् ३६७७ । १९५ अचः कर्तृयाकि ३६७८ । १९६ थलि च सेटीडन्तो वा ३७३२ । १९७ ञ्नित्यादिर्नित्यम् ३६८६ । १९८ आमन्त्रितस्य च ३६५३ । १९९ पथिमथोः सर्वनामस्थाने ३६८७ । २०० अन्तश्च तवै युगपत् ३६८८ ॥ १० ॥ २०१ क्षयो निवासे ३६८९ । २०२ जयकरणम् ३६९० २०३ वृषादीनां च ३६९१ । २०४ संज्ञायामुपमानम् ३६९२ । २०५ निष्ठा च द्व्यजनात् ३६९३ । २०६ शुष्कधृष्टौ ३६९४ । २०७ आशितःकर्ता ३६९५ । २०८ रिक्ते विभाषा ३६९६ । २०९ जुष्टार्पिते च च्छन्दसि ३६९७ । २१० नित्यं मन्त्रे ३६९८ । २११ युष्मदस्मदोर्ङसि ३६९९ । २१२ ङयि च ३७०० । २१३ यतोऽनावः ३७०१ । २१४ ईडवन्दवृशंसदुहां ण्यतः ३७०२ । २१५ विभाषावेण्विन्धानयोः ३७०३ । २१६ त्यागरागहासकुहश्वठक्रथानाम् ३७०४ । २१७ उपोत्तमं रिति ३७३३ । २१८ चङ्यन्तरस्याम् ३६७९ । २१९ मतोः पूर्वमात्संज्ञायां स्त्रियाम् ३७०५ । २२० अन्तोऽवत्याः ३७०६ ॥ ११ ॥ २२१ ईवत्याः ३७०७ । २२२ चौ ३६५२ । २२३ समासस्य ३७३४ ॥ एकाचश्चायो ल्यापि च ये च क्षय्यजय्यावकः सवर्णेऽवपथाहिंसायामनुदात्तस्य विभाषा क्षय ईवत्यास्त्रीणि ॥

## द्वितीयः पादः ।

१ बहुव्रीहौ प्रकृत्या पूर्वपदम् ३७३५ । २ तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ३७३६ । ३ वर्णो वर्णेष्वनेते ३७३७ । ४ गाधलवणयोः प्रमाणे ३७३८ । ५ दायाद्यं दायादे ३७३९ । ६ प्रतिबन्धि चिरकृच्छ्रयोः ३७४० । ७ पदेऽपदेशे ३७४१ । ८ निवाते वातत्राणे ३७४२ । ९ शारदेऽनार्तवे ३७४३ । १० अध्वर्युकषाययोर्जातौ ३७४४ । ११ सदृशप्रतिरूपयोः सादृश्ये ३७४५ । १२ द्विगौ प्रमाणे ३७४६ । १३ गन्तव्यपण्यं वाणिजे ३७४७ । १४ मात्रोपज्ञोपक्रमच्छाये नपुंसके ३७४८ । १५ सुखप्रिययोर्हिते ३७४९ । १६ प्रीतौ च ३७५० । १७ स्वं स्वामिनि ३७५१ । १८ पत्यावैश्वर्ये ३७५२ । १९ न भूवाक्चिद्दिधिषु ३७५३ । २० वा भुवनम् ३७५४ ॥ १ ॥ २१ आशङ्काबाधनेदीयःसंभावने ३७५५ । २२ पूर्वे भूतपूर्वे ३७५६ । २३ सविधसनीडसमर्यादसवेशसदेशेषु सामीप्ये ३७५७ । २४ विस्पष्टादीनि गुणवचनेषु ३७५८ । २५ श्रज्यावमकन्पापवत्सु भावे कर्मधारये ३७५९ । २६ कुमारश्च ३७६० । २७ आदिः प्रत्येनसि ३७६१ । २८ पूगेष्वन्यतरस्याम् ३७६४ । २९ इगन्तकालकपालभगालशरावेषु द्विगौ ३७६२ । ३० बह्वन्यतरस्याम् ३७६४ । ३१ दिष्टिवितस्त्योश्च ३७६५ । ३२ सप्तमी सिद्धशुष्कपक्वबन्धेष्वकालात् ३७६६ । ३३ परिप्रत्युपापा वर्ज्यमानाहोरात्रावय-

वेषु ३७६७। ३४ राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु ३७६८। ३५ संख्या ३७६९। ३६ आचार्योपसर्जनश्चान्तेवासी ३७७०। ३७ कार्तकौजपादयश्च ३७७१। ३८ महान्व्रीह्यपराह्णगृष्टीष्वासजाबालभारभारतहैलिहिलरौरवप्रवृद्धेषु ३७७२। ३९ क्षुल्लकश्च वैश्वदेवे ३७७३। ४० उष्ट्रः सादिवाम्योः ३७७४ ॥ २ ॥ ४१ गौः सादसादिसारथिषु ३७७५। ४२ कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणां च ३७७६। ४३ चतुर्थी तदर्थे ३७७७। ४४ अर्थे ३७७८। ४५ क्ते च ३७७९। ४६ कर्मधारयेऽनिष्ठा ३७८०। ४७ अहीने द्वितीया ३७८१। ४८ तृतीया कर्मणि ३७८२। ४९ गतिरनन्तरः ३७८३ । ५० तादौ च निति कृत्यतौ ३७८४। ५१ तवै चान्तश्च युगपत् ३७८५। ५२ अनिगन्तोऽञ्चतौ वप्रत्यये ३७८६। ५३ न्यधी च ३७८७। ५४ ईषदन्यतरस्याम् ३७८८। ५५ हिरण्यपरिमाणं धने ३७८९। ५६ प्रथमोऽचिरोपसंपत्तौ ३७९०। ५७ कतरकतमौ कर्मधारये ३७९१ । ५८ आर्यो ब्राह्मणकुमारयोः ३७९२। ५९ राजा च ३७९३। ६० षष्ठी प्रत्येनसि ३७९४ ॥ ३ ॥ ६१ क्ते नित्यार्थे ३७९५। ६२ ग्रामः शिल्पिनि ३७९६। ६३ राजा च प्रशंसायाम् ३७९७। ६४ आदिरुदात्तः ३७९८। ६५ सप्तमीहारिणौ धर्म्येऽहरणे ३७९९। ६६ युक्ते च ३८००। ६७ विभाषाध्यक्षे ३८०१। ६८ पापं च शिल्पिनि ३८०२। ६९ गोत्रान्तेवासिमाणवब्राह्मणेषु क्षेपे ३८०३। ७० अङ्गानि मैरेये ३८०४। ७१ भक्ताख्यास्तदर्थेषु ३८०५। ७२ गोबिडालसिंहसैन्धवेषूपमाने ३८०६। ७३ अके जीविकार्थे ३८०७। ७४ प्राचां क्रीडायाम् ३८०८। ७५ अणि नियुक्ते ३८०९। ७६ शिल्पिनि चाकृञः ३८१०। ७७ संज्ञायां च ३८११। ७८ गोतन्तियवं पाले ३८१२। ७९ णिनि ३८१३। ८० उपमानं शब्दार्थप्रकृतावेव ३८१४ ॥ ४ ॥ ८१ युक्तारोह्यादयश्च ३८१५। ८२ दीर्घकाशतुषभ्राष्ट्रवटं जे ३८१६। ८३ अन्त्यात्पूर्वं बह्वचः ३८१७। ८४ ग्रामेऽनिवसन्तः ३८१८। ८५ घोषादिषु च ३८१९। ८६ छात्र्यादयः शालायाम् ३८२०। ८७ प्रस्थेऽवृद्धमकर्क्यादीनाम् ३८२१। ८८ मालादीनां च ३८२२। ८९ अमहन्नवन्नगरेऽनुदीचाम् ३८२३। ९० अर्मे चावर्णं द्व्यच्त्र्यच् ३८२४। ९१ न भूताधिकसंजीवमद्राश्मकज्जलम् ३८२५। ९२ अन्तः ३८२६। ९३ सर्वं गुणकार्त्स्न्ये ३८२७। ९४ संज्ञायां गिरिनिकाययोः ३८२८। ९५ कुमार्यां वयसि ३८२९। ९६ उदकेऽकेवले ३८३०। ९७ द्विगौ क्रतौ ३८३१। ९८ सभायां नपुंसके ३८३२। ९९ पुरे प्राचाम् ३८३३। १०० अरिष्टगौडपूर्वे च ३८३४ ॥ ५ ॥ १०१ न हास्तिनफलकमार्देयाः ३८३५ । १०२ कुसूलकूपकुम्भशालं बिले ३८३६। १०३ दिक्छब्दा ग्रामजनपदाख्यानचानराटेषु ३८३७। १०४ आचार्योपसर्जनश्चान्तेवासिनि ३८३८। १०५ उत्तरपदवृद्धौ सर्वं च ३८३९। १०६ बहुव्रीहौ विश्वं संज्ञायाम् ३८४०। १०७ उदराश्वेषुषु ३८४१ । १०८ क्षेपे ३८४२। १०९ नदी बन्धुनि ३८४३। ११० निष्ठोपसर्गपूर्वमन्यतरस्याम् ३८४४। १११ उत्तरपदादिः ३८४५। ११२ कर्णो वर्णलक्षणात् ३८४६। ११३ संज्ञौपम्ययोश्च ३८४७। ११४ कण्ठपृष्ठग्रीवाजङ्घं च ३८४८। ११५ शृङ्गमवस्थायां च ३८४९। ११६ नञो जरमरमित्रमृताः ३८५०। ११७ सोर्मनसी अलोमोषसी ३८५१। ११८ क्रत्वादयश्च ३८५२। ११९ आद्युदात्तं द्व्यच्छन्दसि ३८५३। १२० वीरवीर्यौ च ३८५४ ॥ ६ ॥ १२१ कूलतीरतूलमूलशालाक्षसममव्ययीभावे ३८५५ । १२२ कंसमन्थशूर्पपाय्यकाण्डं द्विगौ ३८५६ । १२३ तत्पुरुषे शालायां नपुंसके

3

३८५७ । १२४ कन्था च ३८५८ । १२५ आदिश्चिहणादीनाम् ३८५९ । १२६ चेलखेटकटुककाण्डं गर्हायाम् ३८६० । १२७ चीरमुपमानम् ३८६१ । १२८ पललसूपशाकं मिश्रे ३८६२ । १२९ कूलसूदस्थलकर्षाः संज्ञायाम् ३८६३ । १३० अकर्मधारये राज्यम् ३८६४ । १३१ वर्ग्यादयश्च ३८६५ । १३२ पुत्रः पुम्भ्यः ३८६६ । १३३ नाचार्यराजर्त्विक्संयुक्तज्ञात्याख्येभ्यः ३८६७ । १३४ चूर्णादीन्यप्राणिषष्ठ्याः ३८६८ । १३५ षट् च काण्डादीनि ३८६९ । १३६ कुण्डं वनम् ३८७० । १३७ प्रकृत्या भगालम् ३८७१ । १३८ शितेर्नित्याबह्वज्बहुव्रीहावभसत् ३८७२ । १३९ गतिकारकोपपदात्कृत् ३८७३ । १४० उभे वनस्पत्यादिषु युगपत् ३८७४ ॥ ७ ॥ १४१ देवताद्वन्द्वे च ३८७५ । १४२ नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ३८७६ । १४३ अन्तः ३८७७ । १४४ थाथघञ्क्ताजबित्रकाणाम् ३८७८ । १४५ सूपमानात्क्तः ३८७९ । १४६ संज्ञायामनाचितादीनाम् ३८८० । १४७ प्रवृद्धादीनां च ३८८१ । १४८ कारकाद्दत्तश्रुतयोरेवाशिषि ३८८२ । १४९ इत्थंभूतेन कृतमिति च ३८८३ । १५० अनो भावकर्मवचनः ३८८४ । १५१ मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः ३८८५ । १५२ सप्तम्याः पुण्यम् ३८८६ । १५३ ऊनार्थकलहं तृतीयायाः ३८८७ । १५४ मिश्रं चानुपसर्गमसंधौ ३८८८ । १५५ नञो गुणप्रतिषेधे संपाद्यर्हहितालमर्थास्तद्धिताः ३८८९ । १५६ ययतोश्चातदर्थे ३८९० । १५७ अच्कावशक्तौ ३८९१ । १५८ आक्रोशे च ३८९२ । १५९ संज्ञायाम् ३८९३ । १६० कृत्योकेष्णुच्चार्वादयश्च ३८९४ ॥ ८ ॥ १६१ विभाषा तृन्नन्नतीक्ष्णशुचिषु ३८९५ । १६२ बहुव्रीहाविदमेतत्तद्भ्यः प्रथमपूरणयोः क्रियागणने ३८९६ । १६३ संख्यायाः स्तनः ३८९७ । १६४ विभाषा छन्दसि ३८९८ । १६५ संज्ञायां मित्राजिनयोः ३८९९ । १६६ व्यवायिनोऽन्तरम् ३९०० । १६७ मुखं स्वाङ्गम् ३९०१ । १६८ नाव्ययदिक्छब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः ३९०२ । १६९ निष्ठोपमानादन्यतरस्याम् ३९०३ । १७० जातिकालसुखादिभ्योऽनाच्छादनात्क्तोऽकृतमितप्रतिपन्नाः ३९०४ । १७१ वा जाते ३९०५ । १७२ नञ्सुभ्याम् ३९०६ । १७३ कपि पूर्वम् ३९०७ । १७४ ह्रस्वान्तेऽन्त्यात्पूर्वम् ३९०८ । १७५ बहोर्नञ्वदुत्तरपदभूम्नि ३९०९ । १७६ न गुणादयोऽवयवाः ३९१० । १७७ उपसर्गात्स्वाङ्गं ध्रुवमपर्शु ३९११ । १७८ वनं समासे ३९१२ । १७९ अन्तः ३९१३ । १८० अन्तश्च ३९१४ ॥ ९ ॥ १८१ न निविभ्याम् ३९१५ । १८२ परेरभितोभावि मण्डलम् ३९१६ । १८३ प्रादस्वाङ्गं संज्ञायाम् ३९१७ । १८४ निरुदकादीनि च ३९१८ । १८५ अभेर्मुखम् ३९१९ । १८६ अपाच्च ३९२० । १८७ स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनामनाम च ३९२१ । १८८ अधेरुपरिस्थम् ३९२२ । १८९ अनोरप्रधानकनीयसी ३९२३ । १९० पुरुषश्चान्वादिष्टः ३९२४ । १९१ अतेरकृत्पदे ३९२५ । १९२ नेरनिधाने ३९२६ । १९३ प्रतेरंश्वादयस्तत्पुरुषे ३९२७ । १९४ उपाद्द्व्यजजिनमगौरादयः ३९२८ । १९५ सोरवक्षेपणे ३९२९ । १९६ विभाषोत्पुच्छे ३९३० । १९७ द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ३९३१ । १९८ सक्थं चाक्रान्तात् ३९३२ । १९९ परादिश्छन्दसि बहुलम् ३९३३ ॥ बहुव्रीहावाशङ्काङ्गौः सादन्के नित्यार्थे युक्तान हास्तिनकूलतीरदेवत्ताविभाषा न निग्र्येकोनविंशतिः ॥

## तृतीयः पादः ।

१ अलुगुत्तरपदे ९५८ । २ पञ्चम्याः स्तोकादिभ्यः ९५९ । ३ ओजःसहोऽम्भस्तमसस्तृतीयायाः ९६० । ४ मनसः संज्ञायाम् ९६१ । ५ आज्ञायिनि च ९६२ । ६ आत्मनश्च पूरणे ९६३ । ७ वैयाकरणाख्यायां चतुर्थ्याः ९६४ । ८ परस्य च ९६५ । ९ हलदन्तात्सप्तम्याः संज्ञायाम् ९६६ । १० कारनाम्नि च प्राचां हलादौ ९६८ । ११ मध्याद्गुरौ ९६९ । १२ अमूर्धमस्तकात्स्वाङ्गादकामे ९७० । १३ बन्धे च विभाषा ९७१ । १४ तत्पुरुषे कृति बहुलम् ९७२ । १५ प्रावृट्शरत्कालदिवां जे ९७३ । १६ विभाषा वर्षक्षरशरवरात् ९७४ । १७ घकालतनेषु कालनाम्नः ९७५ । १८ शयवासवासिष्वकालात् ९७६ । १९ नेन्सिद्धबध्नातिषु च ९७७ । २० स्थे च भाषायाम् ९७८ ॥ १ ॥ २१ षष्ठ्या आक्रोशे ९७९ । २२ पुत्रेऽन्यतरस्याम् ९८० । २३ ऋतो विद्यायोनिसंबन्धेभ्यः ९८१ । २४ विभाषा स्वसृपत्योः ९८२ । २५ आनङृतो द्वन्द्वे ९२१ । २६ देवताद्वन्द्वे च ९२२ । २७ ईदग्नेः सोमवरुणयोः ९२३ । २८ इद्वृद्धौ ९२५ । २९ दिवो द्यावा ९२६ । ३० दिवसश्च पृथिव्याम् ९२७ । ३१ उषासोषसः ९२८ । ३२ मातरपितरावुदीचाम् ९२९ । ३३ पितरामातरा च च्छन्दसि ३९२८ । ३४ स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ८३१ । ३५ तसिलादिष्वा कृत्वसुचः ८३६ । ३६ क्यङ्मानिनोश्च ८३७ । ३७ न कोपधायाः ८३८ । ३८ संज्ञापूरण्योश्च ८३९ । ३९ वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे ८४० । ४० स्वाङ्गाच्चेतोऽमानिनि ८४१ ॥ २ ॥ ४१ जातेश्च ८४२ । ४२ पुंवत्कर्मधारयजातीयदेशीयेषु ७४६ । ४३ घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ९८५ । ४४ नद्याः शेषस्यान्यतरस्याम् ९८६ । ४५ उगितश्च ९८७ । ४६ आन्महतः समानाधिकरणजातीययोः ८०७ । ४७ द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ८०८ । ४८ त्रेस्त्रयः ८०९ । ४९ विभाषा चत्वारिंशत्प्रभृतौ सर्वेषाम् ८१० । ५० हृदयस्य हृल्लेखयदण्लासेषु ९८८ । ५१ वा शोकष्यञ्रोगेषु ९८९ । ५२ पादस्य पदाज्यातिगोपहतेषु ९९० । ५३ पद्यत्यतदर्थे ९९१ । ५४ हिमकाषिहतिषु च ९९२ । ५५ ऋचः शे ९९३ । ५६ वा घोषमिश्रशब्देषु ९९४ । ५७ उदकस्योदः संज्ञायाम् ९९५ । ५८ पेषंवासवाहनधिषु च ९९६ । ५९ एकहलादौ पूरयितव्येऽन्यतरस्याम् ९९७ । ६० मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु च ९९८ ॥ ३ ॥ ६१ इको ह्रस्वोऽङ्यो गालवस्य ९९९ । ६२ एक तद्धिते च १००० । ६३ ङ्यापोः संज्ञाछन्दसोर्बहुलम् १००१ । ६४ त्वे च १००२ । ६५ इष्टकेषीकामालानां चिततूलभारिषु १००६ । ६६ खित्यनव्ययस्य २९४३ । ६७ अरुर्द्विषदजन्तस्य मुम् २९४२ । ६८ इच एकाचोऽम्प्रत्ययवच्च २९९४ । ६९ वाचंयमपुरंदरौ च २९९७ । ७० कारे सत्यागदस्य १००७ । ७१ श्येनतिलस्य पाते ञे ११६८ । ७२ रात्रेः कृति विभाषा १००८ । ७३ नलोपो नञः ७५७ । ७४ तस्मान्नुडचि ७५८ । ७५ नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या ७५९ । ७६ एकादिश्चैकस्य चादुक् ८११ । ७७ नगोऽप्राणिष्वन्यतरस्याम् ७६० । ७८ सहस्य सः संज्ञायाम् १००९ । ७९ ग्रन्थान्ताधिके च १०१० । ८० द्वितीये चानुपाख्ये १०११ ॥ ४ ॥ ८१ अव्ययीभावे चाकाले ६६० । ८२ वोपसर्जनस्य ८४९ । ८३ प्रकृत्याशिष्यगोवत्सहलेषु ८५० । ८४ समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु १०१२ । ८५ ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु

१०१३ । ८६ चरणे ब्रह्मचारिणि १०१४ । ८७ तीर्थे ये १०१५ । ८८ विभाषोदरे १०१६ । ८९ दृग्दृश्वतुषु १०१७ । ९० इदंकिमोरीश्की १०१८ । ९१ आ सर्वनाम्नः ४३० । ९२ विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये ४१८ । ९३ समः समि ४२१ । ९४ तिरसस्तिर्यलोपे ४२३ । ९५ सहस्य सध्रिः ४२२ । ९६ सध मादस्थयोश्छन्दसि ३५२९ । ९७ द्व्यन्तरुपसर्गेभ्योऽप ईत् ९४१ । ९८ ऊदनोर्देशे ९४२ । ९९ अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु १०२५ । १०० अर्थे विभाषा १०२६॥ ५ ॥ १०१ कोः कत्तत्पुरुषेऽचि १०२७ । १०२ रथवदयोश्च १०२८ । १०३ तृणे च जातौ १०२९ । १०४ का पथ्यक्षयोः १०३० । १०५ ईषदर्थे १०३१ । १०६ विभाषा पुरुषे १०३२ । १०७ कवं चोष्णे १०३३ । १०८ पथि च च्छन्दसि ३५३० । १०९ पृषोदरादीनि यथोपदिष्टम् १०३४ । ११० संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ ३३८ । १११ ढ्लोपे पूर्वस्य दीर्घोऽणः १७४ । ११२ सहिवहोरोदवर्णस्य २३५७ । ११३ साढ्यै साढ्वा साढेति निगमे ३५३१ । ११४ संहितायाम् १०३५ । ११५ कर्णे लक्षणस्याविष्टाष्टपञ्चमणिभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य १०३६ । ११६ नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ १०३७ । ११७ वनगिर्योः संज्ञायां कोटरार्किंशुलुकादीनाम् १०३८ । ११८ वले १०४० । ११९ मतौ बह्वचोऽनजिरादीनाम् १०४१ । १२० शरादीनां च १०४२ ॥ ६ ॥ १२१ इको वहेऽपीलोः १०४३ । १२२ उपसर्गस्य घञ्यमनुष्ये बहुलम् १०४४ । १२३ इकः काशे १०४५ । १२४ दस्ति ३०७९ । १२५ अष्टनः संज्ञायाम् १०४६ । १२६ छन्दसि च ३५३२ । १२७ चितेः कपि १०४७ । १२८ विश्वस्य वसुराटोः ३७९ । १२९ नरे संज्ञायाम् १०४८ । १३० मित्रे चर्षौ १०४९ । १३१ मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ ३५३३ । १३२ ओषधेश्च विभक्तावप्रथमायाम् ३५३४ । १३३ ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम् ३५३५ । १३४ इकः सुञि ३५३६ । १३५ द्व्यचोऽतस्तिङः ३५३७ । १३६ निपातस्य च ३५३८ । १३७ अन्येषामपि दृश्यते ३५३९ । १३८ चौ ४१७ । १३९ संप्रसारणस्य १००४ । अलुक्षष्ठ्या जातेरिकोऽव्ययीभावे कोः कत्तदिको वहे एकोनविंशतिः ॥

## चतुर्थः पादः।

१ अङ्गस्य २०० । २ हलः २५५९ । ३ नामि २०९ । ४ न तिसृचतसृ ३०० । ५ छन्दस्युभयथा ३५४० । ६ नृ च २८३ । ७ नोपधायाः ३७० । ८ सर्वनामस्थाने चासंबुद्धौ २५० । ९ वा षपूर्वस्य निगमे ३५४१ । १० सान्तमहतः संयोगस्य ३१७ । ११ अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम् २७७ । १२ इन्हन्पूषार्यम्णां शौ ३५६ । १३ सौ च ३५७ । १४ अत्वसन्तस्य चाधातोः ४२५ । १५ अनुनासिकस्य क्विझलोः क्ङिति २६६६ । १६ अज्झनगमां सनि २६१४ । १७ तनोतेर्विभाषा २६२२ । १८ क्रमश्च क्त्वि ३३२९ । १९ च्छ्वोः शूडनुनासिके च २५६१ । २० ज्वरत्वरस्रिव्यविमवामुपधायाश्च २६५४ ॥ १ ॥ २१ राल्लोपः २६५५ । २२ असिद्धवदत्राभात् २१८३ । २३ श्नान्नलोपः २५४४ । २४ अनिदितां हल उपधायाः क्ङिति ४१५ । २५ दंशसञ्जस्वञ्जां शपि २३९६ । २६ रञ्जेश्च २३९७ । २७ घञि च भावकरणयोः ३१८९ । २८ स्यदो जवे ३१८६ । २९ अवोदैधौद्मप्रश्रथहिमश्रथाः ३१८७ । ३० नाञ्चेः पूजायाम् ४२४ । ३१ क्त्वि स्कन्दिस्यन्दोः ३३३१ । ३२ जान्तनशां विभाषा ३३३० । ३३ भञ्जेश्च चिणि २७६४ । ३४ शास इदङ्हलोः २४८६ । ३५ शा हौ २४८७ ।

३६ हन्तेर्जः २४३१ । ३७ अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति २४२८ । ३८ वा ल्यपि ३३३४ । ३९ न क्तिचि दीर्घश्च ३३१४ । ४० गमः क्वौ २९८६ । ॥ २ ॥ ४१ विड्वनोरनुनासिकस्यात् २९८२ । ४२ जनसनखनां सञ्झलोः २५०४ । ४३ ये विभाषा २३१९ । ४४ तनोतेर्यकि २७५९ । ४५ सनः क्तिचि लोपश्चास्यान्यतरस्याम् ३३१५ । ४६ आर्धधातुके २३०७ । ४७ भ्रस्जो रोपधयो रमन्यतरस्याम् २५३५ । ४८ अतो लोपः २३०८ । ४९ यस्य हलः २६३१ । ५० क्यस्य विभाषा २६६० । ५१ णेरनिटि २३१३ ५२ निष्ठायां सेटि ३०५७ । ५३ जनिता मन्त्रे ३५४२ । ५४ शमिता यज्ञे ३५४३ । ५५ अयामन्ताल्वाय्येत्न्विष्णुषु २३११ । ५६ ल्यपि लघुपूर्वात् ३३३६ । ५७ विभाषापः ३३३७ । ५८ युप्लुवोर्दीर्घश्छन्दसि ३५४४ । ५९ क्षियः ३३३८ । ६० निष्ठायामण्यदर्थे ३०१४ ॥ ३ ॥ ६१ वाक्रोशदैन्ययोः ३०८१ । ६२ स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च २७५७ । ६३ दीङो युडचि क्ङिति २५०७ । ६४ आतो लोप इटि च २३७२ । ६५ ईद्यति २८४३ । ६६ घुमास्थागापाजहातिसां हलि २४६२ । ६७ एर्लिङि २३७४ । ६८ वान्यस्य संयोगादेः २३७८ । ६९ न ल्यपि ३३३९ । ७० मयतेरिदन्यतरस्याम् ३३१८ । ७१ लुङ्लङ्लृङ्क्ष्वडुदात्तः २२०६ । ७२ आडजादीनाम् २२५४ । ७३ छन्दस्यपि दृश्यते ३५४५ । ७४ न माङ्योगे २२२८ । ७५ बहुलं छन्दस्यमाङ्योगेऽपि ३५४६ । ७६ इरयो रे ३५४७ । ७७ अचि श्नुधातुभ्रुवां य्वोरियङुवङौ २७१ । ७८ अभ्यासस्यासवर्णे २२९० । ७९ स्त्रियाः ३०१ । ८० वाम्शसोः ३०२ ॥ ४ ॥ ८१ इणो यण् २४५५ । ८२ एरनेकाचोऽसंयोगपूर्वस्य २७२ । ८३ ओः सुपि २८१ । ८४ वर्षाभ्वश्च २८२ । ८५ न भूसुधियोः २७३ । ८६ छन्दस्युभयथा ३५४८ । ८७ हुश्नुवोः सार्वधातुके २३८७ । ८८ भुवो वुग्लुङ्लिटोः २१७४ । ८९ ऊदुपधाया गोहः २३६४ । ९० दोषो णौ २६०४ । ९१ वा चित्तविरागे २६०५ । ९२ मितां ह्रस्वः २५६८ । ९३ चिण्णमुलोर्दीर्घोऽन्यतरस्याम् २७६२ । ९४ खचि ह्रस्वः २९५५ । ९५ ह्लादो निष्ठायाम् ३०७३ । ९६ छादेर्घेऽद्व्युपसर्गस्य ३२९७ । ९७ इस्मन्त्रन्क्विषु च २९८५ । ९८ गमहनजनखनघसां लोपः क्ङित्यनङि २३६३ । ९९ तनिपत्योश्छन्दसि ३५४९ । १०० घसिभसोर्हलि च ३५५० ॥ ५ । १०१ हुझल्भ्यो हेर्धिः २४२५ । १०२ श्रुशृणुपॄकृवृभ्यश्छन्दसि ३५५१ । १०३ अङितश्च ३५५२ । १०४ चिणो लुक् २३२९ । १०५ अतो हेः २२०२ । १०६ उतश्च प्रत्ययादसंयोगपूर्वात् २३३४ । १०७ लोपश्चास्यान्यतरस्यां म्वोः २३३३ । १०८ नित्यं करोतेः २५४८ । १०९ ये च २५४९ । ११० अत उत्सार्वधातुके २४६७ । १११ श्नसोरल्लोपः २४६९ । ११२ श्नाभ्यस्तयोरातः २४८३ । ११३ ई हल्यघोः २४९७ । ११४ इद्दरिद्रस्य २४८२ । ११५ भियोऽन्यतरस्याम् २४९२ । ११६ जहातेश्च २४९८ । ११७ आ च हौ २४९९ । ११८ लोपो यि २५०० । ११९ घ्वसोरेद्धावभ्यासलोपश्च २४७१ । १२० अत एकहल्मध्येऽनादेशादेर्लिटि २२६० ॥ ६ ॥ १२१ थलि च सेटि २२६१ । १२२ तॄफलभजत्रपश्च २३०१ । १२३ राधो हिंसायाम् २५३२ । १२४ वा जॄभ्रमुत्रसाम् २३५६ । १२५ फणां च सप्तानाम् २३५४ । १२६ न शसददवादिगुणानाम् २२६३ । १२७ अर्वणस्त्रसावनञः ३६४ । १२८ मघवा बहुलम् ३६० । १२९ भस्य २३३ । १३० पादः पत् ४१४ । १३१ वसोः संप्रसारणम् ४३५ । १३२ वाह ऊठ् ३२५ । १३३ श्वयुवमघोनामतद्धिते ३६२ । १३४

अल्लोपोऽनः २३४ । १३५ षपूर्वहन्धृतराज्ञामणि ११६० । १३६ विभाषा ङिश्योः २३७ । १३७ न संयोगाद्वमन्तात् ३५५ । १३८ अचः ४१६ । १३९ उद ईत् ४२० । १४० आतो धातोः २४० ॥ ७ ॥ १४१ मन्त्रेष्वाङ्यादेरात्मनः ३५५४ । १४२ ति विंशतेर्डिति ८४४ । १४३ टेः ३१६ । १४४ नस्तद्धिते ६७५ । १४५ अह्नष्टखोरेव ७८९ । १४६ ओर्गुणः ८४७ । १४७ ढे लोपोऽकद्र्वाः ११४२ । १४८ यस्येति च ३११ । १४९ सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ४९९ । १५० हलस्तद्धितस्य ४७२ । १५१ आपत्यस्य च तद्धितेऽनाति १०८२ । १५२ क्यच्व्योश्च ३११९ । १५३ बिल्वकादिभ्यश्छस्य लुक् १३११ । १५४ तुरिष्ठेमेयःसु २००८ । १५५ टेः १७८६ । १५६ स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादि परं पूर्वस्य च गुणः २०१५ । १५७ प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः २०१६ । १५८ बहोर्लोपो भू च बहोः २०१७ । १५९ इष्ठस्य यिट् च २०१८ । १६० ज्यादादीयसः २०१२ ॥ ८ ॥ १६१ र ऋतो हलादेर्लघोः १७८५ । १६२ विभाषर्जोश्छन्दसि ३५५५ । १६३ प्रकृत्यैकाच् २०१० । १६४ इनण्यनपत्ये १२४५ । १६५ गाथिविदाथिकेशिगणिपणिनश्च १२७५ । १६६ संयोगादिश्च ११५६ । १६७ अन् ११५५ । १६८ ये चाभावकर्मणोः ११५४ । १६९ आत्माध्वानौ खे १६७१ । १७० न मपूर्वोऽपत्येऽवर्मणः ११५७ । १७१ ब्राह्मोऽजातौ ११५८ । १७२ कार्मस्ताच्छील्ये १६१३ । १७३ औक्षमनपत्ये ११५९ । १७४ दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयाहिरण्मयानि ११४५ । १७५ ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसि ३५५६ ॥ अङ्गस्य राल्लोपो विड्वनोर्वाक्रोशेणो यण्हुझल्भ्यस्थालि च मन्त्रेषु र ऋतः पञ्चदश ॥

इति षष्ठोऽध्यायः ।

---

## सप्तमोऽध्यायः ।

### प्रथमः पादः ।

१ युवोरनाकौ १२४७ । २ आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ४७५ । ३ झोऽन्तः २१६९ । ४ अदभ्यस्तात् २४७९ । ५ आत्मनेपदेष्वनतः २२५८ । ६ शीङो रुट् २४४२ । ७ वेत्तेर्विभाषा २७०१ । ८ बहुलं छन्दसि ३५५७ । ९ अतो भिस ऐस् २०३ । १० बहुलं छन्दसि ३५५८ । ११ नेदमदसोरकोः ३४९ । १२ टाङसिङसामिनात्स्याः २०१ । १३ ङेर्यः २०४ । १४ सर्वनाम्नः स्मै २१५ । १५ ङसिङ्योः स्मात्स्मिनौ २१६ । १६ पूर्वादिभ्यो नवभ्यो वा २२१ । १७ जसः शी २१४ । १८ औङ आपः २८७ । १९ नपुंसकाच्च ३१० । २० जश्शसोः शिः ३१२ ॥ १ ॥ २१ अष्टाभ्य औश् ३७२ । २२ षड्भ्यो लुक् २६१ । २३ स्वमोर्नपुंसकात् ३१९ । २४ अतोऽम् ३०९ । २५ अद्ड्डतरादिभ्यः पञ्चभ्यः ३१५ । २६ नेतराच्छन्दसि ३५५९ । २७ युष्मदस्मद्भ्यां ङसोऽश् ३९९ । २८ ङेप्रथमयोरम् ३८२ । २९ शसो न ३९१ । ३० भ्यसो भ्यम् ३९५ । ३१ पञ्चम्या अत् ३९७ । ३२ एकवचनस्य च ३९६ । ३३ साम आकम् ४०० । ३४ आत औ णलः २३७१ । ३५ तुह्योस्तातङाशिष्यन्यतरस्याम् २१५७ । ३६ विदेः शतुर्वसुः ३१०५ । ३७ समासेऽनञ्पूर्वे क्त्वो ल्यप् ३३३२ । ३८ क्त्वापि च्छन्दसि ३५६० । ३९ सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ३५६१ । ४०

अमो मश् ३५६२ ॥ २ ॥ ४१ लोपस्त आत्मनेपदेषु ३५६३ । ४२ ध्वमो ध्वात् ३५६४ । ४३ यजध्वैनमिति च ३५६५ । ४४ तस्य तात् ३५६६ । ४५ तप्तनप्तनथनाश्च ३५६७ । ४६ इद-न्तो मसि ३५६८ । ४७ क्त्वो यक् ३५६९ । ४८ इष्ट्वीनमिति च ३५७० । ४९ स्नात्व्यादय-श्च ३५७१ । ५० आज्जसेरसुक् ३५७२ । ५१ अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि २६६२। ५२ आमि सर्वनाम्नः सुट् २१७ । ५३ त्रेस्त्रयः २६४ । ५४ ह्रस्वनद्यापो नुट् २०८ । ५५ षट्चतुर्भ्यश्च ३३८ । ५६ श्रीग्रामण्योश्छन्दसि ३५७३ । ५७ गोः पादान्ते ३५७४ । ५८ इदितो नुम्धातोः २२६२ । ५९ शे मुचादीनाम् २५४२ । ६० मस्जिनशोर्झलि २५१७ ॥ ३ ॥ ६१ रधिजभोरचि २३०२ । ६२ नेट्यलिटि रधेः २५१६ । ६३ रभेरशब्लिटोः २५८१ । ६४ लभेश्च २५८२ । ६५ आङो यि २८४५ । ६६ उपात्प्रशंसायाम् २८४६ । ६७ उपसर्गात्खल्घ-ञोः ३३०६ । ६८ न सुदुर्भ्यां केवलाभ्याम् ३३०७ । ६९ विभाषा चिण्णमुलोः २७६५ । ७० उगिदचां सर्वनामस्थानेऽधातोः ३६१ । ७१ युजेरसमासे ३७६ । ७२ नपुंसकस्य झलचः ३१४ । ७३ इकोऽचि विभक्तौ ३२० । ७४ तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ३२१ । ७५ अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ३२२ । ७६ छन्दस्यपि दृश्यते ३५७५ । ७७ ई च द्विवचने ३५७६ । ७८ नाभ्यस्ताच्छतुः ४२७ । ७९ वा नपुंसकस्य ४४४ । ८० आच्छीनद्योर्नुम् ४४५ । ॥ ४ ॥ ८१ शप्श्यनोर्नित्यम् ४४६ । ८२ सावनडुहः ३३२ । ८३ दृक्स्ववःस्वतवसां छन्दसि ३५७७ । ८४ दिव औत् ३२६ । ८५ पथिमथ्यृभुक्षामात् ३६५ । ८६ इतोऽत्सर्वनामस्थाने ३६६ । ८७ थो न्थः ३६७ । ८८ भस्य टेर्लोपः ३६८ । ८९ पुंसोऽसुङ् ४३६ । ९० गोतो णित् २८४ । ९१ णलुत्तमो वा २२८३ । ९२ सख्युरसंबुद्धौ २५३ । ९३ अनङ् सौ २४८। ९४ ऋदुशनस्पुरुदंसोऽनेहसां च २७६ । ९५ तृज्वत्क्रोष्टुः २७४ । ९६ स्त्रियां च ३०५ । ९७ विभाषा तृतीयादिष्वचि २७८ । ९८ चतुरनडुहोरामुदात्तः ३३१ । ९९ अम्संबुद्धौ ३३३ । १०० ऋत इद्धातोः २३९० ॥ ५ ॥ १०१ उपधायाश्च २५७१ । १०२ उदोष्ठ्यपूर्वस्य २४९४ । १०३ बहुलं छन्दसि ३५७८ ॥ युवोरष्टाभ्यो लोपो राधिशप्श्यनोरुपधायास्त्रीणि ॥

## द्वितीयः पादः ।

१ सिचि वृद्धिः परस्मैपदेषु २२९७ । २ अतो ल्रान्तस्य २३३० । ३ वदव्रजहलन्तस्याचः २२६७ । ४ नेटि २२६८ । ५ ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् २२९९ । ६ ऊर्णोतेर्विभाषा २४४९ । ७ अतो हलादेर्लघोः २२८४ । ८ नेड्वशि कृति २९८१ । ९ तितुत्रतथसिसुसरकसेषु च ३१६३ । १० एकाच उपदेशेऽनुदात्तात् २२४६ । ११ श्र्युकः क्किति २३८१ । १२ सनि ग्रहगुहोश्च २६१० । १३ कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि २२९३ । १४ श्वीदितो निष्ठायाम् ३०३९। १५ यस्य विभाषा ३०२९ । १६ आदितश्च ३०३६। १७ विभाषा भावादिकर्मणोः ३०५४ । १८ क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु ३०५८ । १९ धृषिशसी वैयात्ये ३०५९ । २० दृढः स्थूलबलयोः ३०६० ॥ १ ॥ २१ प्रभौ परिवृढः ३०६१ । २२ कृच्छ्रगहनयोः कषः ३०६२ । २३ घुषिरविशब्दने ३०६३ । २४ अर्देः संनिविभ्यः ३०६४ । २५ अभेश्चाविदूर्ये ३०६५ । २६ णेरध्ययने वृत्तम् ३०६६ ।२७ वा दान्त-शान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ३०६८ । २८ रुष्यमत्वरसंघुषास्वनाम् ३०६९ । २९ हृषेर्लोम-

सु २०७० । ३० अपचितश्च २०७१ । ३१ ह्रु ह्वरेश्छन्दसि २५७९ । ३२ अपरिह्वृताश्च २५८० । ३३ सोमे ह्वरितः २५८१ । ३४ प्रसितस्कभितस्तभितोत्तभितचत्तविकस्ता विशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमित्यमितीति च २५८२ । ३५ आर्धधातुकस्येड्वलादेः २१८४ । ३६ स्नुक्रमोरनात्मनेपदनिमित्ते २३२३ । ३७ ग्रहोऽलिटि दीर्घः २५६२ । ३८ वृतो वा २३९१ । ३९ न लिङि २५२९ । ४० सिचि च परस्मैपदेषु २३९२ ॥२॥ ४१ इट् सनि वा २६२५ । ४२ लिङ्सिचोरात्मनेपदेषु २५२८ ।४३ ऋतश्च संयोगादेः २५२६ । ४४ स्वरतिसूतिसूयतिधूञूदितो वा २२७९ । ४५ रधादिभ्यश्च २५१५ । ४६ निरः कुषः २५६० । ४७ इण्निष्ठायाम् ३०४५ । ४८ तीषसहलुभरुषरिषः २३४० । ४९ सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् २६१८ । ५० क्लिशः क्त्वानिष्ठयोः ३०४९ । ५१ पूङश्च ३०५० । ५२ वसतिक्षुधोरिट् ३०४६ । ५३ अञ्चेः पूजायाम् ३०४७ । ५४ लुभो विमोहने ३०४८ । ५५ जॄव्रश्च्योः क्त्वि ३३२७ । ५६ उदितो वा ३३२८ । ५७ सेऽसिचि कृतचृतच्छृदतृदनृतः २५०६ । ५८ गमेरिट् परस्मैपदेषु २४०१ । ५९ न वृद्भ्यश्चतुर्भ्यः २३४८ । ६० तासि च क्लृपः २३५२ ॥ ३ ॥ ६१ अचस्तास्वत्थल्यनिटो नित्यम् २२९४ । ६२ उपदेशेऽत्वतः २२९५ । ६३ ऋतो भारद्वाजस्य २२९६ । ६४ बभूथाततन्थजगृभ्मववर्थेति निगमे २५२७ । ६५ विभाषा सृजिदृशोः २४०४ । ६६ इडत्त्यर्तिव्ययतीनाम् २३८४ । ६७ वस्वेकाजाद्घसाम् ३०९६ । ६८ विभाषा गमहनविदविशाम् ३०९९ । ६९ सनिंससनिवांसम् ३५८३ । ७० ऋद्धनोः स्ये २३६६ । ७१ अञ्जेः सिचि २५४६ । ७२ स्तुसुधूञ्भ्यः परस्मैपदेषु २३८९ । ७३ यमरमनमातां सक्च २३७७ । ७४ स्मिपूङ्रञ्ज्वशां सनि २६२६ । ७५ किरश्च पञ्चभ्यः २६११ । ७६ रुदादिभ्यः सार्वधातुके २४७४ । ७७ ईशः से २४३९ । ७८ ईडजनोर्ध्वे च २४४० । ७९ लिङः सलोपोऽनन्त्यस्य २२११ । ८० अतो येयः २२१२ ॥ ४ ॥ ८१ आतो ङितः २२३५ । ८२ आने मुक् ३१०१। ८३ ईदासः ३१०४ । ८४ अष्टन आ विभक्तौ ३७१। ८५ रायो हलि २८६ । ८६ युष्मदस्मदोरनादेशे ३९३ । ८७ द्वितीयायां च ३९० । ८८ प्रथमायाश्च द्विवचने भाषायाम् ३८७ । ८९ योऽचि ३९२ । ९० शेषे लोपः ३८५ । ९१ मपर्यन्तस्य ३८३ । ९२ युवावौ द्विवचने ३८६ । ९३ यूयवयौ जसि ३८८ । ९४ त्वाहौ सौ ३८४ । ९५ तुभ्यमह्यौ ङयि ३९४ । ९६ तवममौ ङसि ३९८ । ९७ त्वमावेकवचने ३८९ । ९८ प्रत्ययोत्तरपदयोश्च १३७३ । ९९ त्रिचतुरोः स्त्रियां तिसृचतसृ २९८ । १०० अचि र ऋतः २९९ ॥ ५ ॥ १०१ जराया जरसन्यतरस्याम् २२७ । १०२ त्यदादीनामः २६५ । १०३ किमः कः ३४२ । १०४ कु तिहोः १९५४ । १०५ क्वाति १९६० । १०६ तदोः सः सावनन्त्ययोः ३८१ । १०७ अदस औ सुलोपश्च ४३७ । १०८ इदमो मः ३४३ । १०९ दश्च ३४५ । ११० यः सौ ४४१ । १११ इदोऽय्पुंसि ३४४ । ११२ अनाप्यकः ३४६ । ११३ हलि लोपः ३४७ । ११४ मृजेर्वृद्धिः २४७३ । ११५ अचो ञ्णिति २५४ । ११६ अत उपधायाः २२८२ । ११७ तद्धितेष्वचामादेः १०७५ । ११८ किति च १०७६ ॥ सिचि प्रभाविट् सन्यचस्तास्वदातो जराया अष्टादश ॥

## तृतीयः पादः ।

१ देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् १४३९ । २ केकयमित्रयुप्रलयानां यादे-

रियः ११४४ । ३ न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् १०९८ । ४ द्वारादीनां च १३८६ । ५ न्यग्रोधस्य च केवलस्य १५४३ । ६ न कर्मव्यतिहारे ३२१७ । ७ स्वागतादीनां च १५४९ । ८ श्वादेरिञि १५६० । ९ पदान्तस्यान्यतरस्याम् १५६१ । १० उत्तरपदस्य १३९६ । ११ अवयवादृतोः १३९७ । १२ सुसर्वार्धाज्जनपदस्य १३९८ । १३ दिशोऽमद्राणाम् १३९९ । १४ प्राचां ग्रामनगराणाम् १४०० । १५ संख्यायाः संवत्सरसंख्यस्य च १७५२ । १६ वर्षस्याभविष्यति १७५४ । १७ परिमाणान्तस्यासंज्ञाशाणयोः १६८३ । १८ जे प्रोष्ठपदानाम् १४०९ । १९ हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ११३३ । २० अनुशतिकादीनां च १४३८ ॥ १ ॥ २१ देवताद्वन्द्वे च १२३९ । २२ नेन्द्रस्य परस्य १२४० । २३ दीर्घाच्च वरुणस्य १२४१ । २४ प्राचां नगरान्ते १४३१ । २५ जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् १४३२ । २६ अर्धात्परिमाणस्य पूर्वस्य तु वा १६८४ । २७ नातः परस्य १६८५ । २८ प्रवाहणस्य ढे ११२९ । २९ तत्प्रत्ययस्य च ११३० । ३० नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् १४६० । ३१ यथातथयथापुरयोः पर्यायेण १७८९ । ३२ हनस्तोऽचिण्णलोः २५७४ । ३३ आतो युक्चिण्कृतोः २७६१ । ३४ नोदात्तोपदेशस्य मान्तस्यानाचमेः २७६३ । ३५ जनिवध्योश्च २५१२ । ३६ अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ २५७० । ३७ शाच्छासाह्वाव्यावेपां युक् २५८५ । ३८ वो विधूनने जुक् २५९० । ३९ लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने २५९१ । ४० भियो हेतुभये षुक् २५९५ ॥ २ ॥ ४१ स्फायो वः २५९७ । ४२ शदेरगतौ तः २५९८ । ४३ रुहः पोऽन्यतरस्याम् २५९९ । ४४ प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ४६३ । ४५ न यासयोः ४६४ । ४६ उदीचामातः स्थाने यकपूर्वायाः ४६५ । ४७ भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि ४६६ । ४८ अभाषितपुंस्काच्च ४६७ । ४९ आदाचार्याणाम् ४६८ । ५० ठस्येकः ११७० । ५१ इसुसुक्तान्तात्कः १२२१ । ५२ चजोः कु घिण्यतोः २८६३ । ५३ न्यङ्क्वादीनां च २८६४ । ५४ हो हन्तेर्ञ्णिन्नेषु ३५८ । ५५ अभ्यासाच्च २४३० । ५६ हेरचङि २५३१ । ५७ सन्लिटोर्जेः २३३१ । ५८ विभाषा चेः २५२५ । ५९ न क्वादेः २८७५ । ६० अजिव्रज्योश्च २८७६ ॥ ३ ॥ ६१ भुजन्युब्जौ पाण्युपतापयोः २८७७ । ६२ प्रयाजानुयाजौ यज्ञाङ्गे २८७८ । ६३ वञ्चेर्गतौ २८७९ । ६४ ओक उचः के २८८० । ६५ ण्य आवश्यके २८८१ । ६६ यजयाचरुचप्रवचर्चश्च २८८२ । ६७ वचोऽशब्दसंज्ञायाम् २८८३ । ६८ प्रयोज्यनियोज्यौ शक्यार्थे २८८४ । ६९ भोज्यं भक्ष्ये २८८५ । ७० घोर्लोपो लेटि वा ३५८४ । ७१ ओतः श्यनि २५१० । ७२ क्सस्याचि २३३७ । ७३ लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये २३६५ । ७४ शमामष्टानां दीर्घः श्यनि २५१९ । ७५ ष्ठिवुक्लमुचमां शिति २३२० । ७६ क्रमः परस्मैपदेषु २३२२ । ७७ इषुगमियमां छः २४०० । ७८ पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्छधौशीयसीदाः २३६० । ७९ ज्ञाजनोर्जा २५११ । ८० प्वादीनां ह्रस्वः २५५८ ॥ ४ ॥ ८१ मीनातेर्निगमे ३५८५ । ८२ मिदेर्गुणः २३४६ । ८३ जुसि च २४८१ । ८४ सार्वधातुकार्धधातुकयोः २१६८ । ८५ जाग्रोऽविचिण्णल्ङित्सु २४८० । ८६ पुगन्तलघूपधस्य च २१८९ । ८७ नाभ्यस्तस्याचि पिति सार्वधातुके २५०३ । ८८ भूसुवोस्तिङि २२२४ । ८९ उतो वृद्धिर्लुकि हलि २४४३ । ९० ऊर्णोतेर्विभाषा २४४५ । ९१ गुणोऽपृक्ते २४४८ । ९२ तृणह इम् २५४५ । ९३ ब्रुव ईट् २४५२ । ९४ यङो वा २६५१ । ९५ तुरुस्तु-

ग्नम्यमः सार्वधातुके २४४४ । ९६ अस्तिसिचोऽपृक्ते २२२५ । ९७ बहुलं छन्दसि ३५८६ । ९८ रुदश्च पञ्चभ्यः २४७५ । ९९ अड्गार्ग्यगालवयोः २४७६ । १०० अदः सर्वेषाम् २४२६ । ॥ ५ ॥ १०१ अतो दीर्घो यञि २१७० । १०२ सुपि च २०२ । १०३ बहुवचने झल्येत् २०५ । १०४ ओसि च २०७ । १०५ आङि चापः २८९ । १०६ संबुद्धौ च २८८ । १०७ अम्बार्थनद्योर्ह्रस्वः २६७ । १०८ ह्रस्वस्य गुणः २४२ । १०९ जसि च २४१ । ११० ऋतो ङिसर्वनामस्थानयोः २७५ । १११ घेर्ङिति २४५ । ११२ आण्नद्याः २६८ । ११३ याडापः २९० । ११४ सर्वनाम्नः स्याड्ढ्रस्वश्च २९१ । ११५ विभाषा द्वितीयातृतीयाभ्याम् २९३ । ११६ ङेराम्नद्याम्नीभ्यः २७० । ११७ इदुद्भ्याम् २९७ । ११८ औत् २९६ । ११९ अच्च घेः २४७ । १२० आङो नाऽस्त्रियाम् २४४ ॥ ६ ॥ देविकादेवतास्फायो भुजमीनातेरतो दीर्घो विंशतिः ॥

## चतुर्थः पादः ।

१ णौ चङ्युपधाया ह्रस्वः २३१४ । २ नाग्लोपिशास्वृदिताम् २५७२ । ३ भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् २५६५ । ४ लोपः पिबतेरीच्चाभ्यासस्य २५८७ । ५ तिष्ठतेरित् २५८८ । ६ जिघ्रतेर्वा २५८९ । ७ उर्ऋत् २५६७ । ८ नित्यं छन्दसि ३५८७ । ९ दयतेर्दिगि लिटि २३८८ । १० ऋतश्च संयोगादेर्गुणः २३७९ । ११ ऋच्छत्यृताम् २३८३ । १२ शॄदॄप्रां ह्रस्वो वा २४९५ । १३ केऽणः ८३४ । १४ न कपि ८३५ । १५ आपोऽन्यतरस्याम् ८९२ । १६ ऋदृशोऽङि गुणः २४०६ । १७ अस्यतेस्थुक् २५२० । १८ श्वयतेरः २४२१ । १९ पतः पुम् २३५५ । २० वच उम् २४५४ ॥ १ ॥ २१ शीङः सार्वधातुके गुणः २४४१ । २२ अयङ्यि क्ङिति २६४९ । २३ उपसर्गाद्ध्रस्व ऊहतेः २७०२ । २४ एतेर्लिङि २४५७ । २५ अकृत्सार्वधातुकयोर्दीर्घः २२९८ । २६ च्वौ च २१२० । २७ रीङृतः १२३४ । २८ रिङ् शयग्लिङ्क्षु २३६७ । २९ गुणोऽर्तिसंयोगाद्योः २३८० । ३० यङि च २६३२ । ३१ ई घ्राध्मोः २६४८ । ३२ अस्य च्वौ २११८ । ३३ क्याचि च २६५८ । ३४ अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु २६६१ । ३५ न च्छन्दस्यपुत्रस्य ३५८८ । ३६ दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति ३५८९ । ३७ अश्वाघस्यात् ३५९० । ३८ देवसुम्नयोर्यजुषि काठके ३५९१ । ३९ कव्यध्वरपृतनस्यर्चि लोपः ३५९२ । ४० द्यतिस्यतिमास्थामित्ति किति ३०७४ ॥ २ ॥ ४१ शाच्छोरन्यतरस्याम् ३०७५ । ४२ दधातेर्हिः ३०७६ । ४३ जहातेश्च क्त्वि ३३३१ । ४४ विभाषा छन्दसि ३५९३ । ४५ सुधितवसुधितनेमधितधिष्वधिषीय च ३५९४ । ४६ दो दद्घोः ३०७७ । ४७ अच उपसर्गात्तः ३०७८ । ४८ अपो भि ४४२ । ४९ सः स्यार्धधातुके २३४२ । ५० तासस्त्योर्लोपः २१९१ । ५१ रि च २१९२ । ५२ ह एति २२५० । ५३ यीवर्णयोर्दीधीवेव्योः २४८८ । ५४ सनि मीमाघुरभलभशकपतपदामच इस् २६२३ । ५५ आप्ज्ञप्यृधामीत् २६१९ । ५६ दम्भ इच्च २६२१ । ५७ मुचोऽकर्मकस्य गुणो वा २६२४ । ५८ अत्र लोपोऽभ्यासस्य २६२० । ५९ ह्रस्वः २१८० । ६० हलादिः शेषः २१७९ ॥ ३ ॥ ६१ शर्पूर्वाः खयः २२५९ । ६२ कुहोश्चुः २२४५ । ६३ न कवतेर्यङि २६४१ । ६४ कृषेश्छन्दसि ३५९५ । ६५ दाधर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरीत्रतःसरीसृपतंवरीवृजन्मर्मृज्यागनीगन्तीति च ३५९६ । ६६ उरत् २२४४ । ६७ द्युतिस्वाप्योः संप्रसारणम्

२३४४ । ६८ व्यथो लिटि २३५३ । ६९ दीर्घ इणः किति २४५६ । ७० अत आदेः २२४८ । ७१ तस्मान्नुड् द्विहलः २२८८ । ७२ अश्नोतेश्च २५३२ । ७३ भवतेरः २१८१ । ७४ ससूवेति निगमे ३५९७ । ७५ निजां त्रयाणां गुणः श्लौ २५०२ । ७६ भृञामित् २४९६ । ७७ अर्तिपिपर्त्योश्च २४९३ । ७८ बहुलं छन्दसि ३५९८ । ७९ सन्यतः २३१७ । ८० ओः पुयण्ज्यपरे २५७७ ॥ ४ ॥ ८१ स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा २५७८ । ८२ गुणो यङ्लुकोः २६३० । ८३ दीर्घोऽकितः २६३२ । ८४ नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् २६४२ । ८५ नुगतोऽनुनासिकान्तस्य २६४३ । ८६ जपजभदहदशभञ्जपशां च २६३८ । ८७ चरफलोश्च २६३६ । ८८ उत्परस्यातः २६३७ । ८९ ति च ३०३७ । ९० रीगृदुपधस्य च २६४४ । ९१ रुग्रिकौ च लुकि २६५२ । ९२ ऋतश्च २६५३ । ९३ सन्वल्लघुनि चङ्परेऽनग्लोपे २३१६ । ९४ दीर्घो लघोः २३१८ । ९५ अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् २५६६ । ९६ विभाषा वेष्टिचेष्ट्योः २५८३ । ९७ ई च गणः २५७३ ॥ णौ चश्चीङः शाच्छोः शर्पूर्वाः स्रवतिसप्तदश ॥

इति सप्तमोऽध्यायः ।

---

# अष्टमोऽध्यायः ।

## प्रथमः पादः ।

१ सर्वस्य द्वे २१३९ । २ तस्य परमाम्रेडितम् ८३ । ३ अनुदात्तं च ३६७० । ४ नित्यवीप्सयोः २१४० । ५ परेर्वर्जने २१४१ । ६ प्रसमुपोदः पादपूरणे ३५९९ । ७ उपर्यध्यधसः सामीप्ये २१४२ । ८ वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु २१४३ । ९ एकं बहुव्रीहिवत् । २१४४ । १० आबाधे च २१४५ । ११ कर्मधारयवदुत्तरेषु २१४६ । १२ प्रकारे गुणवचनस्य २१४७ । १३ अकृच्छ्रे प्रियसुखयोरन्यतरस्याम् २१४८ । १४ यथास्वे यथायथम् २१४९ । १५ द्वंद्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु २१५० । १६ पदस्य ४०१ । १७ पदात् ४०२ । १८ अनुदात्तं सर्वमपादादौ ४०३ । १९ आमन्त्रितस्य च ३६५४ । २० युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ ४०४ ॥ १ ॥ २१ बहुवचनस्य वस्नसौ ४०५ । २२ तेमयावेकवचनस्य ४०६ । २३ त्वामौ द्वितीयायाः ४०७ । २४ न चवाहाहैवयुक्ते ४०८ । २५ पश्यार्थैश्चानालोचने ४०९ । २६ सपूर्वायाः प्रथमाया विभाषा ४१० । २७ तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ३९३४ । २८ तिङ्ङतिङः ३९३५ । २९ न लुट् ३९३६ । ३० निपातैर्यद्यदिहन्तकुविन्नेच्चण्कच्चिद्यत्रयुक्तम् ३९३७ । ३१ नह प्रत्यारम्भे ३९३८ । ३२ सत्यं प्रश्ने ३९३९ । ३३ अङ्गाप्रातिलोम्ये ३९४० । ३४ हि च ३९४१ । ३५ छन्दस्यनेकमपि साकाङ्क्षम् ३९४२ । ३६ यावद्यथाभ्याम् ३९४३ । ३७ पूजायां नानन्तरम् ३९४४ । ३८ उपसर्गव्यपेतं च ३९४५ । ३९ तुपश्यपश्यताहैः पूजायाम् ३९४६ । ४० अहो च ३९४७ ॥ २ ॥ ४१ शेषे विभाषा ३९४८ । ४२ पुरा च परीप्सायाम् ३९४९ । ४३ नन्वित्यनुज्ञैषणायाम् ३९५० । ४४ किं क्रियाप्रश्नेऽनुपसर्गमप्रतिषिद्धम् ३९५१ । ४५ लोपे विभाषा ३९५२ । ४६ एहिमन्ये प्रहासे लृट् ३९५३ । ४७ जात्वपूर्वम् ३९५४ । ४८ किंवृत्तं च चिदुत्तरम् ३९५५ । ४९ आहो उताहो चान-

न्तरम् ३९५६। ५० शेषे विभाषा ३९५७। ५१ गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत् ३९५८। ५२ लोट् च ३९५९। ५३ विभाषितं सोपसर्गमनुत्तमम् ३९६०। ५४ हन्त च ३९६१। ५५ आम एकान्तरमामन्त्रितमनान्तिके ३९६२। ५६ यद्धितुपरं छन्दसि ३९६३। ५७ चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः ३९६४। ५८ चादिषु च ३९६५। ५९ चवायोगे प्रथमा ३९६६। ६० हेति क्षियायाम् ३९६७ ॥ ३ ॥ ६१ अहेति विनियोगे च ३९६८। ६२ चाहलोप एवेत्यवधारणम् ३९६९। ६३ चादिलोपे विभाषा ३९७०। ६४ वैवावेति च च्छन्दसि ३९७१। ६५ एकान्याभ्यां समर्थाभ्याम् ३९७२। ६६ यद्वृत्तान्नित्यम् ३९७३। ६७ पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः ३९७४। ६८ सगतिरपि तिङ् ३९७५। ६९ कुत्सने च सुप्यगोत्रादौ ३९७६। ७० गतिर्गतौ ३९७७। ७१ तिङि चोदात्तवति ३९७८। ७२ आमन्त्रितं पूर्वमविद्यमानवत् ४१२। ७३ नामन्त्रिते समानाधिकरणे सामान्यवचनम् ४१३। ७४ विभाषितं विशेषवचने बहुवचनम् ३६९९ ॥ सर्वस्य बहुवचनस्य शेषेऽहेति चतुर्दश ॥

## द्वितीयः पादः।

१ पूर्वत्रासिद्धम् १२। २ नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ३९३। ३ न मु ने ४२९। ४ उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ३६५७। ५ एकादेश उदात्तेनोदात्तः ३६५८। ६ स्वरितो वानुदात्ते पदादौ ३६५९। ७ नलोपः प्रातिपदिकान्तस्य २३६। ८ न ङिसंबुद्ध्योः ३९२। ९ मादुपधायाश्च मतोर्वोऽयवादिभ्यः १८९७। १० झयः १८९८। ११ संज्ञायाम् १८९९। १२ आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती १९००। १३ उदन्वानुदधौ च १९०१। १४ राजन्वान्सौराज्ये १९०२। १५ छन्दसीरः ३६००। १६ अनो नुट् ३६०१। १७ नाद्धस्य ३६०२। १८ कृपो रो लः २३५०। १९ उपसर्गस्यायतौ २३२६। २० ग्रो यङि २६३९ ॥ १ ॥ २१ अचि विभाषा २५४१। २२ परेश्च घाङ्कयोः ३२६२। २३ संयोगान्तस्य लोपः ५४। २४ रात्सस्य २८०। २५ धि च २२४९। २६ झलो झलि २२८१। २७ ह्रस्वादङ्गात् २२६९। २८ इट ईटि २२६६। २९ स्कोः संयोगाद्योरन्ते च ३८०। ३० चोः कुः ३७८। ३१ हो ढः ३२४। ३२ दादेर्धातोर्घः ३२५। ३३ वा द्रुहमुहष्णुहष्णिहाम् ३२७। ३४ नहो धः ४४०। ३५ आहस्थः २४५१। ३६ व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः २९४। ३७ एकाचो बशो भष्झषन्तस्य स्ध्वोः ३२६। ३८ दधस्तथोश्च २५०१। ३९ झलां जशोऽन्ते ८४। ४० झषस्तथोर्धोऽधः २२८० ॥ २ ॥ ४१ षढोः कः सि २९५। ४२ रदाभ्यां निष्ठातो नः पूर्वस्य च दः ३०१६। ४३ संयोगादेरातो धातोर्यण्वतः ३०१७। ४४ ल्वादिभ्यः ३०१८। ४५ ओदितश्च ३०१९। ४६ क्षियो दीर्घात् ३०१५। ४७ श्योऽस्पर्शे ३०२१। ४८ अञ्चोऽनपादाने ३०२४। ४९ दिवोऽविजिगीषायाम् ३०२८। ५० निर्वाणोऽवाते ३०२९। ५१ शुषः कः ३०३०। ५२ पचो वः ३०३१। ५३ क्षायो मः ३०३२। ५४ प्रस्त्योऽन्यतरस्याम् ३०३४। ५५ अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः ३०३५। ५६ नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ३०३८। ५७ न ध्याख्यापॄमूर्च्छिमदाम् ३०४०। ५८ वित्तो भोगप्रत्यययोः ३०४१। ५९ भित्तं शकलम् ३०४२। ६० ऋणमाधमर्ण्ये ३०४३ ॥ ३ ॥ ६१ नसत्तनिषत्ता-

नुत्तप्रत्तमूर्तसूर्तगूर्तानि छन्दसि ३६०३ । ६२ क्तिन्प्रत्ययस्य कुः ३७७ । ६३ नशेर्वा ४३१ । ६४ मो नो धातोः ३४१ । ६५ म्वोश्च २३०९ । ६६ ससजुषो रुः १६२ । ६७ अवयाः श्वेतवाः पुरोडाश्च २४१६ । ६८ अहन् ४४३ । ६९ रोऽसुपि १७२ । ७० अम्नरूधरवरित्युभयथा छन्दसि ३६०४ । ७१ भुवश्च महाव्याहृतेः ३६०५ । ७२ वसुस्रंसुध्वंस्वनडुहां दः ३३४ । ७३ तिप्यनस्तेः २४८४ । ७४ सिपि धातो रुर्वा २४८५ । ७५ दश्च २४६८ । ७६ र्वोरुपधाया दीर्घ इकः ४३३ । ७७ हलि च ३५४ । ७८ उपधायां च २२६५ । ७९ न भकुर्छुराम् १६२९ । ८० अदसोऽसेर्दादु दो मः ४१९ ॥ ४ ॥ ८१ एत ईद्बहुवचने ४३८ । ८२ वाक्यस्य टेः प्लुत उदात्तः ९३ । ८३ प्रत्यभिवादेऽशूद्रे ९४ । ८४ दूराद्धूते च ९५ । ८५ हैहेप्रयोगे हैहयोः ९६ । ८६ गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् ९७ । ८७ ओमभ्यादाने ३६०६ । ८८ ये यज्ञकर्मणि ३६०७ । ८९ प्रणवष्टेः ३६०८ । ९० याज्यान्तः ३६०९ । ९१ ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः ३६१० । ९२ अग्नीत्प्रेषणे परस्य च ३६११ । ९३ विभाषा पृष्टप्रतिवचने हेः ३६१२ । ९४ निगृह्यानुयोगे च ३६१३ । ९५ आम्रेडितं भर्त्सने ३६१४ । ९६ अङ्गयुक्तं तिङाकाङ्क्षम् ३६१५ । ९७ विचार्यमाणानाम् ३६१६ । ९८ पूर्वं तु भाषायाम् ३६१७ । ९९ प्रतिश्रवणे च ३६१८ । १०० अनुदात्तं प्रश्नान्ताभिपूजितयोः ३६१९ ॥ ५ ॥ १०१ चिदिति चोपमार्थे प्रयुज्यमाने ३६२० । १०२ उपरिस्विदासीदिति च ३६२१ । १०३ स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु ३६२२ । १०४ क्षियाशीःप्रैषेषु तिङाकाङ्क्षम् ३६२३ । १०५ अनन्त्यस्यापि प्रश्नाख्यानयोः ३६२४ । १०६ प्लुतावैच इदुतौ ३६२५ । १०७ एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ ३६२६ । १०८ तयोर्य्वावचि संहितायाम् ३६२७ ॥ पूर्वत्राचि षढोर्नसचैत ईचिदित्यष्टौ ॥

## तृतीयः पादः ।

१ मतुवसो रु संबुद्धौ छन्दसि ३६२८ । २ अत्रानुनासिकः पूर्वस्य तु वा १३६ । ३ आतोऽटि नित्यम् ३६३२ । ४ अनुनासिकात्परोऽनुस्वारः १३७ । ५ समः सुटि १३५ । ६ पुमः खय्यम्परे १३९ । ७ नश्छव्यप्रशान् १४० । ८ उभयथर्क्षु ३६३० । ९ दीर्घादटि समानपादे ३६३१ । १० नॄन्पे १४१ । ११ स्वतवान्पायौ ३६३३ । १२ कानाम्रेडिते १४३ । १३ ढो ढे लोपः २३३५ । १४ रो रि १७३ । १५ खरवसानयोर्विसर्जनीयः ७६ । १६ रोः सुपि ३३९ । १७ भोभगोअघोअपूर्वस्य योऽशि १६७ । १८ व्योर्लघुप्रयत्नतरः शाकटायनस्य १६८ । १९ लोपः शाकल्यस्य ६७ । २० ओतो गार्ग्यस्य १६९ ॥ १ ॥ २१ उञि च पदे १७० । २२ हलि सर्वेषाम् १७१ । २३ मोऽनुस्वारः १२२ । २४ नश्चापदान्तस्य झलि १२३ । २५ मो राजि समः क्वौ १२६ । २६ हे मपरे वा १२७ । २७ नपरे नः १२९ । २८ ङ्णोः कुक्टुक्शरि १३० । २९ डः सि धुट् १३१ । ३० नश्च १३२ । ३१ शि तुक् १३३ । ३२ ङमो ह्रस्वादचि ङमुण्नित्यम् १३४ । ३३ मय उञो वो वा १०८ । ३४ विसर्जनीयस्य सः १३८ । ३५ शर्परे विसर्जनीयः १५० । ३६ वा शरि १५१ । ३७ कुप्वोः ≍क≍पौ च १४२ । ३८ सोऽपदादौ १५२ । ३९ इणः षः १५३ । ४० नमस्पुरसोर्गत्योः १५४ ॥ २ ॥ ४१ इदुदुपधस्य चाप्रत्ययस्य १५५ । ४२ तिरसोऽन्यतरस्याम् १५६ । ४३ द्विस्त्रिश्चतुरिति कृत्वोऽर्थे १५७ । ४४ इसुसोः सामर्थ्ये १५८ । ४५ नित्यं समासेऽनुत्तरप-

दस्थस्य १९९ । ४६ अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य १६० । ४७ अधःशिरसी पदे १६१ । ४८ कस्कादिषु च १४४ । ४९ छन्दसि वाम्रामेडितयोः ३६३४ । ५० कःकरत्करतिकृधिकृतेष्वनदितेः ३६३५ । ५१ पञ्चम्याः परावध्यर्थे ३६३६ । ५२ पातौ च बहुलम् ३६३७ । ५३ षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु ३६३८ । ५४ इडाया वा ३६३९। ५५ अपदान्तस्य मूर्धन्यः २१० । ५६ सहेः साडः सः ३३५ । ५७ इण्कोः २११ । ५८ नुम्विसर्जनीयशर्व्यवायेऽपि ४३४ । ५९ आदेशप्रत्यययोः २१२ । ६० शासिवसिघसीनां च २४१० ॥ ३ ॥ ६१ स्तौतिण्योरेव षण्यभ्यासात् २६२७ । ६२ सः स्विदिस्वदिसहीनां च २६२८ । ६३ प्राक्सितादड्व्यवायेऽपि २२७६ । ६४ स्थादिष्वभ्यासेन चाभ्यासस्य २२७७ । ६५ उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् २२७० । ६६ सदिरप्रतेः २२७१ । ६७ स्तन्भेः २२७२ । ६८ अवाच्चालम्बनाविदूर्ययोः २२७३ । ६९ वेश्च स्वनो भोजने २२७४ । ७० परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् २२७५ । ७१ सिवादीनां वाड्व्यवायेऽपि २३५९ । ७२ अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु २३४९। ७३ वेः स्कन्देरनिष्ठायाम् २३९८ । ७४ परेश्च २३९९ । ७५ परिस्कन्दः प्राच्यभरतेषु ३०२६ । ७६ स्फुरतिस्फुलत्योर्निर्निविभ्यः २५२७ । ७७ वेः स्कभ्नातेर्नित्यम् २५५६ । ७८ इणः षीध्वंलुङ्लिटां धोऽङ्गात् २२४७ । ७९ विभाषेटः २३२५ । ८० समासेऽङ्गुलेः सङ्गः १०१९ ॥ ४ ॥ ८१ भीरोः स्थानम् १०२० । ८२ अग्नेः स्तुत्स्तोमसोमाः ९२४ । ८३ ज्योतिरायुषः स्तोमः १०२१ । ८४ मातृपितृभ्यां स्वसा ९८४ । ८५ मातुःपितुर्भ्यामन्यतरस्याम् ९८३ । ८६ अभिनिसः स्तनः शब्दसंज्ञायाम् ३१९३ । ८७ उपसर्गप्रादुर्भ्यामस्तिर्यच्परः २४७२। ८८ सुविनिर्दुर्भ्यः सुपिसूतिसमाः २४७७। ८९ निनदीभ्यां स्नातेः कौशले ३०८२ । ९० सूत्रं प्रतिष्णातम् ३०८३ । ९१ कापिष्ठलो गोत्रे ३०८४ । ९२ प्रष्ठोऽग्रगामिनि २९१७। ९३ वृक्षासनयोर्विष्टरः ३२३३ । ९४ छन्दोनाम्नि च ३२०६ । ९५ गवियुधिभ्यां स्थिरः ९६७। ९६ विकुशमिपरिभ्यः स्थलम् ३०८५ । ९७ अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः २९१८ । ९८ सुषामादिषु च १०२२ । ९९ एति संज्ञायामगात् १०२३ (ग २९३) । १०० नक्षत्राद्वा १०२४ (ग२९३) ॥ ५ ॥ १०१ ह्रस्वात्तादौ तद्धिते १३२५ । १०२ निसस्तपतावनासेवने २४०३ । १०३ युष्मत्तत्ततक्षुःष्वन्तःपादम् ३६४० । १०४ यजुष्येकेषाम् ३६४१ । १०५ स्तुतस्तोमयोश्छन्दसि ३६४२ । १०६ पूर्वपदात् ३६४३ । १०७ सुञः ३६४४ । १०८ सनोतेरनः ३६४५ । १०९ सहेः पृतनर्ताभ्यां च ३६४६ । ११० न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ३१६८ । १११ सात्पदाद्योः २१२२ । ११२ सिचो यङि २६४० । ११३ सेधतेर्गतौ २२७८ । ११४ प्रतिस्तब्धनिस्तब्धौ च ३०२७ । ११५ सोढः २३५८ । ११६ स्तम्भुसिवुसहां चङि २५८० । ११७ सुनोतेः स्यसनोः २५२४ । ११८ सदेः परस्य लिटि २३६१ । ११९ निव्यभिभ्योऽड्व्यवाये वा छन्दसि ३६४७ ॥ मतुवसोरूञ्चेदुदुपधस्य स्तौतिण्योर्भीरोर्ह्रस्वात्तादावेकोनविंशतिः ॥

## चतुर्थः पादः ।

१ रषाभ्यां नो णः समानपदे २३५ । २ अट्कुप्वाङ्नुम्व्यवायेऽपि १९७ । ३ पूर्वपदात्संज्ञायामगः ८५७ । ४ वनं पुरगामिश्रकासिध्रकासारिकाकोटराग्रेभ्यः १०३९ । ५ प्रनि-

पर्ण भलन्दन विरूपाक्ष भूमि इला सपत्नी । द्व्यचो नद्याः । त्रिवेणी त्रिवणं च ॥ **इति शिवादिः ॥ आकृतिगणः ॥ ५९ ॥**

१ । १२३ **शुभ्रादिभ्यश्च १११२६** ॥ शुभ्र विष्ट पुर (विष्टपुर) ब्रह्मकृत शतद्वार शलाथल शलाकाभ्रू लेखाभ्रू (लेखाभ्र) विकंसा (विकास) रोहिणी रुक्मिणी धर्मिणी दिश् शालूक अजबस्ति शकंधि विमातृ विधवा शुक विश देवतर शकुनि शुक्र उग्र शातल (शतल) बन्धकी सृकण्डु विस्ति अतिथि गोदन्त कुशाम्ब मकष्टु शाताहर पवष्टुरिक सुनामन् । लक्ष्मणश्यामयोर्वासिष्ठे । गोधा कृकलास अणीव प्रवाहण भरत (भारत) भरम मृकण्डु कर्पूर इतर अन्यतर आलीढ सुदन्त सुदक्ष सुवक्षस् सुदामन् कद्रु तुद अकशाय कुमारिका कुठारिका किशोरिका अम्बिका जिह्माशिन् परिधि वायुदत्त शकल शलाका खडूर कुबेरिका अशोका गन्धपिङ्गला खडोन्मत्ता अनुदृष्टिन् (अनुदृष्टि) जरतिन् बलीवर्दिन् विप्र वीज जीव श्वन् अश्मन् अश्व आजिर ॥ **इति शुभ्रादिः ॥ आकृतिगणः ॥ ६० ॥**

१ । १२६ **कल्याण्यादीनामिनङ् च ११३१** ॥ कल्याणी सुभगा दुर्भगा बन्धकी अनुदृष्टि अनुसृति (अनुसृष्टि) जरती बलीवर्दी ज्येष्ठा कनिष्ठा मध्यमा परस्त्री ॥ **इति कल्याण्यादिः ॥ ६१ ॥**

१ । १३६ **गृष्ट्यादिभ्यश्च ११४३** ॥ गृष्टि हृष्टि बलि हलि विश्रि कुद्रि अजवस्ति मित्रयु ॥ **इति गृष्ट्यादिः ॥ ६२ ॥**

१ । १४६ **रेवत्यादिभ्यष्ठक् ११६९** ॥ रेवती अश्वपाली मणिपाली द्वारपाली वृकवञ्चिन् वृकबन्धु वृकग्राह कर्णग्राह दण्डग्राह कुक्कुटाक्ष (ककुदाक्ष) [चामरग्राह] ॥ **इति रेवत्यादिः ॥ ६३ ॥**

१ । १५१ **कुर्वादिभ्यो ण्यः ११७५** ॥ कुरु गर्गर मङ्गुष अजमार रथकार वावदूक । सम्राजः क्षत्रिये । कवि मति (विमति) कापिञ्जलादि वाक् वामरथ पितृमत् इन्द्रलाजी एजि वातकि दामोष्णीषि गणकारि कैशोरि कुट शालाका (शलाका) मुर पुर एरका शुभ्र अभ्र दर्भ केशिनी । वेनाच्छन्दसि । शूर्पणाय श्यावनाय श्यावरथ शावपुत्र सत्यंकार वडभीकार पथिकार मूढ शकन्धु शङ्कु शाक शालिन् शालीन कर्तृ हर्तृ इन पिण्डी । वामरथस्य कण्वादिवत्स्वरवर्जम् ॥ **इति कुर्वादिः ॥ ६४ ॥**

१ । १५४ **तिकादिभ्यः फिञ् ११७८** ॥ तिक कितक (कितव) संज्ञाबालशिख (संज्ञा बाला शिखा) उरश (उरस्) शाव्य सैन्धव यमुन्द रूप्य ग्राम्य नील अमित्र गौकुक्ष्य (गौकक्ष्य) कुरु देवरथ तैतल औरश (औरस) कौरव्य भौरिकि भौलिकि चौपयत चैटयत शीकयत क्षैतयत वाजवत चन्द्रमस् शुभ गङ्गा वरेण्य सुपामन् आरटव (आरद्ध) वह्यका खल्या (खल्यका) वृष लोमक उदञ्ज यञ्ज ॥ **इति तिकादिः ॥ ६५ ॥**

१ । १५८ **वाकिनादीनां कुक्च ११८२** ॥ वाकिन गौधेर कार्केष काक लङ्का । चर्मिवर्मिणोर्नेलोपश्च ॥ **इति वाकिनादिः ॥ ६६ ॥**

१ । १७५ **कम्बोजाल्लुक् ११९४** ॥ कम्बोज चोल केरल शक यवन ॥ **इति कम्बोजादिः ॥ ६७ ॥**

१ । १७८ **न प्राच्यभर्गादियौधेयादिभ्यः ११९७** ॥ भर्ग करूश केकय कश्मीर साल्व

बुस्थाल उरश (उरस्) कौरव्य ॥ **इति भर्गादिः** ॥ ६८ ॥ **यौधेय शौक्रेय शौभ्रेय** ज्यावाणेय धार्तेय (धौर्तेय) धार्तेय त्रिगर्त भरत उशीनर ॥ **इति यौधेयादिः** ॥ ६९ ॥

२ । ३८ **भिक्षादिभ्योऽण् १२४४** ॥ भिक्षा गर्भिणी क्षेत्र करीष अङ्गार (अङ्गार) चर्मिन् (चर्मन्) धर्मिन् सहस्र युवति पदाति पद्धति अथर्वन् दक्षिणा [भूत विषय श्रोत्र] ॥ **इति भिक्षादिः** ॥ ७० ॥

२ । ४५ **खण्डिकादिभ्यश्च १२५४** ॥ खण्डिक वडवा । क्षुद्रकडालवात् (क्षुद्रकमालवात्) सेना संज्ञायाम् । भिक्षुक शुक उलूक श्वन् अहन् युगवरत्रा (युगवरत्र) हलबन्धा (हलबन्ध) ॥ **इति खण्डिकादिः** ॥ ७१ ॥

२ । ४९ **पाशादिभ्यो यः १२५८** ॥ पाश तृण धूम वात अङ्गार [पाटल] पोत गल पिटक पिटाक शकट हल [नट] वन ॥ **इति पाशादिः** ॥ ७२ ॥

२ । ५१ **खलादिभ्य इनिर्वक्तव्यः (वा २७३८)** ॥ खलिनी डूकिनी (डाकिनी) कुटुम्बिनी (कुंटुम्बिनी) द्रुमिणी अङ्किनी गविनी रथिनी कुण्डलिनी ॥ **इति खलादिः** ॥ ७३ ॥

२ । ५३ **राजन्यादिभ्यो वुञ् १२६२** ॥ राजन्य आनृत बाभ्रव्य शाकङ्कायन दैवयातव (देवयात) [अव्रीड वरत्रा] जालंधरायण [राजायन] तेलु आत्मकामेय अम्बरीषपुत्र वसाति बैल्ववन शैलूष उदुम्बर तीव्र बैल्वज आर्जुनायन संप्रिय दाक्षि ऊर्णनाभ ॥ **इति राजन्यादिः** ॥ **आकृतिगणः** ॥ ७४ ॥

२ । ५४ **भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ १२६३** ॥ भौरिकी भौलिकी चौपयत चौटयत (चैटयत) काणेय वाणिजक वाणिकाज्य (वालिकाज्य) सैकयत वैकयत ॥ **इति भौरिक्यादिः** ॥ ७५ ॥ ऐषुकारि सारस्यायन (सारसायन) चान्द्रायण द्व्याक्षायण त्र्याक्षायण औडायन जौलायन खाडायन दासमित्रि दासमित्रायण शौद्रायण दाक्षायण शापण्डायन (शायण्डायन) तार्क्ष्यायण शौभ्रायण सौवीर [सौवीरायण] शपण्ड (शयण्ड) शौण्ड शयाण्डि (शयाण्ड) वैश्वमानव वैश्वध्येनव (वैश्वधेनव) नड तुण्डदेव विश्वदेव [सापिण्डि] ॥ **इत्यैषुकार्यादिः** ॥ ७६ ॥

२ । ६० **क्रतूक्थादिसूत्रान्ताट्ठक् १२७०** ॥ उक्थ लोकायत न्याय न्यास पुनरुक्त निरुक्त निमित्त द्विपदा ज्योतिष अनुपद अनुकल्प यज्ञ [धर्म] चर्चा क्रमेतर श्लक्ष (श्लक्ष्ण) संहिता पदक्रम संघट (संघट्ट) वृत्ति परिषद् संग्रह गण [गुण] आयुर्देव (आयुर्वेद) ॥ **इत्युक्थादिः** ॥ ७७ ॥

२ । ६१ **क्रमादिभ्यो वुन् १२७१** ॥ क्रम पद मीमांसा सामन् ॥ **इति क्रमादिः** ॥ ७८ ॥

२ । ६३ **वसन्तादिभ्यष्ठक् १२७३** ॥ वसन्त [ग्रीष्म] वर्षा शरद (शरत्) हेमन्त शिशिर प्रथम गुण चरम अनुगुण अथर्वन् आथर्वण ॥ **इति वसन्तादिः** ॥ ७९ ॥

२ । ७५ **संकलादिभ्यश्च १२८७** ॥ संकल पुष्कल उत्तम उडुप उद्वेप उत्पुट कुम्भ निधान सुदक्ष सुदत्त सुभूत सुपूत सुनेत्र सुमङ्गल सुपिङ्गल सूत सिकत पूतिका (पूतिक) पूलास कूलास पलाश निवेश गवेश (गवेष) गम्भीर इतर आन् अहन् लोमन् वेमन् चरण (वरुण) बहुल सद्योज अभिषिक्त गोभृत् राजभृत् भल्ल मल्ल माल ॥ **इति संकलादिः** ॥ ८० ॥

२ । ७७ सुवास्त्वादिभ्योऽण् १२८९ ॥ सुवास्तु (सुवस्तु) वर्णु भण्डु खण्डु सेवालिन् कर्पूरिन् शिखण्डिन् गर्त कर्कश शकटीकर्ण कृष्णकर्ण [कर्क] कर्कन्धुमती गोह अहिसक्थ ॥ इति सुवास्त्वादिः ॥ ८१ ॥

२ । ८० वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यककठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतंगमप्रगदिन्वराहकुमुदादिभ्यः १२९२ ॥ अरीहण (अहीरण) द्रुघण द्रुहण भलग (भगल) उलन्द किरण सांपरायण क्रौष्टायन (क्रौष्ट्रायण) औष्ट्रायण त्रैगर्तायन मैत्रायण भास्त्रायण वैमत्तायन (वैमतायन) गौमतायन सौमतायन सौसायन धौमतायन सौमायन ऐन्द्रायण कौद्रायण (कौन्द्रायण) खाडायन शाण्डिल्यायन रायस्पोष विपथ विपाश उद्दण्ड [उदञ्चन] खाण्डवीरण वीरण काशकृत्स्न (कशकृत्स्न) जाम्बवत शिंशपा रैवत (रेवत) बिल्व सुयश शिरीष बधिर जम्बु खदिर सुशर्मन् (सशर्मन्) दलतृ भलन्दन खण्डु कलन (कनल) यज्ञदत्त ॥ इत्यरीहणादिः ॥ ८२ ॥ कृशाश्व अरिष्ट अरिश्म वेश्मन् विशाल लोमश रोमश रोमक लोमक शबल कूट वर्चल सुवर्चल सुकर सूकर प्रातर (प्रतर) सदृश पुरग पुराग सुख धूम अजिन विनत अवनत कुविद्यास (विकुटद्यास) पराशर अरुस् अयस् मौद्गल्याकर (मौद्गल्य युकर) ॥ इति कृशाश्वादिः ॥ ८३ ॥ ऋश्य (ऋष्य) न्यग्रोध शर निलीन [निवास निवात] निधान निबन्धन (निबन्ध) [विबद्ध] परिगूढ [उपगूढ] असनि सित मत वेश्मन् उत्तराश्मन् अश्मन् स्थूल बाहु खदिर शर्करा अनडुह (अनडुह्) अरडु परिवंश वेणु वीरण खण्ड दण्ड परिवृत्त कर्दम अंशु ॥ इति ऋश्यादिः ॥ ८४ ॥ कुमुद शर्करा न्यग्रोध इक्कट संकट कङ्कट गर्त बीज परिवाप निर्यास शकट कच्च मधु शिरीष अश्व अश्वत्थ वल्वज यवाष कूप विकङ्कट दशग्राम ॥ इति कुमुदादिः ॥ ८५ ॥ काश पाश अश्वत्थ पलाश पीयूक्षा चरण वास नड वन कर्दम कच्छूल कङ्कट गुहा बिस तृण कर्पूर बर्बर मधुर ग्रह कपित्थ जतु सीपाल ॥ इति काशादिः ॥ ८६ ॥ तृण नड मूल वन पर्ण वर्ण वराण बिल पुल फल अर्जुन अर्ण सुवर्ण बल चरण बुस ॥ इति तृणादिः ॥ ८७ ॥ प्रेक्षा फलका (हलका) बन्धुका ध्रुवका क्षिपका न्यग्रोध इक्कट कङ्कट [संकट] कट कूप बुक पुक पुट मह परिवाप यवाष धुवका गर्त कूपक हिरण्य ॥ इति प्रेक्षादिः ॥ ८८ ॥ अश्मन् यूथ ऊष मीन नद दर्भ वृन्द गुद खण्ड नग शिखा कोट पाम कन्द कान्द कुल गह्व गुड कुण्डल पीन गुह ॥ इत्यश्मादिः ॥ ८९ ॥ सखि अग्निदत्त वायुदत्त सखिदत्त [गोपिल] भल्लपाल (भल्ल पाल) चक्र चक्रवाक छगल अशोक करवीर वासव वीर पूर वज्र कुशीरक शीहर (सीहर) सरक सरस समर समल सुरस रोह तमाल कदल सप्तल ॥ इति सख्यादिः ॥ ९० ॥ संकाश कपिल कश्मीर [समीर] सूरसेन सरक सूर । सुपन्थिन्पन्थ च । यूप (यूथ) [अंश] अङ्ग नासा पलित अनुनाश अश्मन् कूट मलिन दश कुम्भ शीर्ष चिरन्त (विरत) समल सीर पञ्जर मन्थ नल रोमन् लोमन् पुलिन सुपरि कटिप सकर्णक वृष्टि तीर्थ अगस्ति विकर नासिका ॥ इति संकाशादिः ॥ ९१ ॥ बल चुल नल दल वट लकुल उरल पुल (पुल) मूल उलडुल (उल डुल) वन कुल ॥ इति बलादिः ॥ ९२ ॥ पक्ष तुक्ष तुष कुण्ड अण्ड कम्बलिका वलिक चित्र अस्ति । पथिन्पन्थ च ।

कुम्भ सीरक सरक सकल सरस समल अतिश्वन् रोमन् लोमन् हस्तिन् मकर लोमक शीर्ष निवात पाक सहक (सिंहक) अङ्कुश सुवर्णक हंसक हिंसक कुत्स बिल खिल यमल हस्त कला सकर्णक ॥ **इति पक्षादिः** ॥ ९३ ॥ कर्ण वसिष्ठ अर्क अर्कलूष द्रुपद आनडुह्य पाञ्चजन्य स्फिग (स्फिज्) कुम्भी[1] कुन्ती जित्वन् जीवन्त कुलिश आण्डीवत् (आण्डीवत) जव जैत्र आकन (आनक) ॥ **इति कर्णादिः** ॥ ९४ ॥[1] सुतंगम मुनिचित विप्रचित्त महाचित्त महापुत्र स्वन श्वेत गडिक (खडिक) शुक्र विग्र बीजवापिन् (बीज वापिन्) अर्जुन श्वन् अजिर जीव खण्डिन कर्ण विग्रह ॥ **इति सुतंगमादिः** ॥ ९५ ॥ प्रगदिन् मगदिन् मददिन् कविल खण्डित गदित चूडार मडार मन्दार कोविदार ॥ **इति प्रगद्यादिः** ॥ ९६ ॥ वराह पलाशा (पलाश) शेरीष (शिरीष) पिनद्ध निबद्ध बलाह स्थूल विदग्ध [विजग्ध] विभग्न [निमग्न] बाहु खदिर शर्करा ॥ **इति वराहादिः** ॥ ९७ ॥ कुमुद गोमथ रथकार दशग्राम अश्वत्थ शाल्मलि [शिरीष] मुनिस्थल कुण्डल कूट मधुकर्ण घासकुन्द शुचिकर्ण ॥ **इति कुमुदादिः** ॥ ९८ ॥

**२ । ८२ वरणादिभ्यश्च १३०१** ॥ वरणा शृङ्गी शाल्मलि शुण्डी शयाण्डी पर्णी ताम्रपर्णी गोद आलिङ्ग्यायन जालपदी (जानपदी) जम्बू पुष्कर चम्पा पम्पा वल्गु उज्जयनी गया मथुरा तक्षशिला उरसा गोमती वलभी ॥ **इति वरणादिः** ॥ ९९ ॥

**२।८६ मध्वादिभ्यश्च १३०५** ॥ मधु बिस स्थाणु वेणु कर्कन्धु शमी करीर हिम किशरा शर्याण मरुत् वार्दाली शर इष्टका आसुति शक्ति आसन्दी शकल शलाका आमिषी इक्षु रोमन् रुष्टि रुष्य तक्षशिला खड वट वेट ॥ **इति मध्वादिः** ॥ १०० ॥

**२ । ९० उत्करादिभ्यश्छः १३०९** ॥ उत्कर संफल शफर पिप्पल पिप्पलीमूल अश्मन् सुवर्ण खलाजिन तिक कितव अणक त्रैवण पिचुक अश्वत्थ काश क्षुद्र भस्त्रा शाल जन्या अजिर चर्मन् उत्क्रोश क्षान्त खदिर शूर्पणाय श्यावनाय नैवाकव तृण वृक्ष शाक पलाश विजिगीषा अनेक आतप फल संपर अर्क गर्त अग्नि वैराणक इडा अरण्य निशान्त पर्ण नीचायक शंकर अवरोहित क्षार विशाल वेत्र अरीहण खण्ड वातागर मन्त्रणार्ह इन्द्रवृक्ष नितान्तवृक्ष (नितान्तावृक्ष) आर्द्रवृक्ष ॥ **इत्युत्करादिः** ॥ १०१ ॥

**२ । ९१ नडादीनां कुक्च १३१०** ॥ नड प्लक्ष बिल्व वेणु वेत्र वेतस इक्षु काष्ठ कपोत तृण । क्रुञ्चा ह्रस्वत्वं च । तक्षन्नलोपश्च ॥ **इति नडादिः** ॥ १०२ ॥

**२ । ९५ कत्त्र्यादिभ्यो ढकञ् १३१५** ॥ कत्त्रि उम्भि पुष्कर पुष्कल मोदन कुम्भी कुण्डिन नगरी माहिष्मती वर्मती उख्या ग्राम । कुड्याया यलोपश्च ॥ **इति कत्त्र्यादिः** ॥ १०३ ॥

**२ । ९७ नद्यादिभ्यो ढक् १३१७** ॥ नदी मही वाराणसी श्रावस्ती कौशाम्बी वनकौशाम्बी (वनकोशाम्बी) काशपरी काशफारी (काशफरी) खादिरी पूर्वनगरी पाठा माया शाल्वा दार्वा सेतकी । वडवाया वृषे ॥ **इति नद्यादिः** ॥ १०४ ॥

**२ । ११० प्रस्थोत्तरपदपलद्यादिकोपधादण् १३३१** ॥ पलदी परिषद् रोमक वाहीक कलकीट बहुकीट जालकीट कमलकीट कमलकीकर कमलभिदा गौष्ठी नैकती परिखा शूरसेन गोमती पटच्चर उदपान यकृल्लोम ॥ **इति पलद्यादिः** ॥ १०५ ॥

**२ । ११६ काश्यादिभ्यष्ठञ्ञिठौ १३४०** ॥ काशि चेदि (वेदि) सांयाति संवाह

अच्युत मोदमान शकुलाद हस्तिकर्षू कुनामन् हिरण्य करण गोवासन भारङ्गी अरिंदम अरित्र देवदत्त दशग्राम शौवावतान युवराज उपराज देवराज मोदन सिन्धुमित्र दासमित्र सुधामित्र सोममित्र छागमित्र साधमित्र (सधमित्र) आपदादिपूर्वपदात्कालान्तात् । आपद ऊर्ध्व तत् ॥ **इति काश्यादिः ॥ १०६ ॥**

२ । १२७ **धूमादिभ्यश्च** १३५१ ॥ धूम षडण्ड शशादन अर्जुनाव माहकस्थली आनकस्थली माहिषस्थली मानस्थली अट्टस्थली मद्रकस्थली समुद्रस्थली दाण्डायनस्थली राजस्थली विदेह राजगृह सात्रासाह शष्प मित्रवर्ध्र (मित्रवर्ध) भक्षाली मद्रकूल आजीकूल ब्र्यहव (ब्र्याहाव) त्र्यहव (त्र्याहाव) संस्फीय बर्बर वर्ज्य गर्त आनत माठर पाथेय घोष पल्ली आराज्ञी धार्तराज्ञी आवय तीर्थ । कूलात्सौवीरेषु । समुद्रान्नावि मनुष्ये च । कुक्षि अन्तरीय द्वीप अरुण उज्जयनी पट्टार दक्षिणापथ साकेत ॥ **इति धूमादिः ॥ १०७ ॥**

२ । १३३ **कच्छादिभ्यश्च** १३५७ ॥ कच्छ सिन्धु वर्णु गन्धार मधुमत् कम्बोज कश्मीर साल्व कुरु अनुषण्ड द्वीप अनूप अजवाह विजापक कलूतर रङ्कु ॥ **इति कच्छादिः ॥ १०८ ॥**

२ । १३८ **गहादिभ्यश्च** १३६२ ॥ गह अन्तस्थ सम विषम । मध्य मध्यमं चाण्चरणे । उत्तम अङ्ग वङ्ग मगध पूर्वपक्ष अपरपक्ष अधमशाख उत्तमशाख एकशाख समानशाख समानग्राम एकग्राम एकवृक्ष एकपलाश इष्वग्र इष्वनीक अवस्यन्दन कामप्रस्थ शाडिकाडायनि (खाडायन) काठेरणि लावेरणि सौमित्रि शैशिरि आसुत् दैवशर्मि श्रौति आहिंसि आमित्रि व्याडि वैजि आध्यश्वि आनृशासि (आनृशंसि) शौङ्गि आग्निशर्मि भौजि वाराटकि वाल्मिकि (वाल्मीकि) क्षैमवृद्धि आश्वत्थि औद्गाहमानि ऐक बिन्दवि दन्ताग्र हंस तत्वग्र (तन्त्वग्र) उत्तर अन्तर (अनन्तर) । मुखपार्श्वतसोर्लोपः । जनपरयोः कुक्च । देवस्य च । वेणुकादिभ्यश्छण् ॥ **इति गहादिः ॥ आकृतिगणः ॥ १०९ ॥**

३ । १६ **संधिवेलाद्यृतुनक्षत्रेभ्योऽण्** १३८७ ॥ संधिवेला संध्या अमावास्या त्रयोदशी चतुर्दशी पञ्चदशी पौर्णमासी प्रातिपत् । संवत्सरात्फलपर्वणोः ॥ **इति संधिवेलादिः ॥ ११० ॥**

३ । ५४ **दिगादिभ्यो यत्** १४२९ ॥ दिश् वर्ग पूग गण पक्ष धाय्य मित्र मेधा अन्तर पथिन् रहस् अलीक उखा साक्षिन् देश आदि अन्त मुख जघन मेघ यूथ । उदकात्संज्ञायाम् । ज्ञाय (न्याय) वंश वेश काल आकाश ॥ **इति दिगादिः ॥ १११ ॥**

३ । ५९ **परिमुखादिभ्यश्च** (वा २८६९) ॥ परिमुख परिहनु पर्योष्ठ पर्युलूखल परिसीर उपसीर उपस्थूण उपकलाप अनुपथ अनुपद अनुगङ्ग अनुतिल अनुसीत अनुसाय अनुसीर अनुमाष अनुयव अनुयूप अनुवंश प्रतिशाख ॥ **इति परिमुखादिः ॥ ११२ ॥**

३ । ६० **अध्यात्मादिभ्यश्च** (वा २८७२) ॥ अध्यात्म अधिदेव अधिभूत ॥ **इत्यध्यात्मादिः ॥ ११३ ॥**

३ । ७३ **अणृगयनादिभ्यः** १४५२ ॥ ऋगयन पदव्याख्यान छन्दोमान छन्दोभाषा छन्दोविचिति न्याय पुनरुक्त निरुक्त व्याकरण निगम वास्तुविद्या क्षत्रविद्या अङ्गविद्या विद्या उत्पात उत्पाद उद्याव संवत्सर मुहूर्त उपनिषद् निमित्त शिक्षा भिक्षा ॥ **इत्यृगयनादिः ॥ ११४ ॥**

**३ । ७६ शुण्डिकादिभ्योऽण् १४५५ ॥** शुण्डिक कृकण स्थण्डिल उदपान उपल तीर्थ भूमि तृण पर्ण ॥ **इति शुण्डिकादिः ॥ ११५ ॥**

**३ । ९२ शण्डिकादिभ्यो ञ्यः १४७२ ॥** शण्डिक सर्वसेन सर्वकेश शक शट रक शङ्ख बोध ॥ **इति शण्डिकादिः ॥ ११६ ॥**

**३ । ९३ सिन्धुतक्षशिलादिभ्योऽणञौ १४७३ ॥** सिन्धु वर्णु मधुमत् कम्बोज साल्व कश्मीर गन्धार किष्किन्धा उरसा दरद (दरद्) गान्दिका ॥ **इति सिन्ध्वादिः ॥ ११७ ॥** तक्षशिला वत्सोद्धरण कैर्मेदुर ग्रामणी छगल क्रोष्टुकर्ण सिंहकर्ण संकुचित किंनर काण्डधार पर्वत अवसान बर्बर कंस ॥ **इति तक्षशिलादिः ॥ ११८ ॥**

**३ । १०६ शौनकादिभ्यश्छन्दसि १४८६ ॥** शौनक वाजसनेय शार्ङ्गरव शापेय शाष्पेय खाडायन स्तम्भ स्कन्ध देवदर्शन रज्जुभार रज्जुकण्ठ कठशाठ कषाय तल दण्ड पुरुषांसक [अश्वपेज] ॥ **इति शौनकादिः ॥ ११९ ॥**

**३ । ११८ कुलालादिभ्यो वुञ् १४९८ ॥** कुलाल वरुड चण्डाल निषाद कर्मार सेना सिरिन्ध्र (सिरिध्र) सैरिन्ध्र देवराज पर्षत् (परिषत्) वधू मधु रुरु रुद्र अनडुह (अनडुह्) ब्रह्मन् कुम्भकार श्वपाक ॥ **इति कुलालादिः ॥ १२० ॥**

**३ । १३१ रैवतिकादिभ्यश्छः १५११ ॥** रैवतिक स्वापिशि क्षैमवृद्धि गौरग्रीव (गौरग्रीवि) औदमेधि औदवापि वैजवापि ॥ **इति रैवतिकादिः ॥ १२१ ॥**

**३ । १३६ बिल्वादिभ्योऽण् १५१६ ॥** बिल्व व्रीहि काण्ड मुद्ग मसूर गोधूम इक्षु वेणु गवेधुका कर्पासी पाटली कर्कन्धु कुटीर ॥ **इति बिल्वादिः ॥ १२२ ॥**

**३ । १४१ पलाशादिभ्यो वा १५२१ ॥** पलाश खदिर शिंशपा स्पन्दन पूलाक करीर शिरीष यवास विकङ्कत ॥ **इति पलाशादिः ॥ १२३ ॥**

**३ । १४४ नित्यं वृद्धशरादिभ्यः १५२४ ॥** शर दर्भ मृद् (मृत्) कुटी तृण सोम वल्वज ॥ **इति शरादिः ॥ १२४ ॥**

**३ । १५२ तालादिभ्योऽण् १५३० ॥** तालाद्धनुषि । वार्हिण इन्द्रालिश (इन्द्रासिष) इन्द्रादृश इन्द्रायुध चय श्यामाक पीयूक्षा ॥ **इति तालादिः ॥ १२५ ॥**

**३ । १५४ प्राणिरजतादिभ्योऽञ् १५३२ ॥** रजत सीस लोह उदुम्बर नीप दारु रोहीतक विभीतक पीतदारु तीव्रदारु त्रिकण्टक कण्टकार ॥ **इति रजतादिः ॥ १२६ ॥**

**३ । १६४ प्लक्षादिभ्योऽण् १५४२ ॥** प्लक्ष न्यग्रोध अश्वत्थ इङ्गुदी शिग्रु [रुरु] कक्षतु बृहती ॥ **इति प्लक्षादिः ॥ १२७ ॥**

**३ । १६७ हरीतक्यादिभ्यश्च १५४६ ॥** हरीतकी कोशातकी नखरजनी शष्कण्डी दाडी दोडी श्वेतपाकी अर्जुनपाकी द्राक्षा काला ध्वाक्षा गभीका कण्टकारिका पिप्पली चिम्पा (चिञ्चा) शेफालिका ॥ **इति हरीतक्यादिः ॥ १२८ ॥**

**४ । १ माशब्दादिभ्य उपसंख्यानम् (वा २९५५) ॥** माशब्दः । नित्यशब्दः । कार्यशब्दः ॥ **इति माशब्दादिः ॥ १२९ ॥**

**४ । १ आहौ प्रभूतमादिभ्यः (वा २९५६) ॥** प्रभूत पर्याप्त ॥ **इति प्रभूतादिः ॥ १३० ॥**

**४ । १ पृच्छतौ सुस्नातादिभ्यः (वा २९५७)** ॥ **सुस्नात सुखरात्रि सुखशयन** ॥ **इति सुस्नातादिः ॥ १३१ ॥**

**४ । १ गच्छतौ परदारादिभ्यः (वा २९५८)** ॥ परदार गुरुतल्प ॥ **इति परदारादिः ॥ १३२ ॥**

**४ । १० पर्पादिभ्यः ष्ठन् १५५८** ॥ पर्प अश्व अश्वत्थ रथ जाल न्यास व्याल । पादः पच्च ॥ **इति पर्पादिः ॥ १३३ ॥**

**४ । १२ वेतनादिभ्यो जीवति १५६२** ॥ वेतन वाहन अर्धवाहन धनुर्दण्ड जाल वेश उपवेश प्रेषण उपवस्ति सुख शय्या शक्ति उपनिषद् उपदेश स्फिज् (स्फिज) पाद [उपस्थ] उपस्थान उपहस्त ॥ **इति वेतनादिः ॥ १३४ ॥**

**४ । १५ हरत्युत्सङ्गादिभ्यः १५६५** ॥ उत्सङ्ग [उडुप] उत्पुत [उत्पन्न] उत्पुट पिटक पिटाक ॥ **इत्युत्सङ्गादिः ॥ १३५ ॥**

**४ । १६ भस्त्रादिभ्यः ष्ठन् १५६६** ॥ भस्त्रा भरट भरण शीर्षभार शीर्षेभार अंसभार अंसेभार ॥ **इति भस्त्रादिः ॥ १३६ ॥**

**४ । १९ निर्वृत्तेऽक्षद्यूतादिभ्यः १५६९** ॥ अक्षद्यूत [जानुप्रहृत] जङ्घाप्रहृत जङ्घाप्रहृत पादस्वेदन कण्टकमर्दन गतानुगत गतागत यातोपयात अनुगत ॥ **इत्यक्षद्यूतादिः ॥ १३७ ॥**

**४ । ४८ अण्महिष्यादिभ्यः १५९८** ॥ महिषी प्रजापति प्रजावती प्रलेपिका विलेपिका अनुलेपिका पुरोहित मणिपाली अनुवारक [अनुचारक] होतृ यजमान ॥ **इति महिष्यादिः ॥ १३८ ॥**

**४ । ५३ किसरादिभ्यः ष्ठन् १६०३** ॥ किसर नरद नलद स्थागल तगर गुग्गुलु उशीर हरिद्रा हरिद्रु पर्णी (पर्णी) ॥ **इति किसरादिः ॥ १३९ ॥**

**४ । ६२ छत्रादिभ्यो णः १६१२** ॥ छत्र शिक्षा प्ररोह स्था बुभुक्षा चुरा तितिक्षा उपस्थान कृषि कर्मन् विश्वधा तपस् सत्य अनृत विशिखा विशिका भक्षा उदस्थान पुरोडा विक्षा चुक्षा मन्द्र ॥ **इति छत्रादिः ॥ १४० ॥**

**४ । ९९ प्रतिजनादिभ्यः खञ् १६९१** ॥ प्रतिजन इदंयुग संयुग समयुग परयुग परकुल परस्यकुल अमुष्यकुल सर्वजन विश्वजन महाजन पञ्चजन ॥ **इति प्रतिजनादिः ॥ १४१ ॥**

**४ । १०२ कथादिभ्यष्ठक् १६९४** ॥ कथा विकथा विश्वकथा संकथा वितण्डा कुष्टविद् (कुष्ठविद्) जनवाद जनेवाद जनोवाद वृत्ति संग्रह गुण गण आयुर्वेद ॥ **इति कथादिः ॥ १४२ ॥**

**४ । १०३ गुडादिभ्यष्ठञ् १६९५** ॥ गुड कुल्माष सक्तु अपूप मांसौदन इक्षु वेणु संग्राम संघात [संक्राम संवाह] प्रवास निवास उपवास ॥ **इति गुडादिः ॥ १४३ ॥**

इति चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः ।

१ । २ **उगवादिभ्यो यत् १६६२** ॥ गो हविस् अक्षर विष बर्हिस् अष्टका स्खदा युग मेधा स्रुच् । नाभि नभं च । शुनः संप्रसारणं वा च दीर्घत्वं तत्संनियोगेन चान्तोदात्तत्वम् । ऊधसोऽनङ् । कूप खद दर खर असुर अध्वन् (अध्वन) क्षर वेद बीज दीस (दीप्त) ॥ **इति गवादिः** ॥ **१४४** ॥

१ । ४ **विभाषा हविरपूपादिभ्यः १६६४** ॥ अपूप तण्डुल अभ्युष (अभ्यूष) [अभ्योष अवोष अभ्येष] पृथुक ओदन सूप पूप किण्व प्रदीप मुसल कटक कर्णवेष्टक [इर्गल] अर्गल । अन्नविकारेभ्यश्च । यूप स्थूणा दीप अश्व पत्र ॥ **इत्यपूपादिः** ॥ **१४५** ॥

१ । २० **असमासे निष्कादिभ्यः १६८२** ॥ निष्क पण पाद माष वाह द्रोण षष्टि ॥ **इति निष्कादिः** ॥ **१४६** ॥

१ । ३९ **गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् १७०९** ॥ अश्व अश्मन् गण ऊर्णा (ऊर्म) उमा भङ्गा (गङ्गा) वर्षा वसु ॥ **इत्यश्वादिः** ॥ **१४७** ॥

१ । ५० **तद्धरति वहत्यावहति भाराद्वंशादिभ्यः १७१६** ॥ वंश कुटज वल्वज मूल स्थूणा (स्थूण) अक्ष अश्मन् अश्व श्लक्ष्ण इक्षु खट्वा ॥ **इति वंशादिः** ॥ **१४८** ॥

१ । ६४ **छेदादिभ्यो नित्यम् १७२९** ॥ छेद भेद द्रोह दोह नर्ति (नर्त) कर्ष [तीर्थ] संप्रयोग विप्रयोग प्रयोग [विप्रकर्ष] प्रेषण संप्रश्न विप्रश्न विकर्ष प्रकर्ष । विराग विरङ्गं च ॥ **इति छेदादिः** ॥ **१४९** ॥

१ । ६६ **दण्डादिभ्यो यः १७३१** ॥ दण्ड मुसल मधुपर्क कशा अर्घ मेघ मेधा सुवर्ण उदक वध युग गुहा भाग इभ भङ्ग ॥ **इति दण्डादिः** ॥ **१५०** ॥

१ । ९४ **महानाम्न्यादिभ्यः षष्ठ्यन्तेभ्य उपसंख्यानम्** (**वा ३०६७**) ॥ महानाम्नी आदित्यव्रत गोदान ॥ **इति महानाम्न्यादिः** ॥ **१५१** ॥

१ । ९४ **अवान्तरदीक्षादिभ्यो डिनिर्वक्तव्यः** (**वा ३०६९**) ॥ अवान्तरदीक्षा तिलव्रत देवव्रत ॥ **इत्यवान्तरदीक्षादिः** ॥ **१५२** ॥

१ । ९७ **व्युष्टादिभ्योऽण् १७६१** ॥ व्युष्ट नित्य निष्क्रमण प्रवेशन [उपसंक्रमण] तीर्थ [अस्तरण] सङ्ग्राम संघात ॥ **इति व्युष्टादिः** ॥ **१५३** ॥ **अग्निपदादिभ्य उपसंख्यानम्** (**वा ३०७५**) ॥ अग्निपद पीलुमूल (पीलू मूल) प्रवास उपवास ॥ **इत्यग्निपदादिः आकृतिगणः** ॥ **१५४** ॥

१ । १०१ **तस्मै प्रभवति संतापादिभ्यः १७६५** ॥ संताप संनाह सङ्ग्राम संयोग संपराय [संवेशन] संपेष निष्पेष [सर्ग] निसर्ग विसर्ग उपसर्ग प्रवास उपवास संघात संवेष संवास संमोदन [सक्तु] मांसौदनाद्विगृहीतादपि ॥ **इति संतापादिः** ॥ **१५५** ॥

१ । १०९ **तत्प्रकरणे उपवस्त्रादिभ्य उपसंख्यानम्** (**वा** ) ॥ उपवस्तृ प्राशितृ चूडा श्रद्धा ॥ **इत्युपवस्त्रादिः** ॥ **१५६** ॥

१ । १११ **अनुप्रवचनादिभ्यश्छः १७७४** ॥ अनुप्रवचन उत्थापन उपस्थापन संवेशन प्रवेशन अनुप्रवेशन अनुवासन अनुवचन अनुवाचन अन्वारोहण प्रारम्भण आरम्भण आरोहण ॥ **इत्यनुप्रवचनादिः** ॥ **१५७** ॥

१ । १११ स्वर्गादिभ्यो यत्नक्तव्यः (वा ३०७७) ॥ स्वर्ग यशस् आयुस् काम धन ॥ इति स्वर्गादिः ॥ १५८ ॥

१ । १११ पुण्याहवाचनादिभ्यो लुग्वक्तव्यः (वा ३०७८ ॥ पुण्याहवाचन स्वस्तिवाचन शान्तिवाचन ॥ इति पुण्याहवाचनादिः ॥ १५९ ॥

१ । १२२ पृथ्वादिभ्य इमनिज्वा १७८४ ॥ पृथु मृदु महत् पटु तनु लघु बहु साधु आशु उरु गुरु बहुल खण्ड दण्ड चण्ड अकिंचन बाल होड पाक वत्स मन्द स्वादु ह्रस्व दीर्घ प्रिय वृष ऋजु क्षिप्र क्षुद्र अणु ॥ इति पृथ्वादिः ॥ १६० ॥

१ । १२३ वर्णदृढादिभ्यः ष्यञ्च १७८७ ॥ दृढ वृढ परिवृढ भृश कृश [वक्र] शुक्र चुक्र आम्र [कृष्ट] लवण ताम्र शीत उष्ण जड बधिर पण्डित मधुर मूर्ख मूक । वेर्यातलातमतिमनःशारदानाम् । समो मतिमनसोः । जवन ॥ इति दृढादिः ॥ १६१ ॥

१ । १२४ गुणवचनब्राह्मणादिभ्यः कर्मणि च १७८८ ॥ ब्राह्मण वाडव माणव । अर्हतो नुम्च । चोर धूर्त आराधय विराधय अपराधय उपराधय एकभाव द्विभाव त्रिभाव अन्यभाव अक्षेत्रज्ञ संवादिन् संवेशिन् संभाषिन् बहुभाषिन् शीर्षघातिन् विघातिन् समस्थ विषमस्थ परमस्थ मध्यमस्थ अनीश्वर कुशल चपल निपुण पिशुन कुतूहल क्षेत्रज्ञ निश्न बालिश अलस दुःपुरुष कापुरुष राजन् गणपति अधिपति गडुल दायाद विशस्ति विषम विपात निपात । सर्ववेदादिभ्यः स्वार्थे । चतुर्वेदस्योभयपदवृद्धिश्च । शौटीर ॥ आकृतिगणोऽयम् ॥ इति ब्राह्मणादिः ॥ १६२ ॥

१ । १२४ चातुर्वर्ण्यादीनामुपसंख्यानम् (वा ३०९४ ॥ चतुर्वर्ण चतुर्वेद चतुराश्रम सर्वविद्य त्रिलोक त्रिस्वर षड्गुण सेना अनन्तर संनिधि समीप उपमा सुख तदर्थ इतिह माणिक ॥ इति चतुर्वर्णादिः ॥ १६३ ॥

१ । १२८ पत्यन्तपुरोहितादिभ्यो यक् १७९३ ॥ पुरोहित । राजासे । ग्रामिक पिण्डिक सुहित बालमन्द (बाल मन्द) खण्डिक दण्डिक वर्मिक कर्मिक धर्मिक शिलिक [सूतिक मूलिक तिलक] अञ्जलिक (अन्तलिक) [रूपिक ऋषिक] पुत्रिक अविक छात्रिक पर्षिक पथिक चर्मिक [प्रतिक] सारथि आस्तिक सूचिक संरक्षसूचक (संरक्ष सूचक) नास्तिक [अजानिक शाक्वर नागर चूडिक] ॥ इति पुरोहितादिः ॥ १६४ ॥

१ । १२९ प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् १७९४ ॥ उद्गातृ उन्नेतृ प्रतिहर्तृ प्रशास्तृ होतृ पोतृ हर्तृ रथगणक पत्तिगणक सुष्ठु दुष्ठु अध्वर्यु वधू । सुभग मन्त्रे ॥ इत्युद्गात्रादिः ॥ १६५ ॥

१ । १३० हायनान्तयुवादिभ्योऽण् १७९५ ॥ युवन् स्थविर होतृ यजमान पुरुषासे । भ्रातृ कुतुक श्रमण (श्रणम) कटुक कमण्डलु कुस्त्री सुस्त्री दुःस्त्री सुहृदय दुर्हृदय सुहृद् दुर्हृद् सुभ्रातृ दुर्भ्रातृ वृषल परिव्राजक सब्रह्मचारिन् अनृशंस । हृदयासे कुशल चपल निपुण पिशुन कुतूहल क्षेत्रज्ञ । श्रोत्रियस्य यलोपश्च ॥ इति युवादिः ॥ १६६ ॥

१ । १३३ द्वन्द्वमनोज्ञादिभ्यश्च १७९८ ॥ मनोज्ञ प्रियरूप अभिरूप कल्याण मेधाविन् आढ्य कुलपुत्र छान्दस छात्र श्रोत्रिय चोर धूर्त विश्वदेव युवन् कुपुत्र ग्रामपुत्र ग्राम-

कुलाल ग्रामड (ग्रामषण्ड) ग्रामकुमार सुकुमार बहुल [अवश्यपुत्र] अमुष्यपुत्र अमुष्य-कुल सारपुत्र शतपुत्र ॥ **इति मनोज्ञादिः** ॥ १६७ ॥

**२ । २४ तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ १८२९** ॥ पीलु कर्कन्धू (कर्कन्धु) शमी करीर बल (कुवल) बदर अश्वत्थ खदिर ॥ **इति पील्वादिः** ॥ १६८ ॥ कर्ण अक्षि नख मुख केश पाद गुल्फ भ्रू शृङ्ग दन्त ओष्ठ पृष्ठ ॥ **इति कर्णादिः** ॥ १६९ ॥

**२ । ३६ तदस्य संजातं तारकादिभ्य इतच् १८३७** ॥ तारका पुष्प कर्णक मञ्जरी ऋजीष [क्षण सूच] मूत्र निष्क्रमण पुरीष उच्चार प्रचार [विचार] कुड्मल कण्टक मुसल [मुकुल] कुसुम कुतूहल स्तबक (स्तवक) किसलय पल्लव [खण्ड] वेग निद्रा मुद्रा बुभुक्षा [धेनुष्या] पिपासा श्रद्धा अभ्र पुलक अङ्गारक वर्णक द्रोह दोह सुख दुःख उत्कण्ठा भर व्याधि वर्मन् व्रण गौरव शास्त्र तरङ्ग तिलक चन्द्रक अन्धकार गर्व कुमुर (मुकुर) हर्ष उत्कर्ष [रण] कुवलय गर्ध क्षुध् सीमन्त ज्वर गर रोग रोमाञ्च पण्डा कज्जल तृष् कोरक कल्लोल स्थपुट फल कञ्चुक शृङ्गार अङ्कुर शैवल बकुल श्वभ्र आराल कलङ्क कर्दम [कन्दल] मूर्च्छा अङ्गार हस्तक प्रतिबिम्ब विघ्नतन्त्र प्रत्यय दीक्षा गर्ज । गर्भादप्राणिनि ॥ **इति तारकादिः** ॥ **आकृतिगणः** ॥ १७० ॥

**२ । ६१ विमुक्तादिभ्योऽण् १८६१** ॥ विमुक्त देवासुर रक्षोसुर उपसद् सुवर्ण परिसारक [सदसत्] वसु मरुत् पत्नीवत् वसुमत् महीयत्व सत्त्वत् बर्हवत् दशार्ण दशार्ह वयस् हविर्धान पतत्रिन् महित्री अस्यहत्य सोमापुषन् (सोमापूषन्) इडा अग्नाविष्णु उर्वशी वृत्रहन् ॥ **इति विमुक्तादिः** ॥ १७१ ॥

**२ । ६२ गोषदादिभ्यो वुन् १८६२** ॥ गोषद (गोषद्) इषेत्वा मातरिश्वन् देवस्यत्वा देवीरापः कृष्णोऽस्याखरेष्ठः देवींधिया (देवींधिय) रक्षोहण युञ्जान अञ्जन प्रभूत प्रतूर्त कृशानु (कृशाकु) ॥ **इति गोषदादिः** ॥ १७२ ॥

**२ । ६४ आकर्षादिभ्यः कन् १८६४** ॥ आकर्ष त्सरु पिशाच पिचण्ड अशनि अश्मन् निचय चय [विजय] जय आचय नय पाद दीप ह्रद ह्राद ह्लाद [गद्गद] शकुनि ॥ **इत्याकर्षादिः** ॥ १७३ ॥

**२ । ८८ इष्टादिभ्यश्च १८८८** ॥ इष्ट पूर्त उपासादित निगदित परिगदित [परिवादित] निकथित निषादित निपठित संकलित परिकलित संरक्षित परिरक्षित अर्चित गणित अवकीर्ण आयुक्त गृहीत आम्नात श्रुत अधीत [अवधान] आसेवित अवधारित अवकल्पित निराकृत उपकृत उपाकृत अनुयुक्त अनुगणित अनुपठित व्याकुलित ॥ **इतीष्टादिः** ॥ १७४ ॥

**२ । ९५ रसादिभ्यश्च १८९५** ॥ रस रूप वर्ण गन्ध स्पर्श शब्द स्नेह भाव । गुणात् । एकाचः ॥ **इति रसादिः** ॥ १७५ ॥

**२ । ९७ सिध्मादिभ्यश्च १९०४** ॥ सिध्म गडु मणि नाभि बीज [वीणा] कृष्ण निष्पाव पांसु पार्श्व पर्शु हनु सक्तु मास (मांस) । पार्ष्णिधमन्योर्दीर्घश्च । वातदन्तबल-ललाटानामूङ् च । [जटाघटाकटाकालाः क्षेपे । पर्ण उदक प्रज्ञा सार्ष्क कर्ण स्नेह शीत श्याम पिङ्ग पित्त पुष्क पृथु] मृदु मञ्जु [मण्ड] पत्र चटु कपि गण्डु ग्रन्थि श्री

कुश धारा वर्ष्मन् पक्ष्मन् श्लेष्मन् पेश निष्पाद् कुण्ड । क्षुद्र जन्तूपतापयोश्च ॥ **इति सिध्मादिः ॥ १७६ ॥**

**२ । १०० लोमादिपामादिपिच्छादिभ्यः शनेलचः १९०७ ॥** लोमन् रोमन् बभ्रु हरि गिरि कर्क कपि मुनि तरु ॥ **इति लोमादिः ॥ १७७ ॥** पामन् वामन् वेमन् हेमन् श्लेष्मन् कद्रु (कद्रू) वलि सामन् ऊष्मन् कृमि । अङ्गात्कल्याणे । शाकीपलाली-दद्रूणां ह्रस्वत्वं च । विष्वगित्युत्तरपदलोपश्चाकृतसंधेः । लक्ष्म्या अच्च ॥ **इति पामादिः ॥ १७८ ॥** पिच्छा उरस् धुवक ध्रुवक । जटाघटाकालाः क्षेपे । वर्णे उदक पङ्क प्रज्ञा ॥ **इति पिच्छादिः ॥ १७९ ॥**

**२ । १०३ ज्योत्स्नादिभ्य उपसंख्यानम् (वा ३२००) ॥** ज्योत्स्ना तमिस्रा कुण्डल कुतप विसर्प विपादिका ॥ **इति ज्योत्स्नादिः ॥ १८० ॥**

**२ । ११६ व्रीह्यादिभ्यश्च १९२३ ॥** व्रीहि माया [शाला] शिखा माला मेखला केका अष्टका पताका चर्मन् कर्मन् वर्मन् दंष्ट्रा संज्ञा वडवा कुमारी नौ वीणा बलाका यवखदनौ कुमारी । शीर्षान्नञः ॥ **इति व्रीह्यादिः ॥ १८१ ॥**

**२ । ११७ तुन्दादिभ्य इलच्च १९२४ ॥** तुन्द उदर पिचण्ड यव व्रीहि । स्वाङ्गाद्विवृद्धौ ॥ **इति तुन्दादिः ॥ १८२ ॥**

**२ । १२७ अर्शआदिभ्योऽच् १९३३ ॥** अर्शस् उरस् तुन्द चतुर पलित जटा [घटा] घाटा अभ्र (अघ) [कर्दम] अम्ल लवण । स्वाङ्गाद्धीनात् । वर्णात् ॥ **इत्यर्श-आदिः ॥ आकृतिगणः ॥ १८३ ॥**

**२ । १३१ सुखादिभ्यश्च १९३७ ॥** सुख दुःख तृप्त कृच्छ्र अस्र (आश्र) आस्र (अस्र) अलीक कठण सोढ प्रतीप शील हल । माला क्षेपे । [कृपण] प्रणाय (प्रणय) दल कक्ष ॥ **इति सुखादिः ॥ १८४ ॥**

**२ । १३५ पुष्करादिभ्यो देशे १९४१ ॥** पुष्कर पद्म उत्पल तमाल कुमुद नड कपित्थ बिस मृणाल कर्दम शालूक विगर्ह करीष शिरीष यवास [प्रवास] हिरण्य कैरव कल्लोल तट तरङ्ग पङ्कज सरोज राजीव नालीक सरोरुह पुटक अरविन्द अम्भोज अब्ज कमल [कल्लोल] पयस् ॥ **इति पुष्करादिः ॥ १८५ ॥**

**२ । १३६ बलादिभ्यो मतुबन्यतरस्याम् १९४२ ॥** बल उत्साह [उद्भास उद्वास] उद्वास शिखा कुल चूडा सुल कूल आयाम व्यायाम उपयाम आरोह अवरोह परिणाह [युद्ध] ॥ **इति बलादिः ॥ १८६ ॥**

**३ । १४ वृत्तिर्महणाद्भवदादियोग एव (वा ३२४४) ॥** भवान् दीर्घायुः देवानांप्रियः आयुष्मान् ॥ **इति भवदादिः ॥ १८७ ॥**

**३ । १०० देवपथादिभ्यश्च २०५५ ॥** देवपथ [हंसपथ वारिपथ रथपथ] स्थलपथ करिपथ अजपथ राजपथ शतपथ शङ्कुपथ सिन्धुपथ सिद्धगति उष्ट्रग्रीव वायरज्जु हस्त इन्द्र दण्ड पुष्प मत्स्य ॥ **इति देवपथादिः ॥ आकृतिगणः ॥ १८८ ॥**

**३ । १०३ शाखादिभ्यो यः २०५८ ॥** शाखा मुख जघन शृङ्ग मेघ अभ्र च-रण स्कन्ध स्कद (स्कन्द) उरस् शिरस् अग्र शाण ॥ **इति शाखादिः ॥ १८९ ॥**

३ । १०७ **शर्करादिभ्योऽण् २०६२** ॥ शर्करा कपालिका कपाटिका कपिष्ठिका (कनिष्ठिका) पुण्डरीक शतपत्र गोलोमन् लोमन् गोपुच्छ नराची नकुल सिकता ॥ **इति शर्करादिः** ॥ १९० ॥

३ । १०८ **अङ्गुल्यादिभ्यष्ठक् २०६३** ॥ अङ्गुली भरुज बभ्रु वल्गु मण्डर मण्डल शष्कुली हरि कपि मुनि रुह खल उदश्वित् गोणी उरस् कुलिश ॥ **इत्यङ्गुल्यादिः** ॥ १९१ ॥

३ । ११६ **दामन्यादित्रिगर्तषष्ठाच्छः २०६९** ॥ दामनि औलपि वैजवापि औदकि औदङ्कि अच्युतन्ति (आच्युतन्ति) अच्युतदन्ति (आच्युतदन्ति) शाकुन्तकि आकिदन्ति औडवि काकदन्तकि शात्रुंतपि सार्वसेनि बिन्दु बैन्दवि तुलभ मौञ्जायन काकन्दि सावित्रीपुत्र ॥ **इति दामन्यादिः** ॥ १९२ ॥

३ । ११७ **पर्श्वादियौधेयादिभ्योऽणञौ २०७०** ॥ पर्शु असुर रक्षस् बाह्लीक वयस् वसु मरुत् सत्त्वत् दशार्ह पिशाच अशनि कार्षापण ॥ **इति पर्श्वादिः** ॥ १९३ ॥ यौधेय [कौशेय] शाक्रेय शौभ्रेय धार्तेय घार्तेय ज्याबाणेय त्रिगर्त भरत उशीनर ॥ **इति यौधेयादिः** ॥ १९४ ॥

४ । ३ **स्थूलादिभ्यः प्रकारवचने कन् २०७९** ॥ स्थूल अण्ड माषेषु (माष इषु) । कृष्ण तिलेषु । यव व्रीहिषु । इक्षु तिल । पाद्यकालावदातसुरायाम् । गोमूत्र आच्छादने । सुरा अहौ । जीर्ण शालिषु । पत्रमूल समस्तो व्यस्तश्च ॥ कुमारीपुत्र कुमारीश्वशुर मणि ॥ **इति स्थूलादिः** ॥ १९५ ॥

४ । २९ **यावादिभ्यः कन् २०९७** ॥ याव मणि अस्थि [तालु] जानु सान्द्र पीत स्तम्ब । ऋतावुष्णशीते । पशौ लूनविपाते । अण्ड निपुणे । पुत्र कृत्रिमे । स्नात वेदसमाप्तौ । शून्य रिक्ते । दान कुत्सिते । तनु सूत्रे । ईयसश्च । ज्ञात अज्ञात । कुमारीक्रीडनकानि च (कुमारक्रीडनकानि च) ॥ **इति यावादिः** ॥ १९६ ॥

४ । ३४ **विनयादिभ्यष्ठक् २१०२** ॥ विनय समय । उपायो ह्रस्वत्वं च । संप्रति संगति कथंचित् अकस्मात् समाचार उपचार समाय (समयाचार) व्यवहार संप्रदान समुत्कर्ष समूह विशेष अत्यय ॥ **इति विनयादिः** ॥ १९७ ॥

४ । ३८ **प्रज्ञादिभ्यश्च २१०६** ॥ प्रज्ञ वणिज् उशिज् उष्णिज् प्रत्यक्ष [विद्वस्] विदन् षोडन् विद्या मनस् । श्रोत्र शरीरे । जुह्वत् । कृष्ण मृगे । चिकीर्षत् चोर शत्रु योध चक्षुस् वसु [एनस्] मरुत् क्रुञ्च सत्वन्तु दशार्ह वयस् [व्याकृत] असुर रक्षस् पिशाच अशनि कार्षापण देवता बन्धु ॥ **इति प्रज्ञादिः** ॥ १९८ ॥

४ । ४४ **आद्यादिभ्य उपसंख्यानम् (वा ३३४१)** ॥ आदि मध्य अन्त पृष्ठ पार्श्व ॥ **इत्याद्यादिः** ॥ **आकृतिगणः** ॥ १९९ ॥

४ । १०७ **अव्ययीभावे शरत्प्रभृतिभ्यः ६७७** ॥ शरद् विपाश् अनस् मनस् उपानह् अनडुह् दिव् हिमवत् हिरुक् विद् सद् दिश् दृश् विश् चतुर् त्यद् तद् यद् कियत् । जराया जरस् च । प्रतिपरसमनुभ्योऽक्ष्णः । पथिन् ॥ **इति शरदादिः** ॥ २०० ॥

४ । १२८ **द्विदण्ड्यादिभ्यश्च ८६७** ॥ द्विदण्डि द्विमुसलि उभाञ्जलि उभयाञ्जलि उभादन्ति उभयादन्ति उभाहस्ति उभयाहस्ति उभाकर्णि उभयाकर्णि उभापाणि उभयापाणि उभा-

बाहु उभयाबाहु एकपदि प्रोष्ठपदि आच्यपदि (आढ्यपदि) सपदि निकुच्यकर्णि संहतपुच्छि अन्तेवासि ॥ **इति द्विदण्ड्यादिः** ॥ २०१ ॥

४ । १३८ **पादस्य लोपोऽहस्त्यादिभ्यः ८७७** ॥ हस्तिन् [कुद्दाल अश्व कशिक कुरुत] कटोल कटोलक गण्डोल गण्डोलक कण्डोल कण्डोलक अज कपोत जाल गण्ड महेल दासी गणिका कुसूल ॥ **इति हस्त्यादिः** ॥ २०२ ॥

४ । १३९ **कुम्भपदीषु च ८७८** ॥ कुम्भपदी एकपदी जालपदी [शूलपदी] मुनिपदी गुणपदी शतपदी सूत्रपदी गोधापदी कलशीपदी विपदी [तृणपदी] द्विपदी त्रिपदी षट्पदी दासीपदी शितिपदी विष्णुपदी सुपदी निष्पदी आर्द्रपदी कुणिपदी कृष्णपदी शुचिपदी द्रोणीपदी (द्रोणपदी) द्रुपदी सूकरपदी शकृत्पदी अष्टापदी स्थूणापदी अपदी सूचीपदी ॥ **इति कुम्भपद्यादिः** ॥ २०३ ॥

४ । १५१ **उरःप्रभृतिभ्यः कप् ८८९** ॥ उरस् सर्पिस् उपानह् पुमान् अनड्वान् पयः नौः लक्ष्मीः दधि मधु शाली (शालिः) । अर्थान्नञः ॥ **इत्युरःप्रभृतयः** ॥ २०४ ॥

इति पञ्चमोऽध्यायः ।

---

## षष्ठोऽध्यायः ।

१ । ९४ **शकन्ध्वादिषु पररूपं वाच्यम् ( वा३६३०)** ॥ शकन्धुः कर्कन्धुः कुलटा ॥ सीमन्तः केशवेशेषु । हलीषा मनीषा लाङ्गलीषा पतञ्जलिः । सारङ्गः पशुपक्षिणोः ॥ **इति शकन्ध्वादिः** ॥ २०५ ॥

१ । १५७ **पारस्करप्रभृतीनि च संज्ञायाम् १०७१** ॥ पारस्करो देशः । कारस्करो वृक्षः । रथस्या नदी । किष्कुः प्रमाणम् । किष्किन्धा गुहा । तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च । प्रात्तुम्पतौ गवि कर्तरि ॥ **इति पारस्करादिः** ॥ २०६ ॥

१ । १६० **उञ्छादीनां च ३६८१** ॥ उञ्छ म्लेच्छ जञ्ज नल्प (जल्प) जप वध । युग कालविशेषे रथाद्युपकरणे च । गरो दूष्ये (गरो दूष्ये) । वेदवेगवेष्टबन्धाः करणे । स्तुयुद्रुवश्छन्दसि । वर्तनि स्तोत्रे । श्वभ्रे दरः । साम्बतापौ भावगर्हायाम् । उत्तमशश्वत्तमौ सर्वत्र । भक्षमन्थभोगमन्थाः । **इत्युञ्छादिः** ॥ २०७ ॥

१ । २०३ **वृषादीनां च ३६९१** ॥ वृषः जनः ज्वरः ग्रहः हयः गयः नयः तायः तयः चयः अमः वेदः सूदः अंशः गुहा । शमरणौ संज्ञायां संमतौ भावकर्मणोः । मन्त्रः शान्तिः कामः यामः आरा धारा कारा वहः कल्पः पादः ॥ **इति वृषादिः** ॥ **आकृतिगणः** ॥ अविहितलक्षणमाद्युदात्तत्वं वृषादिषु ज्ञेयम् ॥ २०८ ॥

२ । २४ **विस्पष्टादीनि गुणवचनेषु ३७५८** ॥ विस्पष्ट विचित्र विचित्त व्यक्त संपन्न पटु पण्डित कुशल चपल निपुण ॥ **इति विस्पष्टादिः** ॥ २०९ ॥

२ । ३७ **कार्तकौजपादयश्च ३७७१** ॥ कार्तकौजपौ सावर्णिमाण्डकेयौ (सावर्णिमाण्डूकेयौ) अवन्त्यश्मकाः पैलश्यापर्णेयाः कपिश्यापर्णेयाः शैतिकाक्षपाञ्चालेयाः कटुकवाधूलेयाः शाकलशुनकाः शाकलशणकाः शणकबाभ्रवाः आर्चाभिमौद्गलाः कुन्तिसुराष्ट्राः चिन्तिसुराष्ट्राः तण्डवतण्डाः अविमत्तकामविद्धाः बाभ्रवशालङ्कायनाः बाभ्रवदानच्युताः कठकालापाः कठ-

कौथुमाः कौथुमलौकाक्षाः श्रीकुमारम् मौदपैप्पलादाः वत्सजरन्तः सौश्रुतपार्थवाः जरामृत्यू याज्यानुवाक्ये ॥ **इति कार्तकौजपादिः ॥ २१० ॥**

**२। ४२ कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणां च ३७७६** ॥ दासीभारः देवहूतिः देवभीतिः देवलातिः वसुनीतिः (वसूनितिः) औषधिः चन्द्रमाः ॥ **इति दासीभारादिः ॥ आकृतिगणः ॥ २११ ॥**

**२। ८१ युक्तारोह्यादयश्च ३८१५** ॥ युक्तारोही आगतरोही आगतयोधी आगतवञ्ची आगतनन्दी आगतप्रहारी आगतमत्स्यः क्षीरहोता भगिनीभर्ता ग्रामगोधुक् अश्वत्रिरात्रः गर्गत्रिरात्रः व्युष्टित्रिरात्रः गणपादः एकशितिपाद् । पात्रेसमितादयश्च ॥ **इति युक्तारोह्यादिः ॥ २१२ ॥**

**२। ८५ घोषादिषु च ३८१९** ॥ घोष घट (कट) वल्लभ हृद बदरी पिङ्गल (पिंगली) पिशङ्ग माला रक्षा शाला (वृट्) कूट (कट्) शाल्मली अश्वत्थ तृण [शिल्पी] मुनि प्रेक्षाकू (प्रेक्षा) ॥ **इति घोषादिः ॥ २१३ ॥**

**२। ८६ छाश्यादयः शालायाम् ३८२०** ॥ छात्रि पेलि भाण्डि व्याडि आखण्डि आटि गोमि ॥ **इति छाश्यादिः ॥ २१४ ॥**

**२। ८७ प्रस्थेऽवृद्धमकर्क्यादीनाम् ३८२१** ॥ कर्कि (कर्की) मघी मकरी कर्कन्धु शमी करीरि (करीर) कन्दुक कुवल (कवल) बदरी ॥ **इति कर्क्यादिः ॥ २१५ ॥**

**२। ८८ मालादीनां च ३८२२** ॥ माला शाला शोणा (शोण) द्राक्षा ह्राक्षा क्षामा काञ्ची एक काम ॥ **इति मालादिः ॥ २१६ ॥**

**२। ११८ क्रत्वादयश्च ३८५२** ॥ क्रतु दृशीक प्रतीक प्रतूर्ति हव्य भग ॥ **इति क्रत्वादिः ॥ २१७ ॥**

**२। १२५ आदिश्चिहणादीनाम् ३८५९** ॥ चिहण मदुर मद्रुमर वैतुल पटत्क वैडालिकर्णक वैडालिकर्णि कुक्कुट चिक्कण चित्कण ॥ **इति चिहणादिः ॥ २१८ ॥**

**२। १३१ वर्ग्यादयश्च ३८६५** ॥ दिगादिषु वर्गादयस्त एव दन्ता वर्ग्यादयः ॥ **२१९ ॥**

**२। १३४ चूर्णादीन्यप्राणिषष्ठ्याः ३८६८** ॥ चूर्ण करिव करिप शाकिन शाकट द्राक्षा तूस्त कुन्दुम दलप चसमी चक्कन चौल ॥ **इति चूर्णादिः ॥ २२० ॥**

**२। १४० उभे वनस्पत्यादिषु युगपत् ३८७४** ॥ वनस्पतिः बृहस्पतिः शचीपतिः तनूनपात् नराशंसः शुनःशेपः शण्डामर्कौ तृष्णावरूत्री लम्बाविश्ववयसौ मर्मृत्युः ॥ **इति वनस्पत्यादिः ॥ २२१ ॥**

**२। १४६ संज्ञायामनाचितादीनाम् ३८८०** ॥ आचित पर्याचित आस्थापित परिगृहीत निरक्त प्रतिपन्न अपश्लिष्ट प्रश्लिष्ट उपहित उपस्थित संहितागवि ॥ **इत्याचितादिः ॥ २२२ ॥**

**२। १४७ प्रवृद्धादीनां च ३८८१** ॥ प्रवृद्धं यानम् । प्रवृद्धो वृषलः । प्रयुता सूष्णवः । आकर्षेऽवहितः । अवहितो भोगेषु । खट्वारूढः । कविशस्तः ॥ **इति प्रवृद्धादिः ॥ २२३ । आकृतिगणोऽयम्** ॥ तेन । प्रवृद्धं यानम् । अप्रवृद्धो वृषकृतो रथ इत्यादि ॥

**२। १६० क्त्योकेष्णुचार्वादयश्च ३८९४** ॥ चारु साधु यौधिक (यौधकि) अनङ्ग

मेजय वदान्य अकस्मात् । वर्तमानवर्धमानत्वरमाणध्रियमाणक्रीयमाणरोचमानशोभमानाः संज्ञायाम् । विकारसदृशे व्यस्तसमस्ते । गृहपति गृहपतिक । राजाह्नोश्छन्दसि ॥ **इति चार्वादिः ॥ २२४ ॥**

२ । १७६ **न गुणादयोऽवयवाः ३९१० ॥** गुण अक्षर अध्याय सूक्त छन्दोमान ॥ **इति गुणादिः ॥ आकृतिगणः ॥ २२५ ॥**

२ । १८४ **निरुदकादीनि च ३९१८ ॥** निरुदक निरुपल निर्मक्षिक निर्मशक निष्कालक निष्कालिक निष्पेष दुस्तरीप निस्तरीप निस्तरीक निराजिन [उदजिन] उपाजिन । परेर्हस्तपादकेशकर्षाः ॥ **इति निरुदकादिः ॥ आकृतिगणः ॥ २२६ ॥**

२ । १९३ **प्रतेरंश्वादयस्तत्पुरुषे ३९२७ ॥** अंशु जन [राजन्] उष्ट्र खेटक अजिर आर्द्रा श्रवण कृत्तिका आर्धपुर ॥ **इत्यंश्वादिः ॥ २२७ ॥**

२ । १९४ **उपाद्द्व्यजजिनमगौरादयः ३९२८ ॥** गौर तैष तैल लेट लोट जिह्वा कृष्ण कन्या गुध कल्प पाद ॥ **इति गौरादिः ॥ २२८ ॥**

२ । १९९ **त्रिचक्रादीनां छन्दस्युपसंख्यानम् (वा ३८६८) ॥** त्रिचक्र त्रिवृत् त्रिवङ्कुर ॥ **इति त्रिचक्रादिः ॥ आकृतिगणः ॥ २२९ ॥**

३ । ३४ **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ८३१ ॥** प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा भक्तिः सचिवा स्वसा (स्वा) कान्ता [क्षान्ता] समा चपला दुहिता वामना [तनया] ॥ **इति प्रियादिः ॥ २३० ॥**

३ । ३५ **तसिलादिष्वा कृत्वसुचः ८३६ ॥** तसिल् त्रत् तरप् तमप् चरट् जातीयर् कल्पप् देशीयर् रूपप् पाशप् थल् थाल् दार्हिल् तिल् थ्यन् ॥ **इति तसिलादयः ॥ २३१ ॥**

३ । ४२ **कुक्कुट्यादीनामण्डादिषु पुंवद्भावो वक्तव्यः (वा ३९३५) ॥** कुक्कुटी मृगी काकी अण्ड पद शाव भ्रुकुंस भृकुटी ॥ **इति कुक्कुट्याद्यण्डादी ॥ २३२ ॥ २३३ ॥**

३ । १०९ **पृषोदरादीनि यथोपदिष्टम् १०३४ ॥** पृषोदर पृषोत्थान बलाहक जीमूत श्मशान उलूखल पिशाच वृसी मयूर ॥ **इति पृषोदरादिः ॥ आकृतिगणः ॥ २३४ ॥**

३ । ११७ **वनगिर्योः संज्ञायां कोटरकिंशुलुकादीनाम् १०३८ ॥** कोटर मिश्रक सिध्रक पुरग सारिक (शारिक) ॥ **इति कोटरादिः ॥ २३५ ॥** किंशुलुक शाल्व नभ्र (नड) अञ्जन भञ्जन लोहित कुक्कुट ॥ **इति किंशुलुकादिः ॥ २३६ ॥**

३ । ११९ **मतौ बह्वचोऽनजिरादीनाम् १०४१ ॥** अजिर खदिर पुलिन हंसक (हंस) कारण्ड (कारण्डव) चक्रवाक ॥ **इत्यजिरादिः ॥ २३७ ॥**

३ । १२० **शरादीनां च १०४२ ॥** शर वंश धूम अहि कपि मणि मुनि शुचि हनु ॥ **इति शरादिः ॥ २३८ ॥**

३ । १२१ **अपील्वादीनामिति वक्तव्यम् (वा ४००४) ॥** पीलु दारु रुचि चारु गम् कम् ॥ **इति पील्वादिः ॥ २३९ ॥**

४ । १५३ **बिल्वकादिभ्यश्छस्य लुक् १३३१** ॥ छविधानार्थं ये नडादयस्ते यदा छसंनियोगे कृतकुगागमास्ते **बिल्वकादयः** ॥ २४० ॥

इति षष्ठोऽध्यायः ।

---

## सप्तमोऽध्यायः ।

१ । ४९ **स्नात्व्यादयश्च ३५७१** ॥ स्नात्वी पीत्वी ॥ **इति स्नात्व्यादिः** ॥ **आकृतिगणः** ॥ २४१ ॥

३ । ४ **द्वारादीनां च १३८६** ॥ द्वार स्वर [स्वाध्याय] व्यल्कश स्वस्ति स्वर् स्फ्यकृत् ( सम्यकृत् ) स्वादुमृदु[१] श्वस् श्वन् स्व ॥ **इति द्वारादिः** ॥ २४२ ॥

३ । ७ **स्वागतादीनां च १५४९** ॥ स्वागत स्वध्वर स्वङ्ग व्यङ्ग व्यड व्यवहार स्वपिति (स्वपति) ॥ **इति स्वागतादिः** ॥ २४३ ॥

३ । २० **अनुशतिकादीनां च १४३८** ॥ अनुशतिक अनुहोड अनुसंवरण (अनुसंच-रण) अनुसंवत्सर अङ्गारवेणु असिहत्य [अस्यहत्य] अस्यहेति वध्योग पुष्करसद् अनु-हरत् कुरुकत कुरुपञ्चाल उदकशुद्ध इहलोक परलोक सर्वलोक सर्वपुरुष सर्वभूमि प्रयोग परस्त्री । राजपुरुषात्ष्यञि । सूत्रनड ॥ **इत्यनुशतिकादिः** ॥ **आकृतिगणोऽयम्** ॥ २४४ ॥ तेन । अभिगम आधिभूत अधिदेव चतुर्विद्या इत्यादि ॥

३ । ४५ **क्षिपकादीनां चोपसंख्यानम्** (वा ४५२४) ॥ क्षिपका ध्रुवका चरका सेवका करका चटका अवका लहका अलका कन्यका ध्रुवका एडका ॥ **इति क्षिपकादिः** ॥ **आकृतिगणः** ॥ २४५ ॥

३ । ५३ **न्यङ्क्वादीनां च २८६४** ॥ न्यङ्कु मद्गु भृगु दूरेपाक फलेपाक क्षणेपाक दूरेपाका फलेपाका दूरेपाकु फलेपाकु तक्र (तत्र) वक्र (चक्र) व्यतिषङ्ग [अनुषङ्ग] अवसर्ग [उपसर्ग] श्वपाक मांसपाक (मासपाक) मूलपाक कपोतपाक उलूकपाक । **संज्ञायां** मेघनिदाघावदाघार्घाः । न्यग्रोध वीरुत् ॥ **इति न्यङ्क्वादिः** ॥ २४६ ॥

४ । ३ **कणादीनां चेति वक्तव्यम्** (वा ४६०७) ॥ कण रण भण श्रण लुप हेव हायि वाणि (चाणि) लोटि (लोठि) लोपि ॥ **इति कणादिः** ॥ २४७ ॥

इति सप्तमोऽध्यायः ।

---

## अष्टमोऽध्यायः ।

१ । २७ **तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ३९३४** ॥ गोत्र ब्रुव प्रवचन प्रहसन प्रकथन प्रत्ययन प्रपञ्च प्राय न्याय प्रचक्षण विचक्षण अवचक्षण स्वाध्याय भूयिष्ठ (भूयिष्ट) वानाम ॥ **इति गोत्रादिः** ॥ २४८ ॥

---

१ भिन्नपदत्वे मृदुग्रहणवैयर्थ्यम् । तत्र यकारवकाराभावात् ।

१ । ६७ **पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः ३९७४** ॥ काष्ठ दारुण अमातापुत्र वेश अनाज्ञात अनुज्ञात अपुत्र अयुत अद्भुत [अनुक्त] भृश घोर सुख परम सु अति ॥ **इति काष्ठादिः** ॥ २४९ ॥

२ । ९ **मादुपधायाश्च मतोर्वोऽयवादिभ्यः १८९७** ॥ यव दल्मि ऊर्मि (उर्मि) भूमि कृमि कुञ्चा वशा द्राक्षा ध्राक्षा ध्रजि (व्रजि) ध्वजि निजि सिजि सञ्जि हरित् ककुत् मरुत् गरुत् इक्षु द्रु मधु ॥ **इति यवादिः** ॥ **आकृतिगणः** ॥ २५० ॥

२ । ७० **अहरादीनां पत्यादिषूपसंख्यानम् (वा ३६०४)** ॥ अहर् गीर् धूर् ॥ **इत्यहरादिः** ॥ २५१ ॥ पति गण पुत्र ॥ **इति पत्यादिः** ॥ २५२ ॥

३ । ४८ **कस्कादिषु च १४४** ॥ कस्कः कौतस्कुतः भ्रातुष्पुत्रः शुनस्कर्णः सद्यस्कालः सद्यस्क्रीः साद्यस्कः कांस्कान् सर्पिष्कुण्डिका धनुष्कपालम् बर्हिष्पलम् (बर्हिष्पलम्) यजुष्पात्रम् अयस्कान्तः तमस्काण्डः अयस्काण्डः मेदस्पिण्डः [भास्करः अहस्करः] ॥ **इति कस्कादिः** ॥ **आकृतिगणः** ॥ २५३ ॥

३ । ९८ **सुषामादिषु च १०२२** ॥ सुषामा निःषामा दुःषामा सुषेधः निषेधः (निःषेधः) दुःषेधः सुषंधिः निःषंधिः दुःषंधिः सुष्ठु दुष्ठु । गौरिषक्थः संज्ञायाम् । प्रतिष्णिका जलाषाहम् (जलाषाडम्) नौषेचनम् दुन्दुभिषेवणम् (दुन्दुभिषेचनम्) एति संज्ञायामगात् । नक्षत्राद्वा । हरिषेणः रोहिणीषेणः ॥ **इति सुषामादिः** ॥ **आकृतिगणः** ॥ २५४ ॥

३ । ११० **न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ३१६८** ॥ सवने सवने । सूते सूते । सोमे सोमे । सवनमुखे सवनमुखे । किंसं किंसम् (किंसः किंसः) । अनुसवनमनुसवनम् । गोसनिं गोसनिम् । अश्वसनिमश्वसनिम् ॥ **पाठान्तरम्** ॥ सवने सवने सवनमुखे सवनमुखे । अनुसवनमनुसवनम् । संज्ञायां बृहस्पतिसवः ॥ शकुनिसवनम् । सोमे सोमे । सुते सुते । संवत्सरे संवत्सरे । बिसं बिसम् । किसं किसम् । मुसलं मुसलम् । गोसनिम् अश्वसनिम् ॥ **इति सवनादिः** ॥ २५५ ॥

४ । ६ **इरिकादिभ्यः प्रतिषेधो वक्तव्यः (वा ४९७६)** ॥ इरिका मिरिका तिमिरा ॥ **इतीरिकादिः** ॥ **आकृतिगणः** ॥ २५६ ॥

४ । १० **वाप्रकरणे गिरिनद्यादीनामुपसंख्यानम् (वा ४९८०)** ॥ गिरिनदी गिरिनख गिरिनद्ध गिरिनितम्ब चक्रनदी चक्रनितम्ब तूर्यमान माषोन आर्गयन ॥ **इति गिरिनद्यादिः** ॥ **आकृतिगणः** ॥ २५७ ॥

४ । ३९ **क्षुभ्नादिषु च ७९२** ॥ क्षुभ्ना नृनमन नन्दिन् नन्दन नगर । एतान्युत्तरपदानि संज्ञायां प्रयोजयन्ति । हरिनन्दी हरिनन्दनः गिरिनगरम् । नृतिर्यङि प्रयोजयन्ति । नरीनृत्यते । नर्तन गहन नन्दन निवेश निवास अग्नि अनूप । एतान्युत्तरपदानि प्रयोजयन्ति । परिनर्तनम् परिगहनम् परिनन्दनम् शरनिवेशः शरनिवासः शराग्निः दर्भानूपः । आचार्यादणत्वं च । आचार्यभोगीनः ॥ **आकृतिगणोऽयम्** ॥ **पाठान्तरम्** ॥ क्षुभ्ना तृप्नु नृनमन नरनगर नन्दन । यङ्नृती । गिरिनदी गृहगमन निवेश निवास अग्नि अनूप आचार्यभोगीन

चतुर्हायन। इरिकादीनि वनोत्तरपदानि संज्ञायाम्। इरिका तिमिर समीर कुबेर हरि कर्मार॥ **इति क्षुभ्नादिः॥ २९८॥**

इत्यष्टमोऽध्यायः।

इति श्रीपाणिनिमुनिप्रणीतो गणपाठः समाप्तः।

---

# (३) पाणिनीयो धातुपाठः।

१ भू सत्तायाम्॥ **उदात्तः परस्मैभाषः**॥ २ एध वृद्धौ। ३ स्पर्ध संघर्षे। ४ गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च। ५ बाधृ लोडने। ६ नाथृ ७ नाधृ याच्ञोपतापैश्वर्याशीःषु। ८ दध धारणे। ९ स्कुदि आप्रवणे। १० श्विदि श्वैत्ये। ११ वदि अभिवादनस्तुत्योः। १२ भदि कल्याणे सुखे च। १३ मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु। १४ स्पदि किंचिच्चलने। १५ क्लिदि परिदेवने। १६ मुद हर्षे। १७ दद दाने। १८ ष्वद १९ स्वर्द आस्वादने। २० उर्द माने क्रीडायां च। २१ कुर्द २२ खुर्द २३ गुर्द २४ गुद क्रीडायामेव। २५ षूद क्षरणे। २६ ह्राद अव्यक्ते शब्दे। २७ ह्लादी सुखे च। २८ स्वाद आस्वादने। २९ पर्द कुत्सिते शब्दे। ३० यती प्रयत्ने। ३१ युतृ ३२ जुतृ भासने। ३३ विथृ ३४ वेथृ याचने। ३५ श्रथि शैथिल्ये। ३६ ग्रथि कौटिल्ये। ३७ कत्थ श्लाघायाम्॥ **एधादय उदात्ता अनुदात्तेत आत्मनेभाषाः॥** ३८ अत सातत्यगमने। ३९ चिती संज्ञाने। ४० च्युतिर् आसेचने। ४१ श्चुतिर् क्षरणे। ४२ मन्थ विलोडने। ४३ कुथि ४४ पुथि ४५ लुथि ४६ मथि हिंसासंक्लेशनयोः। ४७ षिध गत्याम्। ४८ षिधू शास्त्रे माङ्गल्ये च। ४९ खादृ भक्षणे। ५० खद स्थैर्ये हिंसायां च। ५१ बद स्थैर्ये। ५२ गद व्यक्तायां वाचि। ५३ रद विलेखने। ५४ णद अव्यक्ते शब्दे। ५५ अर्द गतौ याचने च। ५६ नर्द ५७ गर्द शब्दे। ५८ तर्द हिंसायाम्। ५९ कर्द कुत्सिते शब्दे। ६० खर्द दन्दशूके। ६१ अति ६२ अदि बन्धने। ६३ इदि परमैश्वर्ये। ६४ बिदि अवयवे॥ भिदि इत्येके॥ ६५ गडि वदनैकदेशे। ६६ णिदि कुत्सायाम्। ६७ टुनदि समृद्धौ। ६८ चदि आह्लादे। ६९ त्रदि चेष्टायाम्। ७० कदि ७१ क्रदि ७२ क्लदि आह्वाने रोदने च। ७३ क्लिदि परिदेवने। ७४ शुन्ध शुद्धौ॥ **अतादय उदात्ता उदात्तेतः परस्मैभाषः॥** ७५ शीकृ सेचने। ७६ लोकृ दर्शने। ७७ श्लोकृ संघाते। ७८ देकृ ७९ ध्रेकृ शब्दोत्साहयोः। ८० रेकृ शङ्कायाम्। ८१ सेकृ ८२ स्रेकृ ८३ स्रकि ८४ श्रकि ८५ श्लकि गतौ। ८६ शकि शङ्कायाम्। ८७ अकि लक्षणे। ८८ वकि कौटिल्ये। ८९ मकि मण्डने। ९० कक लौल्ये। ९१ कुक ९२ वृक आदाने। ९३ चक तृप्तौ प्रतिघाते च। ९४ ककि ९५ वकि ९६ श्वकि ९७ त्रकि ९८ ढौकृ ९९ त्रौकृ १०० ष्वष्क १०१ वस्क १०२ मस्क १०३ टिकृ १०४ टीकृ १०५ तिकृ १०६ तीकृ १०७ रघि १०८ लघि गत्यर्थाः॥ तृतीयो दन्त्यादिरित्येके। लघि भोजननिवृत्तावपि॥ १०९ अघि ११० वघि १११ मघि गत्याक्षेपे। मघि कैतवे च॥ ११२ राघृ ११३ लाघृ ११४ द्राघृ सामर्थ्ये॥ ध्राघृ इत्यपि केचित्। द्राघृ आयामे च॥ ११५ श्लाघृ कत्थने॥ **शीकादय उदात्ता अनुदात्तेत आत्मनेभाषाः॥** ११६ फक्क नीचै-

गतौ । ११७ तक हसने । ११८ तकि कृच्छ्रजीवने । ११९ बुक्क भषणे । १२० कख हसने । १२१ ओखृ १२२ राखृ १२३ लाखृ १२४ द्राखृ १२५ ध्राखृ शोषणालमर्थयोः । १२६ शाखृ १२७ श्लाखृ व्याप्तौ । १२८ उख १२९ उखि १३० वख १३१ वखि १३२ मख १३३ मखि १३४ णख १३५ णखि १३६ रख १३७ रखि १३८ लख १३९ लखि १४० इख १४१ इखि १४२ ईखि १४३ वल्ग १४४ रगि १४५ लगि १४६ अगि १४७ वगि १४८ मगि १४९ तगि १५० त्वगि १५१ श्रगि १५२ श्लगि १५३ इगि १५४ रिगि १५५ लिगि गत्यर्थाः ॥ रिख त्रख त्रिखि शिखि इत्यापि केचित् । त्वगि कम्पने च ॥ १५६ युगि १५७ जुगि १५८ बुगि वर्जने । १५९ घघ हसने । १६० मघि मण्डने । १६१ शिघि आघ्राणे ॥ **फक्काद्य उदात्ता उदात्तेतः परस्मैभाषाः** ॥ १६२ वर्च दीप्तौ । १६३ षच सेचने सेवने च । १६४ लोचृ दर्शने । १६५ शच व्यक्तायां वाचि । १६६ श्वच १६७ श्वचि गतौ । १६८ कच बन्धने । १६९ कचि १७० काचि दीप्तिबन्धनयोः । १७१ मच १७२ मुचि कल्कने ॥ कथन इत्यन्ये ॥ १७३ मचि धारणोच्छ्रायपूजनेषु । १७४ पचि व्यक्तीकरणे । १७५ ष्टुच प्रसादे । १७६ ऋज गतिस्थानार्जनोपार्जनेषु । १७७ ऋजि १७८ भृजी भर्जने । १७९ एजृ १८० भ्रेजृ १८१ भ्राजृ दीप्तौ । १८२ ईज गतिकुत्सनयोः ॥ **वर्चाद्य उदात्ता अनुदात्तेत आत्मनेभाषाः** ॥ १८३ शुच शोके । १८४ कुच शब्दे तारे । १८५ कुन्च १८६ क्रुन्च कौटिल्याल्पीभावयोः । १८७ लुन्च अपनयने । १८८ अन्चु गतिपूजनयोः । १८९ वन्चु १९० चन्चु १९१ तन्चु १९२ त्वन्चु १९३ मुन्चु १९४ म्लुन्चु १९५ मुचु १९६ म्लुचु गत्यर्थाः । १९७ ग्रुचु १९८ ग्लुचु १९९ कुजु २०० खुजु स्तेयकरणे । २०१ ग्लुन्चु २०२ षस्ज गतौ । २०३ गुजि अव्यक्ते शब्दे । २०४ अर्च पूजायाम् । २०५ म्लेछ अव्यक्ते शब्दे । २०६ लछ २०७ लाछि लक्षणे । २०८ वाछि इच्छायाम् । २०९ आछि आयामे । २१० ह्रीछ लज्जायाम् । २११ हुर्छा कौटिल्ये । २१२ मुर्छा मोहसमुच्छ्राययोः । २१३ स्फुर्छा विस्तृतौ । २१४ युछ प्रमादे । २१५ उछि उञ्छे । २१६ उर्छी विवासे । २१७ ध्रज २१८ ध्रजि २१९ धृज २२० धृजि २२१ ध्वज २२२ ध्वजि गतौ । २२३ कूज अव्यक्ते शब्दे । २२४ अर्ज २२५ षर्ज अर्जने । २२६ गर्ज शब्दे । २२७ तर्ज भर्त्सने । २२८ कर्ज व्यथने । २२९ खर्ज पूजने च । २३० अज गतिक्षेपणयोः । २३१ तेज पालने । २३२ खज मन्थे । २३३ खजि गतिवैकल्ये । २३४ एजृ कम्पने । २३५ टुओस्फूर्जा वज्रनिर्घोषे । २३६ क्षि क्षये । २३७ क्षीज अव्यक्ते शब्दे । २३८ लज २३९ लजि भर्जने । २४० लाज २४१ लाजि भर्त्सने च । २४२ जज २४३ जजि युद्धे । २४४ तुज हिंसायाम् । २४५ तुजि पालने । २४६ गज २४७ गजि २४८ गृज २४९ गृजि २५० मुज २५१ मुजि शब्दार्थाः । गज मदने च । २५२ वज २५३ व्रज गतौ ॥ **शुचाद्य उदात्ता उदात्तेतः (क्षिवर्जं) परस्मैभाषाः** ॥ २५४ अट्ट अतिक्रमहिंसयोः । २५५ वेष्ट वेष्टने । २५६ चेष्ट चेष्टायाम् । २५७ गोष्ट २५८ लोष्ट संघाते । २५९ घट्ट चलने । २६० स्फुट विकसने । २६१ अठि गतौ । २६२ वठि एकचर्यायाम् । २६३ मठि २६४ कठि शोके । २६५ मुठि पालने । २६६ हेठ विबाधायाम् । २६७ एठ च । २६८ हिडि गत्यनादरयोः । २६९ हडि संघाते । २७० कुडि दाहे । २७१ वडि विभाजने । २७२ मडि च । २७३ भडि परिभाषणे । २७४ पिडि संघाते । २७५

मुडि मार्जने । २७६ तुडि तोडने । २७७ हुडि वरणे ॥ हरण इत्येके ॥ २७८ चडि कोपे । २७९ शडि रुजायां संघाते च । २८० तडि ताडने । २८१ पडि गतौ । २८२ कडि मदे । २८३ खडि मन्थे । २८४ हेडृ २८५ होडृ अनादरे । २८६ बाडृ आप्लाव्ये । २८७ द्राडृ २८८ ध्राडृ विशरणे । २८९ शाडृ श्लाघायाम् ॥ **अहादय उदात्ता अनुदात्तेत आत्मनेभाषाः** ॥ २९० शौटृ गर्वे । २९१ यौटृ बन्धे । २९२ म्लेटृ २९३ म्रेडृ उन्मादे । २९४ कटे वर्षावरणयोः ॥ चटे इत्येके ॥ २९५ अट २९६ पट गतौ । २९७ रट परिभाषणे । २९८ लट बाल्ये । २९९ शट रुजाविशरणगत्यवसादनेषु । ३०० वट वेष्टने । ३०१ किट ३०२ खिट त्रासे । ३०३ शिट ३०४ षिट अनादरे । ३०५ जट ३०६ झट संघाते । ३०७ भट भृतौ । ३०८ तट उच्छ्राये । ३०९ खट काङ्क्षायाम् । ३१० णट नृतौ । ३११ पिट शब्दसंघातयोः । ३१२ हट दीप्तौ ३१३ षट अवयवे । ३१४ लुट विलोडने ॥ डान्तोऽयमित्येके ॥ ३१५ चिट परप्रेष्ये । ३१६ विट शब्दे । ३१७ बिट आक्रोशे ॥ हिट इत्येके ॥ ३१८ इट ३१९ किट ३२० कटी गतौ । ३२१ मडि भूषायाम् । ३२२ कुडि वैकल्ये । ३२३ मुड ३२४ प्रुड मर्दने । ३२५ चुडि अल्पीभावे । ३२६ मुडि खण्डने ॥ पुडि चेत्येके ॥ ३२७ रुटि ३२८ लुटि स्तेये ॥ रुठि लुठि इत्येके । रुडि लुडि इत्यपरे ॥ ३२९ स्फुटिर् विशरणे ॥ स्फुटि इत्यपि केचित् ॥ ३३० पठ व्यक्तायां वाचि । ३३१ वठ स्थौल्ये । ३३२ मठ मदनिवासयोः । ३३३ कठ कृच्छ्रजीवने । ३३४ रट परिभाषणे ॥ रठ इत्येके ॥ ३३५ हठ प्लुतिशठत्वयोः ॥ बलात्कार इत्यन्ये ॥ ३३६ रुठ ३३७ लुठ ३३८ उठ उपघाते ॥ ऊठ इत्येके ॥ ३३९ पिठ हिंसासंक्लेशनयोः । ३४० शठ कैतवे च । ३४१ शुठ प्रतिघाते ॥ शुठि इति स्वामी । ३४२ कुठि च । ३४३ लुठि आलस्ये प्रतिघाते च । ३४४ शुठि शोषणे । ३४५ रुठि ३४६ लुठि गतौ । ३४७ चुड्ड भावकरणे । ३४८ अड्ड अभियोगे । ३४९ कड्ड कार्कश्ये ॥ चुड्डादयस्त्रयो दोपधाः ॥ ३५० क्रीडृ विहारे । ३५१ तुडृ तोडने ॥ तूडृ इत्येके ॥ ३५२ हुडृ ३५३ हूडृ ३५४ होडृ गतौ । ३५५ रौडृ अनादरे । ३५६ रोडृ ३५७ लोडृ उन्मादे । ३५८ अड उद्यमे । ३५९ लड विलासे ॥ लल इत्येके ॥ ३६० कड मदे ॥ कडि इत्येके ॥ ३६१ गडि वदनैकदेशे ॥ **शौटादय उदात्ता उदात्तेतः परस्मैभाषाः** ॥ ३६२ तिपृ ३६३ तेपृ ३६४ ष्टिपृ ३६५ ष्टेपृ क्षरणार्थाः ॥ तेपृ कम्पने च ॥ ३६६ ग्लेपृ दैन्ये । ३६७ टुवेपृ कम्पने । ३६८ केपृ ३६९ गेपृ ३७० ग्लेपृ च । ३७१ मेपृ ३७२ रेपृ ३७३ लेपृ गतौ ॥ ३७४ त्रपूष् लज्जायाम् । ३७५ कपि चलने । ३७६ रबि ३७७ लबि ३७८ अबि शब्दे । ३७९ लबि अवस्रंसने च । ३८० कबृ वर्णे । ३८१ क्लीबृ अधाष्टर्ये । ३८२ क्षीबृ मदे । ३८३ शीभृ कत्थने । ३८४ चीभृ च । ३८५ रेभृ शब्दे ॥ अभिरभी क्वचित्पठ्येते ॥ ३८६ ष्टभि ३८७ स्कभि प्रतिबन्धे । ३८८ जभि ३८९ जृभि गात्रविनामे । ३९० शल्भ कत्थने । ३९१ वल्भ भोजने । ३९२ गल्भ धाष्टर्ये । ३९३ श्रन्भु प्रमादे ॥ दन्त्यादिश्च ॥ ३९४ ष्टुभु स्तम्भे ॥ **तिप्यादय उदात्ता अनुदात्तेत आत्मनेभाषाः** । **तिपिस्त्वनुदात्तः** ॥ ३९५ गुपू रक्षणे । ३९६ धूप संतापे । ३९७ जप ३९८ जल्प व्यक्तायां वाचि । जप मानसे च । ३९९ चप सान्त्वने । ४०० षप समवाये । ४०१ रप ४०२ लप व्यक्तायां वाचि । ४०३ चुप मन्दायां गतौ । ४०४ तुप ४०५ तुन्प ४०६ त्रुप

४०७ त्रुन्प ४०८ तुफ ४०९ तुन्फ ४१० भुफ ४११ भ्रुम्फ हिंसार्थाः । ४१२ वर्प ४१३ रफ ४१४ रफि ४१५ अर्ब ४१६ पर्ब ४१७ लर्ब ४१८ बर्ब ४१९ मर्ब ४२० कर्ब ४२१ खर्ब ४२२ गर्ब ४२३ शर्ब ४२४ षर्ब ४२५ चर्ब गतौ । ४२६ कुबि आच्छादने । ४२७ लुबि ४२८ तुबि अर्दने । ४२९ चुबि वक्त्रसंयोगे । ४३० षृभु ४३१ षृम्भु हिंसार्थौ । षिभु षिम्भु इत्येके ॥ ४३२ शुभ ४३३ शुम्भ भाषणे ॥ भासन इत्येके । हिंसायामित्यन्ये ॥ गुपादय उदात्ता उदात्तेतः परस्मैभाषाः ॥ ४३४ घिणि ४३५ घुणि ४३६ घृणि ग्रहणे । ४३७ घुण ४३८ घूर्ण भ्रमणे । ४३९ पण व्यवहारे स्तुतौ च । ४४० पन च । ४४१ भाम क्रोधे । ४४२ क्षमूष् सहने । ४४३ कमु कान्तौ ॥ घिण्यादय उदात्ता अनुदात्तेत आत्मनेभाषाः ॥ ४४४ अण ४४५ रण ४४६ वण ४४७ भण ४४८ मण ४४९ कण ४५० क्वण ४५१ व्रण ४५२ भ्रण ४५३ ध्वण शब्दार्थाः ॥ धण इत्यपि केचित् ॥ ४५४ ओणृ अपनयने । ४५५ शोणृ वर्णगत्योः । ४५६ श्रोणृ संघाते । ४५७ श्लोणृ च । ४५८ पैणृ गतिप्रेरणश्लेषणेषु । ४५९ ध्रन शब्दे ॥ बण इत्यपि केचित् ॥ ४६० कनी दीप्तिकान्तिगतिषु । ४६१ ष्टन ४६२ वन शब्दे । ४६३ वन ४६४ षण संभक्तौ । ४६५ अम गत्यादिषु । ४६६ द्रम ४६७ हम्म ४६८ मीमृ गतौ । ४६९ चमु ४७० छमु ४७१ जमु ४७२ झमु अदने । ४७३ क्रमु पाद-विक्षेपे ॥ अणादय उदात्ता उदात्तेतः परस्मैभाषाः ॥ ४७४ अय ४७५ वय ४७६ पय ४७७ मय ४७८ चय ४७९ तय ४८० णय गतौ । ४८१ दय दानगतिरक्षणहिंसादानेषु । ४८२ रय गतौ । ४८३ ऊयी तन्तुसंताने । ४८४ पूयी विशरणे दुर्गन्धे च । ४८५ क्नूयी शब्दे उन्दे च । ४८६ क्ष्मायी विधूनने । ४८७ स्फायी ४८८ ओप्यायी वृद्धौ । ४८९ तायृ संतानपालनयोः । ४९० शल चलनसंवरणयोः । ४९१ वल ४९२ वल्ल संवरणे संचरणे च । ४९३ मल ४९४ मल्ल धारणे । ४९५ भल ४९६ भल्ल परिभाषणहिंसादानेषु । ४९७ कल शब्दसंख्यानयोः । ४९८ कल्ल अव्यक्ते शब्दे ॥ अशब्द इति स्वामी ॥ ४९९ तेवृ ५०० देवृ देवने । ५०१ षेवृ ५०२ गेवृ ५०३ ग्लेवृ ५०४ पेवृ ५०५ मेवृ ५०६ म्लेवृ सेवने ॥ शेवृ खेवृ क्लेवृ इत्येके ॥ ५०७ रेवृ प्लवगतौ ॥ अयादय उदात्ता अनुदात्तेत आत्मनेभाषाः ॥ ५०८ मव्य बन्धने । ५०९ सूर्क्ष्य ५१० ईर्क्ष्य ५११ ईर्ष्य ईर्ष्यार्थाः । ५१२ हय गतौ । ५१३ शुच्य अभिषवे ॥ चुच्य इत्येके ॥ ५१४ हर्य गतिकान्त्योः । ५१५ अल भूषणपर्याप्तिवारणेषु ॥ अयं स्वरितेदित्येके ॥ ५१६ ञिफला विशरणे । ५१७ मील ५१८ श्मील ५१९ स्मील ५२० क्ष्मील निमेषणे । ५२१ पील प्रतिष्टम्भे । ५२२ नील वर्णे । ५२३ शील समाधौ । ५२४ कील बन्धने । ५२५ कूल आवरणे । ५२६ शूल रुजायां संघोषे च । ५२७ तूल निष्कर्षे । ५२८ पूल संघाते । ५२९ मूल प्रतिष्ठायाम् । ५३० फल निष्पत्तौ ॥ ५३१ चुल्ल भावकरणे । ५३२ फुल्ल विकसने । ५३३ चिल्ल शैथिल्ये भावकरणे च । ५३४ तिल गतौ ॥ तिल्ल इत्येके ॥ ५३५ वेल ५३६ चेल ५३७ केल ५३८ खेल ५३९ क्ष्वेल ५४० वेल्ल चलने । ५४१ पेल ५४२ फेल ५४३ शेल गतौ ॥ षेल इत्येके ॥ ५४४ स्खल संचलने । ५४५ खल संचये । ५४६ गल अदने । ५४७ षल गतौ । ५४८ दल विशरणे । ५४९ श्वल ५५० श्वल्ल आशुगमने । ५५१ खोल ५५२ खोर्ऋ गतिप्रतिघाते । ५५३ धोर्ऋ गतिचातुर्ये । ५५४ त्सर छद्मगतौ । ५५५ क्मर हूर्च्छने । ५५६ अभ्र ५५७ वभ्र ५५८ मभ्र ५५९ चर गत्यर्थाः ॥

रेषु विवृतत्वात् । ५७ अग्रहणं चेन्नुड्विधिलादेशविनामेष्वृकारग्रहणम् । ५८ प्लुतावैच इदुतौ । ५९ तुल्यरूपे संयोगे द्विव्यञ्जनविधिः ॥

हयवरट् (प्र ५) ॥ ६० हकारस्य परोपदेशेऽड्ग्रहणेषु हग्रहणम् । ६१ उत्वे च । ६२ पूर्वोपदेशे किन्त्वक्त्वेड्विधयो झल्ग्रहणानि च । ६३ रेफस्य परोपदेशेऽननुनासिकद्विर्वचनपरसवर्णप्रतिषेधः । ६४ पूर्वोपदेशे किन्त्वप्रतिषेधो व्यलोपवचनं च । ६५ अयोगवाहानामट्सु णत्वम् । ६६ शर्षु जश्भावषत्वे । ६७ अविशेषेण संयोगोपधासंज्ञालोन्त्यद्विर्वचनस्थानिवद्भावप्रतिषेधाः । ६८ अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात् । ६९ वर्णव्यत्यये चार्थान्तरगमनात् । ७० वर्णानुपलब्धौ चानर्थगतेः । ७१ संघातार्थवत्त्वाच्च । ७२ संघातस्यैकार्थ्यात्सुबभावो वर्णात् । ७३ अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेः । ७४ वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनात् । ७५ प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न । ७६ आचारात् । ७७ अप्रधानत्वात् । ७८ लोपश्च बलवत्तरः । ७९ उकालोऽजिति वा योगस्तत्कालानां यथा भवेत् । अचां ग्रहणमच्कार्यं तेनैषां न भविष्यति ८० अनुवर्तते विभाषा शरोऽचि यद्वारयिष्यं द्वित्वम् । ८१ नित्ये हि तस्य लोपे प्रतिषेधार्थो न कश्चित्स्यात् ॥

लण् (प्र ६) ॥ ८२ सवर्णेऽण् तपरं ह्युकेत् । ८३ ह्वोरन्यत्र परेणेण् स्यात् ॥

ञमङणनम् । झभञ् (प्र ७ । ८) ॥ ८४ अक्षरं न क्षरं विद्यात् । ८५ अश्नोतेर्वा सरोऽक्षरम् । ८६ वर्णं वाहुः पूर्वसूत्रे । ८७ किमर्थमुपदिश्यते । ८८ वर्णज्ञानं वाग्विषयो यत्र च ब्रह्म वर्तते । ८९ तदर्थमिष्टबुद्ध्यर्थं लघ्वर्थं चोपदिश्यते ॥

---

## प्रथमोऽध्यायः ।

१ । १ वृद्धिरादैच् १६ ॥ ९० संज्ञाधिकारः संज्ञाप्रत्ययार्थः । ९१ इतरथा ह्यसंप्रत्ययो यथा लोके । ९२ संज्ञासंज्ञ्यसंदेहश्च । ९३ आचार्याचारात्संज्ञासिद्धिः । ९४ यथा लौकिकवैदिकेषु । ९५ संज्ञासंज्ञ्यसंदेहश्च (सिद्धः) । ९६ अनाकृतिः (संज्ञा) । ९७ लिङ्गेन वा । ९८ सतो वृद्ध्यादिषु संज्ञाभावात्तदाश्रय इतरेतराश्रयत्वादप्रसिद्धिः । ९९ सिद्धं तु नित्यशब्दत्वात् । १०० किमर्थं शास्त्रमिति चेन्निवर्तकत्वात्सिद्धम् । १०१ (प्रत्येकं गुणवृद्धिसंज्ञे भवतः इति वक्तव्यम्) । १०२ अन्यत्र सहवचनात्समुदाये संज्ञाप्रसङ्गः । १०३ प्रत्यवयवं च वाक्यपरिसमाप्तेः । १०४ आकारस्य तपरकरणं सवर्णार्थम् ॥

१ । ३ इको गुणवृद्धी ३४ ॥ १०५ इग्ग्रहणमात्संध्यक्षरव्यञ्जननिवृत्त्यर्थम् । १०६ संज्ञया विधाने नियमः । १०७ वृद्धिगुणावलोऽन्त्यस्येति चेन्मिदिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणम् । १०८ सर्वदेशप्रसङ्गश्चानिगन्तस्य । १०९ इग्मात्रस्येति चेज्जुसिसार्वधातुकार्धधातुकह्रस्वाद्योर्गुणेष्वनन्त्यप्रतिषेधः । ११० पुगन्तलघूपधग्रहणमनन्त्यनियमार्थम् । १११ वृद्धिग्रहणमुत्तरार्थम् । ११२ मृज्यर्थमिति चेद्योगविभागात्सिद्धम् । ११३ वृद्धिप्रतिषेधानुपपत्तिस्त्विक्प्रकरणात् । ११४ तस्मादिग्लक्षणा वृद्धिः । ११५ षष्ठ्याः स्थानेयोगत्वादिग्निवृत्तिः । ११६ अन्यतरार्थं पुनर्वचनम् । ११७ प्रसारणे च । ११८ विषयार्थं पुनर्वचनम् । ११९ उरण्परे च । १२० सिद्धं तु षष्ठ्यधिकारे वचनात् ॥

१ । ४ न धातुलोप आर्धधातुके २६९६ ॥ १२१ यङ्यक्क्यवलोपे प्रतिषेधः । १२२

नुम्लोपास्त्रिम्यनुबन्धलोपेऽप्रतिषेधार्थम् । १२३ इक्प्रकरणान्नुम्लोपे वृद्धिः । १२४ निपातनात्स्यदादिषु । १२५ प्रत्ययाश्रयत्वादन्यत्र सिद्धम् । १२६ रकि ज्यः संप्रसारणम् । १२७ अल्लोपस्य स्थानिवत्त्वात् । १२८ अनारम्भो वा ॥

१।५ **क्ङिति च २२१७** ॥ १२९ क्ङिति प्रतिषेधे तन्निमित्तग्रहणम् । १३० उपधा रोरवीत्यर्थम् । १३१ शत्रङन्तस्यान्तरङ्गलक्षणत्वात् । १३२ तद्धितकाम्योरिक्प्रकरणात् । १३३ लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावप्रसङ्गः । १३४ लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावप्रसङ्ग इति चेद्यासुटो ङिद्वचनात्सिद्धम् ॥

१।६ **दीधीवेवीटाम् २१९०** ॥ १३५ दीधीवेव्योश्छन्दोविषयत्वादृष्टानुविधित्वाच्च छन्दसोऽदीधेददीधयुरिति च गुणदर्शनादप्रतिषेधः । १३६ दीध्यादिति च श्यन् व्यत्ययेन ॥

१।७ **हलोऽनन्तराः संयोगः ३०** ॥ १३७ संयोगसंज्ञायां सहवचनं यथान्यत्र । १३८ समुदाये संयोगादिलोपो मस्जेः । १३९ द्वयोर्हलोः संयोग इति चेद्द्विर्वचनम् । १४० न वाज्विधेः । १४१ स्वरानन्तर्हितवचनम् । १४२ दृष्टमानन्तर्यं व्यवहितेऽपि । १४३ आनन्तर्यवचनं किमर्थमिति चेदेकप्रतिषेधार्थम् । १४४ न वातज्जातीयकव्यवायात् ॥

१।९ **तुल्यास्यप्रयत्नं सवर्णम् १०** ॥ १४५ सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गः प्रयत्नसाम्यात् । १४६ सिद्धं त्वास्ये तुल्यदेशप्रयत्नं सवर्णम् । १४७ तस्य । १४८ तस्यावचनं वचनप्रामाण्यात् । १४९ संबन्धिशब्दैर्वा तुल्यम् । १५० ऋकारल्कारयोः सवर्णविधिः ॥

१।१० **नाज्झलौ १३** ॥ १५१ अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वात् । १५२ तत्र सवर्णलोपे दोषः । १५३ सिद्धमनच्त्वात् । १५४ वाक्यापरिसमाप्तेर्वा ॥

१।११ **ईदूदेद्द्विवचनं प्रगृह्यम् १००** ॥ १५५ ईदादयो द्विवचनं प्रगृह्या इति चेदन्त्यस्य विधिः । १५६ ईदाद्यन्तामिति चेदेकस्य विधिः । १५७ न वाद्यन्तवत्त्वात् । १५८ ईदाद्यन्तं द्विवचनान्तमिति चेल्लुकि प्रतिषेधः । १५९ सप्तम्यामर्थग्रहणं ज्ञापकं प्रत्ययलक्षणप्रतिषेधस्य ॥

१।१२ **अदसो मात् १०१** ॥ १६० मात्प्रगृह्यसंज्ञायां तस्यादयावेकादेशप्रतिषेधः । १६१ वचनार्थो हि सिद्धे । १६२ विप्रतिषेधाद्वा । १६३ आश्रयात्सिद्धत्वं च यथा रोरुत्वे । १६४ असिद्धे ह्युत्व आद्गुणाप्रसिद्धिः । १६५ तत्र सकि दोषः । १६६ न वा ग्रहणविशेषणत्वात् ॥

१।१३ **शे १०२** ॥ १६७ शेऽर्थवद्ग्रहणात् ॥

१।१५ **ओत् १०४** ॥ १६८ ओतश्च्विप्रतिषेधः ॥

१।१७ **उञः १०६** ॥ १६९ उञ इति योगविभाग ः ॥

१।१८ **ऊँ १०७** ॥ १७० ऊँ वा शाकल्यस्य ॥

१।१९ **ईदूतौ च सप्तम्यर्थे १०९** ॥ १७१ ईदूतौ सप्तमीत्येव । १७२ लुतेऽर्थग्रहणाद्भवेत् । १७३ पूर्वस्य चेत्सवर्णोऽसावाडाम्भावः प्रसज्यते । १७४ वचनाद्यत्र दीर्घत्वम् । १७५ तत्रापि सरसी यदि । १७६ ज्ञापकं स्यात्तदन्तत्वे । १७७ मा वा पूर्वपदस्य भूत् ॥

१।२० **दाधा घ्वदाप् २३७३** ॥ १७८ घुसंज्ञायां प्रकृतिग्रहणं शिदर्थम् । ('–शिद्विकृतार्थम्' इति भारद्वाजीयपाठः) । १७९ समानशब्दप्रतिषेधः । १८० समानशब्दाप्रतिषेधोऽर्थवद्ग्रहणात् । १८१ अनुपसर्गाद्वा । १८२ न वार्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यते

यथान्यत्र । १८३ दीङः प्रतिषेधः स्थाघ्वोरित्त्वे । १८४ दाप्प्रतिषेधे न दैप्यनेजन्तत्वात् । १८५ सिद्धमनुबन्धस्यानेकान्तत्वात् । १८६ पित्प्रतिषेधाद्वा ॥

**१ । २१ आद्यन्तवदेकस्मिन् ३४८** ॥ १८७ सत्यन्यास्मिन्नाद्यन्तवद्भावादेकस्मिन्नाद्यन्तवद्वचनम् । १८८ तत्र व्यपदेशिवद्वचनम् । १८९ एकाचो द्वे प्रथमार्थम् । १९० षत्वे चादेशसंप्रत्ययार्थम् । १९१ अवचनाल्लोकविज्ञानात्सिद्धम् । १९२ अपूर्वानुत्तरलक्षणत्वादाद्यन्तयोः सिद्धमेकास्मिन् । १९३ आदिवत्त्वे प्रयोजनं प्रत्ययाञ्निदाद्युदात्तत्वे । १९४ वलादेरार्धधातुकस्येट् । १९५ यस्मिन्विधिस्तदादित्वे । १९६ अजाद्याट्त्वे । १९७ अन्तवद्द्विवचनान्तप्रगृह्यत्वे । १९८ मिदचोऽन्त्यात्परः । १९९ अचोऽन्त्यादि टि । २०० अलोऽन्त्यस्य । २०१ येन विधिस्तदन्तत्वे ॥

**१ । २२ तरप्तमपौ घः २००३** ॥ २०२ घसंज्ञायां नदीतरे प्रतिषेधः । २०३ घसंज्ञायां नदीतरेऽप्रतिषेधः । २०४ तरब्ग्रहणं ह्यौपदेशिकम् ॥

**१ । २३ बहुगणवतुडति संख्या २९८** ॥ २०५ संख्यासंज्ञायां संख्याग्रहणम् । २०६ संख्यासंप्रत्ययार्थम् । २०७ इतरथा ह्यसंप्रत्ययोऽकृत्रिमत्वाद्यथा लोके । २०८ उत्तरार्थं च । २०९ अध्यर्धग्रहणं च समासकन्विध्यर्थम् । २१० लुकि चाग्रहणम् । २११ अर्धपूर्वपदश्च पूरणप्रत्ययान्तः । २१२ अधिकग्रहणं चालुकि समासोत्तरपदवृद्ध्यर्थम् । २१३ बहुव्रीहौ चाग्रहणम् । २१४ बह्वादीनामग्रहणम् ॥

**१ । २४ ष्णान्ता षट् ३६९** ॥ २१५ षट्संज्ञायामुपदेशवचनम् । २१६ शताद्यष्टनोर्नुम्डर्थम् ॥

**१ । २६ क्तक्तवतू निष्ठा ३०१२** ॥ २१७ निष्ठासंज्ञायां समानशब्दप्रतिषेधः । २१८ निष्ठासंज्ञायां समानशब्दाप्रतिषेधः । २१९ अनुबन्धोऽन्यत्वकरः । २२० अनुबन्धोऽन्यत्वकर इति चेन्न लोपात् । २२१ सिद्धविपर्यासश्च । २२२ कारककालविशेषात्सिद्धम् । २२३ लुङि सिजादिदर्शनात् ॥

**१ । २७ सर्वादीनि सर्वनामानि २१३** ॥ २२४ सर्वनामसंज्ञायां निपातनाण्णत्वाभावः । २२५ संज्ञोपसर्जनप्रतिषेधः । २२६ पाठात्पर्युदासः पठितानां संज्ञाकरणम् । २२७ सर्वाद्यनन्तर्यैकार्यार्थम् । २२८ प्रयोजनं डतरादीनामद्भावे । २२९ त्यदादिविधौ च । २३० उभस्य सर्वनामत्वेऽकजर्थः । २३१ अन्याभावो द्विवचनटाब्विषयत्वात् । २३२ उभयोऽन्यत्र । २३३ अवचनादापि तत्पराविज्ञानमिति चेत्केऽपि तुल्यम् । २३४ भवतोऽकच्छेषात्वानि ॥

**१ २९ न बहुव्रीहौ २२२** ॥ २३५ प्रतिषेधे भूतपूर्वस्योपसंख्यानम् । २३६ प्रतिषेधे भूतपूर्वस्योपसंख्यानानर्थक्यं पूर्वादीनां व्यवस्थायामिति वचनात् ॥

**१ । ३४ पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् २१८** ॥ २३७ अवरादीनां च पुनः सूत्रपाठे ग्रहणानर्थक्यं गणे पठितत्वात् ॥

**१ । ३६ अन्तरं बहिर्योगोपसंव्यानयोः २२०** ॥ २३८ उपसंव्यानग्रहणमनर्थकं बहिर्योगेण कृतत्वात् । २३९ न वा शाटकयुगाद्यर्थम् । २४० अपुरीति वक्तव्यम् ('गणसूत्र एतत्कर्तव्यम्' इति कैयटः) । २४१ वाप्रकरणे तीयस्य ङित्सूपसंख्यानम् ॥

**१ । ३८ तद्धितश्चासर्वविभक्तिः ४४८** ॥ २४२ असर्वविभक्तावविभक्तिनिमित्तस्योपसं-

ख्यानम् । २४३ सर्वविभक्त्यर्थविशेषात् । २४४ अलादीनां चोपसंख्यानम् । २४५ अविभक्ताविनेतराश्रयत्वादप्रसिद्धिः । २४६ अलिङ्गमसंख्यमिति वा । २४७ सिद्धं तु पाठात् ॥

**१ । ३९ कृन्मेजन्तः ४४९** ॥ २४८ कृन्मेजन्तश्चानिकारोकारप्रकृतिः । २४९ अनन्यप्रकृतिरिति वा । २५० न वा सांनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति । २५१ प्रयोजनं ह्रस्वत्वं तुग्विधेर्ग्रामणि कुलम् । २५२ नलोपो वृत्रहभिः । २५३ उदुपधमकित्त्वस्य निकुचिते । २५४ नाभावो यञि दीर्घत्वस्यामुना । २५५ आत्त्वं कित्त्वस्योपादास्त । २५६ तिसृचतसृत्वं ङीब्विधेः । २५७ तस्य दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्य । २५८ आत्त्वं पुग्विधेः क्षापयति । २५९ पुग्घ्रस्वत्वस्यादीदपत् । २६० त्यदाद्यकारष्टाब्विधेः । २६१ इड्विधिराकारलोपस्य पपिवान् । २६२ मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य । २६३ नदीह्रस्वत्वं संबुद्धिलोपस्य ॥

**१ । ४१ अव्ययीभावश्च ४५१** ॥ २६४ अव्ययीभावस्याव्ययत्वे प्रयोजनं लुग्मुखस्वरोपचाराः ॥

**१ । ४२-४३ शि सर्वनामस्थानम् ३१३ । सुडनपुंसकस्य २२९** ॥ २६५ शि सर्वनामस्थानं सुडनपुंसकस्येति चेज्जसि शिप्रतिषेधः । २६६ नाप्रतिषेधात् । २६७ अप्राप्तेर्वा ॥

**१ । ४४ न वेति विभाषा २४** ॥ २६८ नवेति विभाषायामर्थसंज्ञाकरणम् । २६९ शब्दसंज्ञायां ह्यर्थासंप्रत्ययो यथान्यत्र । २७० इतिकरणोऽर्थनिर्देशार्थः । २७१ समानशब्दप्रतिषेधः । २७२ न वा विधिपूर्वकत्वात्प्रतिषेधसंप्रत्ययो यथा लोके । २७३ विध्यनित्यत्वमनुपपन्नं प्रतिषेधसंज्ञाकरणात् । २७४ सिद्धं तु प्रसज्यप्रतिषेधात् । २७५ विप्रतिषिद्धं तु । २७६ न वा प्रसङ्गसामर्थ्यादन्यत्र प्रतिषेधविषयात् । २७७ विधिप्रतिषेधयोर्युगपद्वचनानुपपत्तिः । २७८ भवतीति चेन्न प्रतिषेधः । २७९ नेति चेन्न विधिः । २८० सिद्धं तु पूर्वस्योत्तरेण बाधितत्वात् । २८१ साध्वनुशासनेऽस्मिन्यस्य विभाषा तस्य साधुत्वम् । २८२ द्वेधाप्रतिपत्तिः । २८३ कार्ये युगपदन्वाचययौगपद्यम् । २८४ आचार्यदेशशीलने च तद्विषयता । २८५ तत्कीर्तने च द्वेधाप्रतिपत्तिः । २८६ अप्राप्ते त्रिसंशयाः (अधिकारोऽयम्) । २८७ द्वन्द्वे च विभाषा जसि । २८८ ऊर्णोतेर्विभाषा । २८९ विभाषोपयमने । २९० अनुपसर्गाद्वा । २९१ विभाषा वृक्षमृगादीनाम् । २९२ उपविदजागृभ्योऽन्यतरस्याम् । २९३ दीपादीनां विभाषा । २९४ विभाषाप्रेप्रथमपूर्वेषु । २९५ तृन्नादीनां विभाषा । २९६ एकहलादौ पूरयितव्येऽन्यतरस्याम् । २९७ श्वादेरिञि पदान्तस्यान्यतरस्याम् । २९८ सपूर्वायाः प्रथमाया विभाषा । २९९ ग्रो यङ्चाचि विभाषा । ३०० प्राप्ते च (अयमधिकारोऽतः) । ३०१ विभाषा विप्रलापे । ३०२ विभाषोपपदेन प्रतीयमाने । ३०३ तिरोऽन्तर्धौ, विभाषा कृञि । ३०४ अधिरीश्वरे, विभाषा कृञि । ३०५ दिवस्तदर्थस्य, विभाषोपसर्गे । ३०६ उभयत्र च (अतोऽयमधिकारः) । ३०७ हृक्रोरन्यतरस्याम् । ३०८ न यदि, विभाषा साकाङ्क्षे । ३०९ विभाषा श्वेः । ३१० विभाषा संघुषास्वनाम् ॥

**१ । ४५ इग्यणः संप्रसारणम् ३५८** ॥ ३११ संप्रसारणसंज्ञायां वाक्यसंज्ञा चेद्वर्णविधिः । ३१२ वर्णसंज्ञा चेन्निर्वृत्तिः । ३१३ विभक्तिविशेषनिर्देशस्तु ज्ञापक उभयसंज्ञात्वस्य ॥

**१ । ४६ आद्यन्तौ टकितौ ३६** ॥ ३१४ टकितोराद्यन्तविधाने प्रत्ययप्रतिषेधः । ३१५

परवचनात्सिद्धम् । ३१६ परवचनात्सिद्धमिति चेन्नापवादत्वात् । ३१७ सिद्धं तु षष्ठ्यधिकारे वचनात् । ३१८ आद्यन्तयोर्वा षष्ठ्यर्थत्वात्तदभावे संप्रत्ययः ॥

**१ । ४७ मिदचोऽन्त्यात्परः ३७** ॥ ३१९ मिदचोऽन्त्यात्पर इति स्थानपरप्रत्ययापवादः । ३२० अन्त्यात्पूर्वो मस्जेरनुषङ्गसंयोगादिलोपार्थम् । ३२१ भर्जिमच्योंश्च । ३२२ अभक्ते दीर्घनलोपस्वरणत्वानुस्वारशीभावाः । ३२३ परादौ गुणवृद्ध्यौत्त्वदीर्घनलोपानुस्वारशीभावे नकारप्रतिषेधः । ३२४ पूर्वान्ते नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च । ३२५ न वा बहिरङ्गलक्षणत्वात् ॥

**१ । ४८ एच इग्घ्रस्वादेशे ३२३** ॥ ३२६ एच इक् सवर्णाकारनिवृत्त्यर्थम् । ३२७ दीर्घप्रसङ्गः । ३२८ दीर्घाप्रसङ्गस्तु निवर्तकत्वात् । ३२९ सिद्धमेङः सस्थानत्वात् । ३३० ऐचोश्चोत्तरभूयस्त्वात् ॥

**१ । ४९ षष्ठी स्थानेयोगा ३८** ॥ ३३१ षष्ठ्याः स्थानेयोगवचनं नियमार्थम् । ३३२ अवयवषष्ठ्यादिष्वतिप्रसङ्गः शासो गोह इति । ३३३ अवयवषष्ठ्यादीनां चाप्राप्तिर्योगस्यासंदिग्धत्वात् । ३३४ विशिष्टा वा षष्ठी स्थानेयोगा ॥

**१ । ५० स्थानेऽन्तरतमः ३९** ॥ ३३५ स्थानिन एकत्वनिर्देशादनेकादेशनिर्देशाच्च सर्वप्रसङ्गः, तस्मात्स्थानेऽन्तरतमवचनम् । ३३६ स्थानेऽन्तरतमनिर्वर्तके स्थानिनिर्वृत्तिः । ३३७ निर्वृत्तप्रतिपत्तौ निर्वृत्तिः । ३३८ अनर्थकं च । ३३९ प्रत्यात्मवचनं च । ३४० प्रत्यात्मवचनमशिष्यं स्वभावसिद्धत्वात् । ३४१ अन्तरतमवचनं च । ३४२ व्यञ्जनस्वरव्यतिक्रमे च तत्कालप्रसङ्गः । ३४३ अक्षु चानेकवर्णादेशेषु । ३४४ गुणवृद्ध्येज्भावेषु च । ३४५ ऋवर्णस्य गुणवृद्धिप्रसङ्गे सर्वप्रसङ्गोऽविशेषात् । ३४६ न वा ऋवर्णस्य स्थाने रपरप्रसङ्गादवर्णस्यान्तर्यम् । ३४७ सर्वादेशप्रसङ्गस्त्वनेकाल्त्वात् । ३४८ न वानेकाल्त्वस्य तदाश्रयत्वादृवर्णादेशस्याविघातः । ३४९ संप्रयोगो वा नष्टाश्वदग्धरथवत् । ३५० एजवर्णयोगदेशेऽवर्णं स्थानिनोऽवर्णप्रधानत्वात् । ३५१ सिद्धं तूभयान्तर्यात् ॥

**१ । ५१ उरण्रपरः ७०** ॥ ३५२ उरण्रपरवचनमन्यनिवृत्त्यर्थं चेदुदात्तादिषु दोषः । ३५३ य उः स्थाने स रपर इति चेद्गुणवृद्ध्योरवर्णाप्रतिपत्तिः । ३५४ सिद्धं तु प्रसङ्गे रपरत्वात् । ३५५ आदेशो रपर इति चेद्रीरिविधिषु रपरप्रतिषेधः । ३५६ उदात्तादिषु च । ३५७ एकादेशस्योपसंख्यानम् । ३५८ अवयवग्रहणात्सिद्धम् । ३५९ अवयवग्रहणात्सिद्धमिति चेदादेशे रान्तप्रतिषेधः । ३६० अभक्ते दीर्घलत्वयगभ्यस्तस्वरहलादिशेषविसर्जनीयप्रतिषेधः प्रत्ययाव्यवस्था च । ३६१ पूर्वान्ते वैवधारणं विसर्जनीयप्रतिषेधो यक्स्वरश्च । ३६२ परादावकारलोपैत्वपुक्प्रतिषेधश्चङ्युपधाह्रस्वत्वमिटोऽव्यवस्थाभ्यासलोपोऽभ्यस्तादिस्वरो दीर्घत्वं च ॥

**१ । ५२ अलोऽन्त्यस्य ४२** ॥ ३६३ अलोऽन्त्यस्येति स्थाने विज्ञातस्यानुसंहारः । ३६४ इतरथा ह्यनिष्टप्रसङ्गः । ३६५ योगशेषे च ॥

**१ । ५३ ङिच्च ४३** ॥ ३६६ तातङि ङित्करणस्य सावकाशत्वाद्विप्रतिषेधात्सर्वादेशः ॥

**१ । ५४ आदेः परस्य ४४** ॥ ३६७ अलोऽन्त्यस्यादेः परस्यानेकाल्शित्सर्वस्येत्यपवादविप्रतिषेधात्सर्वादेशः ॥

**१ । ५६ स्थानिवदादेशोऽनल्विधौ ४९** ॥ ३६८ स्थान्यादेशपृथक्त्वादादेशे स्थानि-

वदनुदेशो गुरुवद्गुरुपुत्र इति यथा । ३६९ अल्विधौ प्रतिषेधेऽविशेषणेऽप्राप्तिस्त-स्यादर्शनात् । ३७० सामान्यातिदेशे विशेषानतिदेशः । ३७१ सत्याश्रये विधिरिष्टः । ३७२ प्रतिषेधस्तु प्राप्नोत्यल्विधित्वात् । ३७३ न वानुदेशिकस्य प्रतिषेधादितरेण भावः । ३७४ आदेश्याल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्धिप्रतिषेधः । ३७५ आदेश्यादेश इति चेत्सुतिङ्कृद-तिदिष्टेषूपसंख्यानम् । ३७६ एकदेशविकृतस्योपसंख्यानम् । ३७७ एकदेशविकृतस्यानन्य-त्वात्सिद्धम् । ३७८ अनित्यविज्ञानं तु तस्मादुपसंख्यानम् । ३७९ एकदेशविकृतेषूपसंख्यानम् । ३८० अनादेशत्वात् । ३८१ रूपान्यत्वाच्च । ३८२ आदेशः स्थानिवदिति चेन्नानाश्रितत्वात् ॥ ३८३ आश्रय इति चेदल्विधिप्रसङ्गः । इति भारद्वाजीयपाठः) । ३८४ अनुपपन्नं स्थान्या-देशत्वं नित्यत्वात् । ३८५ सिद्धं तु यथा लौकिकवैदिकेष्वभूतपूर्वेऽपि स्थानशब्दप्रयोगात् । ३८६ कार्यविपरिणामाद्वा सिद्धम् । ३८७ अपवादप्रसङ्गस्तु स्थानिवत्त्वात् । ३८८ सिद्धं तु षष्ठीनिर्देशस्य स्थानिवद्वचनात् । ३८९ तस्य दोषस्तयादेश उभये प्रतिषेधः । ३९० जात्या-ख्याया वचनातिदेशे स्थानिवद्भावप्रतिषेधः । ३९१ ङ्याब्ग्रहणेऽदीर्घः । ३९२ आहिभुवो-रीट्प्रतिषेधः । ३९३ वध्यादेशे वृद्धितत्वप्रतिषेधः । ३९४ इड्विधिश्च । ३९५ आकारान्तान्नु-क्प्रतिषेधः । ३९६ लोडादेशे शाभावजभावधित्वहिलोपैत्वप्रतिषेधः । ३९७ त्र्यादेशे स्रन्त-प्रतिषेधः । ३९८ आम्विधौ च । ३९९ स्वरे वस्वादेशे । ४०० गोः पूर्वणित्त्वात्त्वस्वरेषु । ४०१ करोतिपिब्योः प्रतिषेधः ॥

१ । ५७ **अचः परस्मिन्पूर्वविधौ** ५० ॥ ४०२ अपरविधाविति वक्तव्यम् । ४०३ अचः पूर्वत्वविज्ञानादैचोः सिद्धम् । ४०४ तत्रादेशलक्षणप्रतिषेधः । ४०५ असिद्धव-चनात्सिद्धम् । ४०६ असिद्धवचनात्सिद्धमिति चेदुत्सर्गलक्षणानामनुदेशः । ४०७ असिद्धव-चनात्सिद्धमिति चेन्नान्यस्यासिद्धवचनादन्यस्य भावः । ४०८ तस्मात्स्थानिवद्वचनमसिद्धत्वं च । ४०९ काममतिदिश्यतां वा सच्चासच्चापि नेह भारोऽस्ति । कल्प्यो हि वाक्यशेषो वाक्यं वक्त-र्यधीनं हि ॥ ४१० अनन्तरस्य चेदेकाननुदात्तद्विगुस्वरगतिनिघातेषूपसंख्यानम् । ४११ पूर्वमात्रस्येति चेदुपधाह्रस्वत्वम् । ४१२ गुरुसंज्ञा च । ४१३ न वा संयोगस्यापूर्वविधित्वात् । ४१४ एकादेशस्योपसंख्यानम् । ४१५ उभयनिमित्तत्वात् । ४१६ उभयादेशत्वाच्च । ४१७ हलचोरादेशः स्थानिवदिति चेद्विंशतेस्तिलोप एकादेशः । ४१८ केकयमित्रय्वोरियादेश एत्वम् । ४१९ उत्तरपदलोपे च । ४२० यङ्लोपे यणियङुवङः । ४२१ अस्थानिवत्त्वे यङ्लोपे गुणवृद्धिप्रतिषेधः । ४२२ अविशेषेण स्थानिवदिति चेल्लोपयणादेशे गुरुविधिः । ४२३ द्विर्वचनादयश्च प्रतिषेधे । ४२४ क्सलोपे लुग्वचनम् । ४२५ हन्तेर्घत्वम् । ४२६ ग्रहणेषु स्थानिवदिति चेज्जग्ध्यादिष्वादेशप्रतिषेधः । ४२७ यणादेशो युलोपेत्त्वानुनासिकात्त्वप्रतिषेधः । ४२८ रायात्वप्रतिषेधश्च । ४२९ दीर्घे यलोपप्रतिषेधः । ४३० अतो दीर्घे यलोपवचनम् ॥

१ । ५८ **न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु** ५१ ॥ ४३१ प्रतिषेधे स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत् । ४३२ क्विलुगुपधात्वचङ्पर-निर्ह्रासकुत्वेषूपसंख्यानम् । ४३३ पूर्वत्रासिद्धे च । ४३४ प्रयोजनं क्सलोपः सलोपे । ४३५ दध आकारलोप आदिचतुर्थत्वे । ४३६ हलो यमां यमि लोपे । ४३७ अल्लोपणिलोपौ संयो-

गान्तलोपप्रभृतिषु । ४३८ द्विर्वचनादीनि च । ४३९ वरेयलोपस्वरवर्जम् । ४४० तस्य दोषः संयोगादिलोपलत्वणत्वेषु ॥

**१ । ५९ द्विर्वचनेऽचि २२४३** ॥ ४४१ आदेशो स्थानिवदनुदेशात्तद्वतो द्विर्वचनम् । ४४२ तत्राभ्यासरूपम् । ४४३ अज्ग्रहणं तु ज्ञापकं रूपस्थानिवद्भावस्य । ४४४ तत्र गाङ्प्रतिषेधः । ४४५ कृत्येजन्तादिवादिनामधातुष्वभ्यासरूपम् । ४४६ प्रत्यय इति चेत्कृत्येजन्तादिवादिनामधातुष्वभ्यासरूपम् । ४४७ द्विर्वचननिमित्तेऽचि स्थानिवदिति चेण्णौ स्थानिवद्वचनम् । ४४८ ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्य ॥

**१ । ६० अदर्शनं लोपः ५३** ॥ ४४९ सर्वप्रसङ्गस्तु सर्वस्यानत्रादृष्टत्वात् । ४५० तत्र प्रत्ययलक्षणप्रतिषेधः । ४५१ सिद्धं तु प्रसक्तादर्शनस्य लोपसंज्ञित्वात् ॥

**१ । ६१ प्रत्ययस्य लुक्श्लुलुपः २६०** ॥ ४५२ लुमति प्रत्ययग्रहणमप्रत्ययसंज्ञाप्रतिषेधार्थम् । ४५३ प्रयोजनं तद्धितलुकि कंसीयपरशव्ययोर्लुकि च गोप्रकृतिनिवृत्त्यर्थम् । ४५४ योगविभागात्सिद्धम् । ४५५ कंसीयपरशव्ययोर्विशिष्टनिर्देशात्सिद्धम् । ४५६ षष्ठीनिर्देशार्थं तु । ४५७ अनिर्देशे हि षष्ठ्यर्थाप्रसिद्धिः । ४५८ सर्वादेशार्थं वा वचनप्रामाण्यात् । ४५९ उत्तरार्थं तु ॥

**१ । ६२ प्रत्ययलोपे प्रत्ययलक्षणम् २६२** ॥ ४६० प्रत्ययलोपे प्रत्ययलक्षणवचनं सदन्वाख्यानाच्छास्त्रस्य । ४६१ लुक्युपसंख्यानम् । ४६२ लोपे हि विधानम् । ४६३ न वादर्शनस्य लोपसंज्ञित्वात् । ४६४ प्रत्ययादर्शनं तु लुमत्संज्ञम् । ४६५ तत्र लुकि श्लुविधिप्रतिषेधः । ४६६ न वा पृथक्संज्ञाकरणात् । ४६७ लुमति प्रतिषेधाद्वा । ४६८ सतो निमित्ताभावात्पदसंज्ञाभावः । ४६९ तुग्दीर्घत्वयोश्च विप्रतिषेधानुपपत्तिरेकयोगलक्षणत्वात्परिवीरिति । ४७० सिद्धं तु स्थानिसंज्ञानुदेशादान्यभाव्यस्य । ४७१ भसंज्ञाङीपृष्फगोरात्त्वेषु च सिद्धम् । ४७२ तस्य दोषो ङीनकारलोपेत्त्वेम्विधयः । ४७३ प्रयोजनमग्न्काशिलोपे नुममामौ गुणवृद्धिदीर्घत्वेमडाट्भाम्विधयः । ४७४ भसंज्ञाङीपृष्फगोरात्वेषु च दोषः ॥

**१ । ६३ न लुमताङ्गस्य २६३** ॥ ४७५ लुमति प्रतिषेध एकपदस्वरस्योपसंख्यानम् । ४७६ सर्वामन्त्रितसिज्लुकस्वरवर्जम् । ४७७ प्रयोजनं ञ्नित्किलुकि स्वराः । ४७८ पथिमथो सर्वनामस्थाने । ४७९ अह्नो रविधौ । ४८० उत्तरपदत्वे चापदादिविधौ । ४८१ द्वन्द्वेऽन्त्यस्य । ४८२ सिच उसो प्रसङ्ग आकारप्रकरणात् । ४८३ युष्मदस्मदोः स्थग्रहणात् । ४८४ आमि लिलोपात्तस्य चानिघातस्तस्माच्च निघातः । ४८५ अङ्गाधिकार इष्टो विधिप्रतिषेधौ । ४८६ क्रमेर्दीर्घत्वं च । ४८७ न लुमता तस्मिन्निति चेद्धानिणिङादेशास्तलोपे ॥

**१ । ६५ अलोऽन्त्यात्पूर्व उपधा २४९** ॥ ४८८ उपधासंज्ञायामल्ग्रहणमन्त्यनिर्देशश्चेत्संघातप्रतिषेधः । ४८९ अन्त्यविज्ञानात्सिद्धम् । ४९० अन्त्यविज्ञानात्सिद्धमिति चेन्नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे । ४९१ प्रयोजनमव्यक्तानुकरणस्यात इतौ । ४९२ घ्वसोरेद्धावभ्यासलोपश्च । ४९३ आपि लोपोऽकोऽनचि । ४९४ अत्र लोपोऽभ्यासस्य । ४९५ अलोऽन्त्यात्पूर्वो लुपधेति वा । ४९६ अवचनाल्लोकविज्ञानात्सिद्धम् ॥

**१ । ६६-६७ तस्मिन्निति निर्दिष्टे पूर्वस्य ४० । तस्मादित्युत्तरस्य ४१** ॥ ४९७ निर्दिष्टग्रहणमानन्तर्यार्थम् । ४९८ तस्मिंस्तस्मादिति पूर्वोत्तरयोर्योगयोरविशेषान्नियमार्थं

वचनं दध्युदकं पचत्योदनम् । ४९९ उभयनिर्देशे विप्रतिषेधात्पञ्चमीनिर्देशः । ५०० प्रयोजनमतो लसार्वधातुकानुदात्तत्वे । ५०१ बहोरिष्ठादीनामादिलोपे । ५०२ गोतो णित् । ५०३ रुदादिभ्यः सार्वधातुके । ५०४ आने मुगीदासः । ५०५ आमि सर्वनाम्नः सुट् । ५०६ घेर्ङित्याण्नद्याः । ५०७ याडापः । ५०८ ङमो ह्रस्वादचि ङमुण्नित्यम् । ५०९ विभक्तिविशेषनिर्देशानवकाशत्वादविप्रतिषेधः । ५१० यथार्थं वा षष्ठीनिर्देशः । ५११ प्रकल्पकमिति चेन्नियमाभावः । ५१२ प्रकृतिविकाराव्यवस्था च । ५१३ सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीप्रकॢप्तिस्तत्रोभयकार्यप्रसङ्गः ॥

१ । ६८ स्वं रूपं शब्दस्याशब्दसंज्ञा २९ ॥ ५१४ शब्देनार्थगतेरर्थस्यासंभवात्तद्वाचिनः संज्ञाप्रतिषेधार्थं स्वं रूपवचनम् । ५१५ न वा शब्दपूर्वको ह्यर्थे संप्रत्ययस्तस्मादर्थनिवृत्तिः । ५१६ संज्ञाप्रतिषेधानर्थक्यं वचनप्रामाण्यात् । ५१७ मन्त्राद्यर्थमिति चेच्छास्त्रसामर्थ्यादर्थगतेः सिद्धम् । ५१८ सित्तद्विशेषाणां वृक्षाद्यर्थम् । ५१९ पित्पर्यायवचनस्य च स्वाद्यर्थम् । ५२० जित्पर्यायवचनस्यैव राजाद्यर्थम् । ५२१ झित्तस्य च तद्विशेषाणां च मत्स्याद्यर्थम् ॥

१ । ६९ अणुदित्सवर्णस्य चाप्रत्ययः १४ ॥ ५२२ अण्सवर्णस्येति स्वरानुनासिक्यकालभेदात् । ५२३ तत्र प्रत्याहारग्रहणे सवर्णाग्रहणमनुपदेशात् । ५२४ ह्रस्वसंप्रत्ययादिति चेदुच्चार्यमाणसंप्रत्यायकत्वाच्छब्दस्यावचनम् । ५२५ वर्णपाठ उपदेश इति चेदवरकालत्वात्परिभाषाया अनुपदेशः । ५२६ तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनण्त्वात् । ५२७ सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात् । ५२८ अनन्यत्वाच्च । ५२९ अनेकान्तो ह्यनन्यत्वकरः । ५३० तद्वच्च हल्ग्रहणेषु । ५३१ द्रुतविलम्बितयोश्चानुपदेशात् । ५३२ वृत्तिपृथक्त्वं तु नोपलभ्यते । ५३३ तस्मात्तत्र तपरनिर्देशात्सिद्धम् ॥

१ । ७० तपरस्तत्कालस्य १९ ॥ ५३४ तपरस्तत्कालस्येति नियमार्थमिति चेद्दीर्घग्रहणे स्वरभिन्नाग्रहणम् । ५३५ प्रापकमिति चेद्ध्रस्वग्रहणे दीर्घप्लुतप्रतिषेधः । ५३६ विप्रतिषेधात्सिद्धम् । ५३७ द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कालभेदात् । ५३८ सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद्वृत्तयो विशेष्यन्ते । ५३९ भेर्याघातवत् ॥

१ । ७१ आदिरन्त्येन सहेता २ ॥ ५४० आदिरन्त्येन सहेतेत्यसंप्रत्ययः संज्ञिनोऽनिर्देशात् । ५४१ सिद्धं त्वादिरिता सह तन्मध्यस्येति वचनात् । ५४२ संबन्धिशब्दैर्वा तुल्यम् ॥

१ । ७२ येन विधिस्तदन्तस्य २६ ॥ ५४३ येन विधिस्तदन्तस्येति चेद्ग्रहणोपाधीनां तदन्तोपाधिप्रसङ्गः । ५४४ सिद्धं तु विशेषणविशेष्ययोर्यथेष्टत्वात् । ५४५ समासप्रत्ययविधौ प्रतिषेधः । ५४६ उगिद्वर्णग्रहणवर्जम् । ५४७ अकच्भम्वतः सर्वनामाव्ययधातुविधावुपसंख्यानम् । ५४८ सिद्धं तु तदन्तान्तवचनात् । ५४९ तदेकदेशविज्ञानाद्वा सिद्धम् । ५५० प्रयोजनं सर्वनामाव्ययसंज्ञायाम् । ५५१ उपपदविधौ भयाढ्यादिग्रहणम् । ५५२ ङीब्विधावुगिद्ग्रहणम् । ५५३ प्रतिषेधे स्वस्रादिग्रहणम् । ५५४ अपरिमाणबिस्तादिग्रहणं च प्रतिषेधे । ५५५ दिति । ५५६ रोण्या अण् । ५५७ तस्य च । ५५८ रथसीताहलेभ्यो यद्विधौ । ५५९ सुसर्वार्धदिक्शब्देभ्यो जनपदस्य । ५६० ऋतोर्वृद्धिमद्विधाववयवानाम् । ५६१ ठञ्विधौ संख्यायाः । ५६२ धर्मान्नञः । ५६३ पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च । ५६४ प्रयोजनमिष्टकेषीकामालानां चिततूलभारिषु । ५६५ महदप्स्वसृनप्तॄणां दीर्घविधौ । ५६६ पद्युष्मदस्मदस्थ्याद्यनडुहो नुम् । ५६७ युन-

थिमथिपुंगोसखिचतुरनडुह्ग्रहणम् । ५६८ त्यदादिविधिभक्त्यादिक्तीग्रहणं च । ५६९ वर्णग्रहणं च सर्वत्र । ५७० प्रत्ययग्रहणं चापञ्चम्याः । ५७१ यस्मिन्विधिस्तदादावल्ग्रहणे ॥

१ । ७३ वृद्धिर्यस्याचामादिस्तद्वृद्धम् १३३९ ॥ ५७२ वृद्धसंज्ञायामजसंनिवेशादनादित्वम् । ५७३ एकान्तादित्वे च सर्वप्रसङ्गः । ५७४ सिद्धमजाकृतिनिर्देशात् । ५७५ व्यञ्जनस्याविद्यमानत्वं यथान्यत्र । ५७६ वा नामधेयस्य । ५७७ गोत्रोत्तरपदस्य च । ५७८ गोत्रान्ताद्वासमस्तवत् । ५७९ जिह्वाकात्यहरितकात्यवर्जम् ॥

२ । १ गाङ्कुटादिभ्योऽञ्णिन्ङित् २४६१ ॥ ५८० ङित्किद्वचने तयोरभावादप्रसिद्धिः । ५८१ भवतीति चेदादेशप्रतिषेधः । ५८२ संज्ञाकरणे क्ङिद्ग्रहणेऽसंप्रत्ययः शब्दभेदात् । ५८३ तद्वदतिदेशेऽकिद्विधिप्रसङ्गः । ५८४ सिद्धं तु प्रसज्य प्रतिषेधात् । ५८५ सर्वत्र सन्नन्तादात्मनेपदप्रतिषेधः । ५८६ सिद्धं तु पूर्वस्य कार्यातिदेशात् । ५८७ पृथगनुबन्धत्वे प्रयोजनं वचिस्वपियजादीनामसंप्रसारणं सार्वधातुकचङादिषु । ५८८ जाग्रोऽगुणविधिः । ५८९ कुटादीनामिट्प्रतिषेधः । ५९० क्त्वायां कित्प्रतिषेधश्च ॥

२ । ४ सार्वधातुकमपित् २२३४ ॥ ५९१ अपिन्ङिदिति चेच्छ्वेकादेशप्रतिषेध आदिवत्त्वात् । ५९२ न पिन्ङिदिति चेदुत्तमैकादेशप्रतिषेधः ॥

२ । ५ असंयोगाल्लिट् कित् २२४२ ॥ ५९३ ऋदुपधेभ्यो लिटः कित्त्वं गुणाद्विप्रतिषेधेन ।

२ । ६ इन्धिभवतिभ्यां च ३३९३ ॥ ५९४ इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां किद्वचनानर्थक्यम् ॥

२ । ९ इको झल् २६१२ ॥ ५९५ इकः कित्त्वं गुणो मा भूत् । ५९६ दीर्घारम्भात् । ५९७ कृते भवेत् । ५९८ अनर्थकं तु । ५९९ ह्रस्वार्थम् । ६०० दीर्घाणां तु प्रसज्यते । ६०१ सामर्थ्याद्धि पुनर्भाव्यम् । ६०२ ऋदित्त्वं दीर्घसंश्रयम् । ६०३ दीर्घाणां नाकृते दीर्घे । ६०४ णिलोपस्तु प्रयोजनम् ॥

२ । १० हलन्ताच्च २६१३ ॥ ६०५ दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धम् ॥

२ । १७ स्थाघ्वोरिच्च २३८९ ॥ ६०६ इच्च कस्य तकारेत्त्वम् । ६०७ दीर्घो मा भूत् । ६०८ ऋतेऽपि सः । ६०९ अनन्तरे प्लुतो मा भूत् । ६१० प्लुतश्च विषये स्मृतः ॥

२ । १८ न क्त्वा सेट् ३३२२ ॥ ६११ न सेडिति कृते कित्त्वे । ६१२ निष्ठायामवधारणात् । ६१३ ज्ञापकान्न परोक्षायाम् । ६१४ सनि झल्ग्रहणं विदुः । ६१५ इत्त्वं कित्संनियोगेन । ६१६ रेण तुल्यं सुधीवनि । ६१७ वस्त्वर्थम् । ६१८ किदतीदेशात् । ६१९ निगृहीतिः । ६२० क्त्वा च विग्रहात् ॥

२ । २१ उदुपधाद्भावादिकर्मणोरन्यतरस्याम् ३०५६ ॥ ६२१ उदुपधाच्छपः ॥

२ । २२ पूङः क्त्वा च ३०५१ ॥ ६२२ पूङः क्त्वानिष्ठयोरिटि वा प्रसङ्गः सेट्प्रकरणात् । ६२३ न वा सेट्त्वस्याकिदाश्रयत्वादनिटि वा कित्त्वम् । ६२४ इड्विधौ ह्यग्रहणम् । ६२५ ('नित्यमकित्त्वमिडाद्योः क्त्वाग्रहणमुत्तरार्थम्' इति भारद्वाजीयपाठः) ॥

२ । २६ रलो व्युपधाद्धलादेः संश्च २६१७ ॥ ६२६ रलः क्त्वासनोः कित्त्वम् ॥

२ । २७ ऊकालोऽज्झ्रस्वदीर्घप्लुतः ४ ॥ ६२७ ह्रस्वादिषु समसंख्याप्रसिद्धिर्निर्देशवैषम्यात् ।

६२८ सिद्धं तु समसंख्यत्वात् । ६२९ त्रयाणां हि विकारनिर्देशः । ६३० दीर्घप्लुतयोस्तु पूर्वसंज्ञाप्रसङ्गः । ६३१ सिद्धं तु तपरनिर्देशात् ॥

**२ । २८ अचश्च ३९** ॥ ६३२ ह्रस्वादिविधिरलोऽन्त्यस्येति चेद्यचिप्रच्छिश्रमादिप्रभृतिहानिगमिदीर्घेष्वज्ग्रहणम् । ६३३ अचश्चेन्नपुंसकह्रस्वाकृत्सार्वधातुकनामिदीर्घेष्वनन्त्यप्रतिषेधः । ६३४ संज्ञया विधाने नियमः । ६३५ अज्ग्रहणं संयोगाच्समुदायनिवृत्त्यर्थम् ॥

**२ । २९-३० उच्चैरुदात्तः ५ । नीचैरनुदात्तः ६** ॥ ६३६ उच्चनीचस्यानवस्थितत्वात्संज्ञाप्रसिद्धिः । ६३७ सिद्धं तु समानप्रक्रमवचनात् ॥

**२ । ३१ समाहारः स्वरितः ७** ॥ ६३८ समाहारोऽचोश्चेन्नाभावात् । ६३९ गुणयोश्चेन्नाच्प्रकरणात् । ६४० सिद्धं त्वच्समुदायस्याभावात्तद्गुणे संप्रत्ययः ॥

**२ । ३२ तस्यादित उदात्तमर्धह्रस्वम् ८** ॥ ६४१ स्वरितस्यार्धह्रस्वोदात्तादोदात्तस्वरितपरस्य सन्नतरादूर्ध्वमुदात्तादनुदात्तस्य स्वरिताकार्यं स्वरितादिति सिद्ध्यर्थम् । ६४२ स्वरितोदात्तार्थं च । ६४३ स्वरितोदात्ताचास्वरितार्थम् । ६४४ स्वरितपरसन्नतरार्थं च । ६४५ देवब्रह्मणोरनुदात्तवचनं ज्ञापकं स्वरितादिति सिद्धत्वस्य ॥

**२ । ३७ न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ३६६६** ॥ ६४६ सुब्रह्मण्यायामोकार उदात्तः । ६४७ आकार आख्याते परादिश्च । ६४८ वाक्यादौ च द्वे द्वे । ६४९ मघवन्वर्जम् । ६५० सुत्यापराणामन्तः । ६५१ असावित्यन्तः । ६५२ अमुष्येत्यन्तः । ६५३ स्यान्तस्योपोत्तमं च । ६५४ वा नामधेयस्य ॥

**२ । ३८ देवब्रह्मणोरनुदात्तः ३६६७** ॥ ६५५ देवब्रह्मणोरनुदात्तत्वमेके ॥

**२ । ३९ स्वरितात्संहितायामनुदात्तानाम् ३६६८** ॥ ६५६ स्वरितात्संहितायामनुदात्तानामिति चेद्व्येकयोरैकश्रुत्यवचनम् । ६५७ अविशेषेणैकश्रुत्यमिति चेद्व्यवहितानामप्रसिद्धिः । ६५८ अनेकमपीति तु वचनात्सिद्धम् ॥

**२ । ४१ अपृक्त एकाल्प्रत्ययः २५१** ॥ ६५९ अपृक्तसंज्ञायां हल्ग्रहणं स्वादिलोपे हलोऽग्रहणार्थम् । ६६० अणिञोर्लुगर्थमल्ग्रहणम् । ६६१ अणिञोर्लुगर्थमिति चेण्णेऽतिप्रसङ्गः । ६६२ वचनप्रामाण्यादिति चेत्फाग्निवृत्त्यर्थं वचनम् । ६६३ पैलादिषु वचनात्सिद्धम् ॥

**२ । ४२ तत्पुरुषः समानाधिकरणः कर्मधारयः ७४५** ॥ ६६४ तत्पुरुषः समानाधिकरणः कर्मधारय इति चेत्समासस्यैकार्थत्वादप्रसिद्धिः । ६६५ सिद्धं तु पदसामानाधिकरण्यात् ॥

**२ । ४३ प्रथमानिर्दिष्टं समास उपसर्जनम् ६५३** ॥ ६६६ प्रथमानिर्दिष्टं समास उपसर्जनमिति चेदनिर्देशात्प्रथमायाः समासे संज्ञाप्रसिद्धिः । ६६७ सिद्धं तु समासविधाने वचनात् । ६६८ न वा तादर्थ्यात्ताच्छब्द्यम् । ६६९ यस्य विधौ प्रथमानिर्देशस्ततोऽन्यत्राप्युपसर्जनसंज्ञाप्रसङ्गः । ६७० सिद्धं तु यस्य विधौ तं प्रतीति वचनात् ॥

**२ । ४४ एकविभक्ति चापूर्वनिपाते ६५५** ॥ ६७१ नाप्रतिषेधात् । ६७२ अप्राप्तेर्वा । ६७३ एकविभक्तावषष्ठ्यन्तवचनम् । ६७४ प्रयोजनं द्विगुप्राप्तालंपूर्वोपसर्गाः क्तार्थे ॥

**२ । ४५ अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १७८** ॥ ६७५ अर्थवत्यनेकपदप्रसङ्गः । ६७६ समुदायोऽनर्थक इति चेदवयवार्थवत्त्वात्समुदायार्थवत्त्वं यथा लोके । ६७७ वाक्य-

प्रतिषेधोऽर्थवत्त्वात्। ६७८ पदार्थादन्यस्यानुपलब्धिरिति चेत्पदार्थाभिसंबन्धस्योपलब्धिः। ६७९ तस्मात्प्रतिषेधः। ६८० अर्थवत्समुदायानां समासग्रहणं नियमार्थम्। ६८१ अर्थवत्ता नोपपद्यते केवलेनावचनात्। ६८२ न वा प्रत्ययेन नित्यसंबन्धात्केवलस्याप्रयोगः। ६८३ सिद्धं त्वन्वयव्यतिरेकाभ्याम्। ६८४ संघातार्थवत्त्वाच्चेति चेद्दृष्टो ह्यतदर्थेन गुणेन गुणिनोऽर्थभावः। ६८५ निपातस्यानर्थकस्य प्रातिपदिकत्वम्। ६८६ अप्रत्यय इति चेत्त्विवेकादेशे प्रतिषेधोऽन्तवत्त्वात्। ६८७ न प्रत्यय इति चेदूकेकादेशे प्रतिषेध आदिवत्त्वात्। ६८८ सुब्लोपे च प्रत्ययलक्षणत्वात्॥

२।४७ ह्रस्वो नपुंसके प्रातिपदिकस्य ३१८॥ ६८९ नपुंसकह्रस्वत्वे प्रातिपदिकग्रहणं तिन्निवृत्त्यर्थम्। ६९० अव्ययप्रतिषेधः। ६९१ न वा लिङ्गाभावात्। ६९२ यणेकादेशदीर्घैत्त्वेषु प्रतिषेधः। ६९३ यणेकादेशदीर्घैत्त्वेषु बहिरङ्गलक्षणत्वात्सिद्धम्॥

२।४८ गोस्त्रियोरुपसर्जनस्य ६५६॥ ६९४ उपसर्जनह्रस्वत्वे च। ६९५ गोटाङ्ग्रहणं कृन्निवृत्त्यर्थम्। ६९६ ईयसो बहुव्रीहौ पुंवद्वचनम्। ६९७ पूर्वपदस्य च प्रतिषेधो गोसमासनिवृत्त्यर्थम्। ६९८ कपि च। ६९९ द्वन्द्वे च॥

२।४९ लुक्तद्धितलुकि १४०८॥ ७०० तद्धितलुक्यवन्त्यादीनां प्रतिषेधः। ७०१ तद्धितलुक्यवन्त्यादीनामप्रतिषेधोऽलुक्परत्वात्॥

२।५० इद्गोण्याः १७०३॥ ७०२ इद्गोण्या नेति वक्तव्यम्। ७०३ ह्रस्वता हि विधीयते। ७०४ इति वा वचने तावत्। ७०५ मात्रार्थं वा कृतं भवेत्। ७०६ गोण्या इत्त्वं प्रकरणात्। ७०७ सूच्याद्यर्थमथापि वा॥

२।५१ लुपि युक्तवद्व्यक्तिवचने १२९४॥ ७०८ अन्यत्राभिधेयव्यक्तिवचनभावाल्लुपि युक्तवदनुदेशः। ७०९ लुपोऽदर्शनसंज्ञित्वादर्थगतिर्नोपपद्यते। ७१० न वादर्शनस्याशक्यत्वादर्थगतिः साहचर्यात्। ७११ योगाभावाच्चान्यस्य। ७१२ समास उत्तरपदस्य बहुवचनस्य लुपः॥

२।५२ विशेषणानां चाजातेः १३००॥ ७१३ विशेषणानां वचनं जातिनिवृत्त्यर्थम्। ७१४ समानाधिकरणत्वात्सिद्धम्। ७१५ हरीतक्यादिषु व्यक्तिः। ७१६ खलतिकादिषु वचनम्। ७१७ मनुष्यलुपि प्रतिषेधः॥

२।५८ जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् ८१७॥ ७१८ जात्याख्यायां सामान्याभिधानादैकार्थ्यम्। ७१९ अर्थातिदेशात्सिद्धम्। ७२० संख्याप्रयोगे प्रतिषेधः। ७२१ अस्मदो नामयुवप्रत्यययोश्च ('अस्मदः सविशेषणस्य प्रयोगे नेत्येव' इत्यपर आह)। ७२२ अशिष्यं वा बहुवत्पृथक्त्वाभिधानात्। ७२३ जातिशब्देन हि द्रव्याभिधानम्॥

२।६१-६२ छन्दसि पुनर्वस्वोरेकवचनम् ३३८७। विशाखयोश्च ३३८८॥ ७२४ पुनर्वसुविशाखयोः सुपां सुलुक्पूर्वसवर्णेति सिद्धम्॥

२।६४ सरूपाणामेकशेष एकविभक्तौ १८८॥ ७२५ प्रत्यर्थं शब्दनिवेशान्नैकेनानेकस्याभिधानम्। ७२६ तत्रानेकार्थाभिधानेऽनेकशब्दत्वम्। ७२७ तस्मादेकशेषः। ७२८ एकविभक्ताविति चेन्नाभावाद्विभक्तेः। ७२९ पृथक्सर्वेषामिति चेदेकशेषे पृथग्विभक्त्युपलब्धिस्तदाश्रयत्वात्। ७३० समास इति चेत्स्वरसमासान्तेषु दोषः। ७३१ अङ्गाश्रये चैकशेषवचनम्। ७३२ तिङ्समासे तिङ्समासवचनम्। ७३३ तिङ्विधिप्रतिषेधश्च। ७३४ असमासे बच-

नलोपः । ७३५ द्विवचनबहुवचनविधिः । ७३६ द्वन्द्वप्रतिषेधश्च । ७३७ विभक्त्यन्तानामेकशेष एकविभक्त्यन्तानामिति तु पृथग्विभक्तिप्रतिषेधार्थम् । ७३८ न वार्थविप्रतिषेधाद्युगपद्वचनाभावः । ७३९ अनेकार्थाश्रयश्च पुनरेकशेषः । ७४० तस्मान्नैकशब्दत्वम् । ७४१ प्रातिपदिकानामेकशेषे मातृमात्रोः प्रतिषेधः सरूपत्वात् । ७४२ हरितहरिणश्येतश्येनरोहितरोहिणानां स्त्रियामुपसंख्यानम् । ७४३ न वा पदस्यार्थे प्रयोगात् । ७४४ सर्वत्रापत्यादिषूपसंख्यानम् । ७४५ सिद्धं तु समानार्थानामेकशेषवचनात् । ७४६ नानार्थानामपि सरूपाणाम् । ७४७ एकार्थानामपि विरूपाणाम् । ७४८ स्वराभिन्नानां यस्योदात्तस्वरविधिः । ७४९ संख्याया अर्थासंप्रत्ययादन्यपदार्थत्वाच्चानेकशेषः । ७५० प्रथममध्यमोत्तमानामेकशेषोऽसरूपत्वात् । ७५१ द्विवचनबहुवचनाप्रसिद्धिश्चैकार्थत्वात् । ७५२ नैकार्थ्यम् । ७५३ नैकार्थ्यमिति चेदारम्भानर्थक्यम् । ७५४ अशिष्य एकशेष एकेनोक्तत्वात् । ७५५ प्रत्यर्थं शब्दनिवेशादेकेनानेकस्याभिधानादप्रत्यर्थमिति चेत्तदपि प्रत्यर्थमेव । ७५६ यावतामभिधानं तावतां प्रयोगो न्याय्यः । ७५७ यावतामभिधानं तावतां प्रयोगो न्याय्य इति चेदेकेनानेकस्याभिधानम् । ७५८ एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्नः । ७५९ एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्न इति चेदनुक्तत्वात्प्लक्षेण न्यग्रोधस्य न्यग्रोधप्रयोगः । ७६० अभिधानं पुनः स्वाभाविकम् । ७६१ उभयदर्शनाच्च । ७६२ आकृत्यभिधानाद्वैकं विभक्तौ वाजप्यायनः । ७६३ प्रख्याविशेषात् । ७६४ अव्यपवर्गगतेश्च । ७६५ ज्ञायते चैकोपदिष्टम् । ७६६ धर्मशास्त्रं च तथा । ७६७ अस्ति चैकमनेकाधिकरणस्थं युगपत् । ७६८ इतीन्द्रवद्विषयः । ७६९ नैकमनेकाधिकरणस्थं युगपदिति चेत्तथैकशेषे । ७७० द्रव्याभिधाने ह्याकृत्यसंप्रत्ययः । ७७१ तत्रासर्वद्रव्यगतिः । ७७२ चोदनायां चैकस्योपाधिवृत्तेः । ७७३ द्रव्याभिधानं व्याडिः । ७७४ तथा च लिङ्गवचनसिद्धिः । ७७५ चोदनासु च तस्यारम्भात् । ७७६ न चैकमनेकाधिकरणस्थं युगपत् । ७७७ विनाशे प्रादुर्भावे च सर्वं तथा स्यात् । ७७८ अस्ति च वैरूप्यम् । ७७९ तथा च विग्रहः । ७८० व्यर्थेषु च मुक्तसंशयम् । ७८१ लिङ्गवचनसिद्धिर्गुणस्यानित्यत्वात् । ७८२ गुणवचनवद्वा । ७८३ अधिकरणगतिः साहचर्यात् । ७८४ न चैकमनेकाधिकरणस्थं युगपदित्यादित्यवद्विषयः । ७८५ अविनाशोऽनाश्रितत्वात् (नैकात्म्यात्) । ७८६ वैरूप्यविग्रहो द्रव्यभेदात् । ७८७ व्यर्थेषु सामान्यात्सिद्धम् ॥

**२ । ६८ भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ९३४** ॥ ७८८ असरूपाणां युवस्थविरस्त्रीपुंसानां विशेषस्याविवक्षितत्वात्सामान्यस्य विवक्षितत्वात्सिद्धम् । ७८९ ब्राह्मणवत्साब्राह्मणीवत्सयोर्लिङ्गस्य विभक्तिपरस्य विशेषवाचकत्वादनेकशेषः ॥

**२ । ६९ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ९३५** ॥ ७९० प्रधाने कार्यसंप्रत्ययाच्छेषः । ७९१ आकृतिवाचित्वादेकवचनम् ॥

**२ । ६८, ७०-७१ भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ९३४ । पिता मात्रा ९३६ । श्वशुरः श्वश्र्वा ९३७** ॥ ७९२ भ्रातृपुत्रपितृश्वशुराणां कारणाद्द्रव्ये शब्दनिवेशः । ७९३ भ्रातृपुत्रपितृश्वशुराणां कारणाद्द्रव्ये शब्दनिवेश इति चेत्तुल्यकारणत्वात्सिद्धम् । ७९४ दर्शनं वै हेतुः । ७९५ दर्शनं हेतुरिति चेत्तुल्यम् । ७९६ न वा एष लोके संप्रत्ययः । ७९७ तद्विषयं च । ७९८ अन्यत्रापि तद्विषयदर्शनात् ॥

**२ । ७२ त्यदादीनि सर्वैर्नित्यम् ९३८** ॥ ७९९ त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि । ८०० अद्वन्द्वतत्पुरुषविशेषणानाम् । ८०१ त्यदादीनां सामान्यार्थत्वात् । ८०२ परस्य चोभयवाचित्वात् । ८०३ पूर्वशेषदर्शनाच्च । ८०४ सामान्यविशेषवाचिनोश्च द्वन्द्वाभावात्सिद्धम् ॥

**२ । ७३ ग्राम्यपशुसंघेष्वतरुणेषु स्त्री ९३९** ॥ ८०५ अनेकशफेष्विति वक्तव्यम् ॥

**३ । १ भूवादयो धातवः १८** ॥ ८०६ भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते । ८०७ पाठेन धातुसंज्ञायां समानशब्दप्रतिषेधः । ८०८ परिमाणग्रहणं च । ८०९ क्रियावचन उपसर्गप्रत्ययप्रतिषेधः । ८१० संघातेनार्थगतेः । ८११ अस्तिभवतिविद्यतीनां धातुत्वम् । ८१२ प्रत्ययार्थस्याव्यतिरेकात्प्रकृत्यन्तरेषु । ८१३ धातोश्चार्थाभेदात्प्रत्ययान्तरेषु । ८१४ सिद्धं त्वन्वयव्यतिरेकाभ्याम् । ८१५ क्रियाविशेषक उपसर्गः । ८१६ भाववचने तदर्थप्रत्ययप्रतिषेधः । ८१७ इतरेतराश्रयं च प्रत्यये भाववचनत्वं तस्माच्च प्रत्ययः । ८१८ सिद्धं तु नित्यशब्दत्वादनाश्रित्य भाववचनत्वं प्रत्ययः । ८१९ प्रथमभावग्रहणं च । ८२० भूवादिपाठः प्रातिपदिकाणपयत्यादिनिवृत्त्यर्थः । ८२१ स्वरानुबन्धज्ञापनाय च ॥

**३ । २ उपदेशेऽजनुनासिक इत् ३** ॥ ८२२ इत्संज्ञायां सर्वप्रसङ्गोऽविशेषात् । ८२३ सिद्धं तूपदेशनेऽनुनासिकवचनात् ॥

**३ । ३ हलन्त्यम् १** ॥ ८२४ हलन्त्ये सर्वप्रसङ्गः सर्वान्त्यत्वात् । ८२५ सिद्धं तु व्यवसितान्त्यत्वात् । ८२६ लकारस्यानुबन्धाज्ञापितत्वाद्धल्ग्रहणाप्रसिद्धिः । ८२७ सिद्धं तु लकारनिर्देशात् । ८२८ एकशेषनिर्देशाद्वा । ८२९ प्रातिपदिकप्रतिषेधोऽकृत्तद्धिते । ८३० इदर्थाभावात्सिद्धम् ॥

**३ । ४ न विभक्तौ तुस्माः १९०** ॥ ८३१ विभक्तौ तवर्गप्रतिषेधोऽतद्धिते ॥

**३ । ७ चुटू १८९** ॥ ८३२ चुञ्चुप्चणपोश्चकारप्रतिषेधः । ८३३ इदर्थाभावात्सिद्धम् । ८३४ पित्करणं किमर्थमिति चेत्पर्यायार्थम् । ८३५ इर उपसंख्यानम् । ८३६ अवयवग्रहणात्सिद्धम् । ८३७ अवयवग्रहणादिति चेदिदिद्विधिप्रसङ्गः ॥

**३ । ९ तस्य लोपः ६२** ॥ ८३८ इतो लोपे णल्क्त्वानिष्ठासूपसंख्यानमित्प्रतिषेधात् । ८३९ सिद्धं तु णलादीनां ग्रहणप्रतिषेधात् । ८४० निर्दिष्टलोपाद्वा । ८४१ तत्र तुस्मानां प्रतिषेधः । ८४२ न वोच्चारणसामर्थ्यात् । ८४३ अनुबन्धलोपे भावाभावयोर्विप्रतिषेधादप्रसिद्धिः । ८४४ सिद्धं त्वपवादन्यायेन । ८४५ भावो हि कार्यार्थोऽनन्यार्थो लोपः । ८४६ एकान्तस्तत्रोपलब्धेः । ८४७ तत्रासरूपसर्वादेशदाप्प्रतिषेधे पृथक्त्वनिर्देशोऽनाकारान्तत्वात् । ८४८ अनेकान्ते वृत्तिविशेषः । ८४९ अनन्तर इति चेत्पूर्वपरयोरित्कृतप्रसङ्गः । ८५० सिद्धं तु व्यवसितपाठात् । ८५१ इतरथा ह्येकान्तेऽपि संदेहः । ८५२ वृत्ताद्वा ॥

**३ । १० यथासंख्यमनुदेशः समानाम् १२८** ॥ ८५३ संज्ञासमासनिर्देशात्सर्वप्रसङ्गोऽनुदेशस्य तत्र यथासंख्यवचनं नियमार्थम् । ८५४ संज्ञासमासनिर्देशः पृथग्विभक्तिसंज्ञ्यनुच्चारणार्थः । ८५५ प्रकरणे च सर्वसंप्रत्ययार्थः । ८५६ संख्यासाम्यं शब्दतश्चेण्णलादयः परस्मैपदानां डारौरसः प्रथमस्यायवायाव एच इत्यनिर्देशः । ८५७ अर्थतश्चेल्लुटो नन्यरीहणसिन्धुतक्षशिलादिषु दोषः । ८५८ आत्मनेपदविधिनिष्ठासार्वधातुकद्विग्रहणेषु । ८५९ एङ पूर्वत्वे प्रतिषेधः । ८६० अतिप्रसङ्गो गुणवृद्धिप्रतिषेधे क्ङिति । ८६१ उदि कूले रुजिवहोः । ८६२ तच्छी-

लादिषु धातुग्रिग्रहणेषु । ८६३ घञादिषु द्विग्रहणेषु । ८६४ अवे तृस्त्रोः करणाधिकरणयोः । ८६५ कर्तृकर्मणोश्च भूकृञोः । ८६६ अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि । ८६७ कृम्वोः क्त्वाणमुलौ । ८६८ अधीयानविदुषोश्छन्दोब्राह्मणानि । ८६९ रोपधेतोः पथिदूतयोः । ८७० तत्र भवस्तस्य व्याख्यानः क्रतुयज्ञेभ्यः । ८७१ संघादिष्वञ्प्रभृतयः । ८७२ वेशोयशआदेर्भगाद्यल्खौ । ८७३ डसिङसोः ल्यत्यात्परस्य । ८७४ न वा समानयोगवचनात् । ८७५ तस्य दोषो विदो लटो वा । ८७६ ध्माधेटोर्नाडीमुष्ट्योश्च । ८७७ खलगोरथादिनित्रकट्यचश्च । ८७८ सिन्ध्वपकराभ्यां कन् अणञौ च । ८७९ युष्मदस्मदोश्चादेशाः ॥

३ । ११ **स्वरितेनाधिकारः ४६** ॥ ८८० अधिकारः प्रतियोगं तस्यानिर्देशार्थः । ८८१ न वा निर्दिश्यमानाधिकृतत्वाद्यथा लोके । ८८२ अन्यनिर्देशस्तु निवर्तकस्तस्मात्परिभाषा । ८८३ अधिकारपरिमाणाज्ञानं तु । ८८४ अधिकारपरिमाणज्ञानार्थं तु । ८८५ यावतिथोऽलनुबन्धस्तावतो योगानिति वचनात्सिद्धम् । ८८६ भूयसि प्राग्वचनम् ॥

३ । १२ **अनुदात्तङित आत्मनेपदम् २१५७** ॥ ८८७ विकरणेभ्यः प्रतिषेधः । ८८८ आत्मनेपदवचनं नियमार्थम् । ८८९ लविधानाद्विहितम् । ८९० तत्र प्रत्ययनियमे शेषवचनं परस्मैपदस्यानिवृत्तत्वात् । ८९१ क्यष आत्मनेपदवचनं तस्यान्यत्र नियमात् । ८९२ प्रकृत्यर्थनियमेऽन्याभावः । ८९३ शेषवचनं च । ८९४ कर्तरि चात्मनेपदविषये परस्मैपदप्रतिषेधार्थम् ॥

३ । १४ **कर्तरि कर्मव्यतिहारे २६८०** ॥ ८९५ क्रियाव्यतिहार इति वक्तव्यम् । ८९६ कर्मव्यतिहारादिषु कर्तृग्रहणं भावकर्मनिवृत्त्यर्थम् । ८९७ न वानन्तरस्य प्रतिषेधात् ॥

३ । १५ **न गतिहिंसार्थेभ्यः २६८१** ॥ ८९८ प्रतिषेधे हसादीनामुपसंख्यानम् । ८९९ हरिवह्योरप्रतिषेधः ॥

३ । १६ **इतरेतरान्योन्योपपदाच्च २६८२** ॥ ९०० परस्परोपपदाच्च ॥

३ । १९ **विपराभ्यां जेः २६८५** ॥ ९०१ उपसर्गग्रहणम् ॥

३ । २० **आङो दोऽनास्यविहरणे २६८६** ॥ ९०२ आङो दोऽव्यसनक्रियस्य । ९०३ स्वाङ्गकर्मकाच्च ॥

३ । २१ **क्रीडोऽनुसंपरिभ्यश्च २६८७** ॥ ९०४ समोकूजने । ९०५ आगमेः क्षमायाम् । ९०६ शिक्षेर्जिज्ञासायाम् । ९०७ किरतेर्हर्षजीविकाकुलायकरणेषु । ९०८ हरतेर्गतताच्छील्ये । ९०९ आङि नुप्रच्छ्योः । ९१० आशिषि नाथः । ९११ शप उपलम्भने ॥

३ । २२ **समवप्रविभ्यः स्थः २६८९** ॥ ९१२ आङः स्थः प्रतिज्ञाने ॥

३ । २४ **उदोऽनूर्ध्वकर्मणि २६९१** ॥ ९१३ उद ईहायाम् ॥

३ । २५ **उपान्मन्त्रकरणे २६९२** ॥ ९१४ उपाद्देवपूजासंगतकरणयोः । ('उपाद्देवपूजासंगतकरणमित्रकरणपथिष्विति वक्तव्यम्' इत्यपर आह) । ९१५ वा लिप्सायाम् ॥

३ । २७ **उद्विभ्यां तपः २६९४** ॥ ९१६ स्वाङ्गकर्मकाच्च ॥

३ । २८ **आङो यमहनः २६९५** ॥ ९१७ स्वाङ्गकर्मकाच्च ॥

३ । २९ **समो गम्यृच्छिभ्याम् २६९९** ॥ ९१८ समो गमादिषु विदिप्रच्छिस्वरतीनामुपसंख्यानम् । ९१९ अर्तिश्रुदृशिभ्यश्च । ९२० उपसर्गादस्यत्यूह्योर्वावचनम् ॥

३ । ४० **आङ उद्गमने २७१३** ॥ ९२१ ज्योतिषामुद्गमने ॥

३ । ५९ **अवाद्ग्रः २७२४** ॥ ९२२ अवाद्ग्रो गिरतेः ॥

३ । ५८ **नानोर्ज्ञः २७३२** ॥ ९२३ अनोर्ज्ञः प्रतिषेधे सकर्मकवचनम् । ९२४ न वाकर्मकस्योत्तरेण विधानात् । ९२५ प्रतिषेधः पूर्वस्य च ॥

३ । ६० **शदेः शितः २३६२** ॥ ९२६ शदेः शितः परस्मैपदाश्रयत्वादात्मनेपदाभावः । ९२७ सिद्धं तु लडादीनामात्मनेपदवचनात् । ९२८ उपसर्गपूर्वविधानेऽड्व्यवाय उपसंख्यानम् । ९२९ नित्यत्वाल्लादेशस्यात्मनेपदेऽडागम इति चेदटोऽपि नित्यनिमित्तत्वादात्मनेपदाभावः। ९३० तस्मादुपसंख्यानम् ॥

३ । ६२ **पूर्ववत्सनः २७३४** ॥ ९३१ पूर्ववत्सन इति शादिम्रियत्यर्थम् । ९३२ इतरथा हि ताभ्यां सन्नन्ताभ्यामात्मनेपदप्रतिषेधः । ९३३ पूर्वस्यात्मनेपददर्शनात्सन्नन्तादात्मनेपदभाव इति चेज्ञुपादिष्वप्रसिद्धिः । ९३४ सिद्धं तु पूर्वस्य लिङ्गातिदेशात् । ९३५ कृञादिषु तु लिङ्गप्रतिषेधः । ९३६ प्रत्ययग्रहणं णियगर्थम् । ९३७ तत्र हेतुमण्णिचः प्रतिषेधः ॥

३ । ६४ **प्रोपाभ्यां युजेरयज्ञपात्रेषु २७३५** ॥ ९३८ स्वराद्युपसृष्टादिति वक्तव्यम् । ९३९ स्वराद्यन्तोपसृष्टादिति वक्तव्यम् ॥

३ । ६५ **समः क्ष्णुवः २७३६** ॥ ९४० समः क्ष्णुवः सकर्मकार्थम् ॥

३ । ६६ **भुजोऽनवने २७३७** ॥ ९४१ अनवनकौटिल्ययोरिति वक्तव्यम् ॥

३ । ६७ **णेरणौ यत्कर्म णौ चेत्स कर्तानाध्याने २७३८** ॥ ९४२ णेरात्मनेपदविधानेऽण्यन्तस्य कर्मणस्तत्रोपलब्धिः । ९४३ इतरथा हि सर्वप्रसङ्गः । ९४४ कर्मकर्तृत्वात्सिद्धमिति चेद्यक्चिणोर्निवृत्त्यर्थं वचनम् । ९४५ न वा यक्चिणोः प्रतिषेधात् । ९४६ इतरथा हि यत्र नियमस्ततोऽन्यत्र प्रतिषेधः । ९४७ आत्मनेपदस्य च । ९४८ आत्मनेपदप्रतिषेधार्थं तु । ९४९ आत्मनः कर्मत्वे प्रतिषेधः । ९५० न वा ण्यन्तेऽन्यस्य कर्तृत्वात् ॥

३ । ७८ **शेषात्कर्तरि परस्मैपदम् २१५९** ॥ ९५१ शेषवचनं पञ्चम्या चेदर्थे प्रतिषेधः । ९५२ सप्तम्या चेत्प्रकृतेः । ९५३ सिद्धं तूभयनिर्देशात् । ९५४ कर्तृग्रहणमनुपराद्यर्थम् ॥

३ । ७९ **अनुपराभ्यां कृञः २७४५** ॥ ९५५ परस्मैपदप्रतिषेधात्कृञादिषु वचनम् । ९५६ तत्रात्मनेपदप्रतिषेधोऽप्रतिषिद्धत्वात् । ९५७ न वा द्युतादिभ्यो वावचनात् । ९५८ आत्मनेपदानियमे वा प्रतिषेधः ॥

३ । ८७ **निगरणचलनार्थेभ्यश्च २७५३** ॥ ९५९ अदेः प्रतिषेधो वक्तव्यः[१] ॥

३ । ८८ **अणावकर्मकाच्चित्तवत्कर्तृकात् २७५४** ॥ ९६० अणावकर्मकादिति चुरादिणिचो ण्यन्तात्परस्मैपदवचनम् । ९६१ सिद्धं त्वतस्मिण्णाविति वचनात् ॥

३ । ८९ **न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः २७५५** ॥ ९६२ पादिषु धेट उपसंख्यानम् ॥

४ । १ **आ कडारादेका संज्ञा २३२** ॥ ९६३ अन्यत्र संज्ञासमावेशान्नियमार्थं वचनम् । ९६४ तत्रैकसंज्ञाधिकारे तद्वचनम् । ९६५ अङ्गसंज्ञया भपदसंज्ञयोरसमावेशः । ९६६ कर्म-

१ इदं काशिकायां कौमुद्यां च व्याख्यातम् । भाष्यकृता 'गतिबुद्धि–' (१ । ४ । ५२) इति सूत्रे 'सर्वमेव प्रत्यवसानकार्यमदेर्न भवतीति वक्तव्यं परस्मैपदमपि । इदमेकमिष्यते 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः इदमेषां जग्धम्' इति वदताङ्गीकृतमेव ॥

धारये तत्पुरुषग्रहणम् । ९६७ तत्पुरुषत्वे द्विगुत्वग्रहणम् । ९६८ गुरुलघुसंज्ञे नदीघिसंज्ञे । ९६९ परस्मैपदसंज्ञा पुरुषसंज्ञा । ९७० परवचने सिति पदं भम् । ९७१ गतिबुद्ध्यादीनां ण्यन्तानां कर्म कर्तृसंज्ञम् । ९७२ शेषवचनं च घिसंज्ञानिवृत्त्यर्थम् । ९७३ न वा संभवात् । ९७४ ह्रस्वलक्षणा हि नदीसंज्ञा घिसंज्ञायां च गुणः । ९७५ तत्र वचनप्रामाण्यान्नदीसंज्ञायां घिसंज्ञाभावः । ९७६ आश्रयाभावान्नदीसंज्ञायां घिसंज्ञानिवृत्तिरिति चेद्यणादेशाभावः । ९७७ नद्याश्रयत्वाद्यणादेशस्य ह्रस्वस्य नदीसंज्ञाभावः । ९७८ बहुव्रीह्यर्थं तु । ९७९ प्रयोजनमव्ययीभावोपमानद्विगुकृल्लोपेषु । ९८० तत्र शेषवचनाद्दोषः संख्यासमानाधिकरणनञ्समासेषु बहुव्रीहिप्रतिषेधः । ९८१ कृल्लोपे च शेषवचनात्प्रादिभिर्न बहुव्रीहिः । ९८२ एकसंज्ञाधिकारे विप्रतिषेधाद्बहुव्रीहिः । ९८३ एकसंज्ञाधिकारे विप्रतिषेधाद्बहुव्रीहिरिति चेत् कार्ये प्रतिषेधः । ९८४ तत्पुरुष इति चेदन्यत्र कार्यात्प्रतिषेधः । ९८५ सिद्धं तु प्रादीनां कार्ये तत्पुरुषवचनात् । ९८६ प्रयोजनं ह्रस्वसंज्ञा दीर्घप्लुतौ । ९८७ तिङ्सार्वधातुकं लिङ्लिटोरार्धधातुकम् । ९८८ अपत्यं वृद्धं युवा । ९८९ घि नदी । ९९० लघु गुरु । ९९१ पदं भम् । ९९२ अपादानमुत्तराणि । ९९३ क्रुधद्रुहोरुपसृष्टयोः कर्म संप्रदानम् । ९९४ करणं पराणि । ९९५ अधिकरणं कर्म । ९९६ अधिकरणं कर्ता । ९९७ अध्युपसृष्टं कर्म । ९९८ गत्युपसर्गसंज्ञे कर्मप्रवचनीयसंज्ञा । ९९९ परस्मैपदमात्मनेपदम् । १००० समाससंज्ञाश्च । १००१ अर्थवत्प्रातिपदिकम् । १००२ गुणवचनं तु । १००३ समासकृत्तद्धिताव्ययसर्वनामासर्वलिङ्गा जातिः । १००४ संख्या । १००५ डु च । १००६ एकद्रव्योपनिवेशिनी संज्ञा ॥

४ । २ **विप्रतिषेधे परं कार्यम् १७५** ॥ १००७ द्वौ प्रसङ्गावन्यार्थावेकस्मिन्स विप्रतिषेधः । १००८ एकस्मिन्युगपदसंभवात्पूर्वपरप्राप्तिरुभयप्रसङ्गः । १००९ तृजादिभिस्तुल्यम् । १०१० अनवयवप्रसङ्गात्प्रतिपदं विधेश्च । १०११ अप्रतिपत्तिर्वोभयोस्तुल्यबलत्वात् । १०१२ तत्र प्रतिपत्त्यर्थं वचनम् । १०१३ तव्यदादीनां त्वप्रसिद्धिः । १०१४ अन्तरङ्गं च । १०१५ प्रयोजनं यणेकादेशेत्त्वोत्त्वानि गुणवृद्धिद्विर्वचनाल्लोपस्वरेभ्यः । १०१६ इण्ङ्शीनामाङ्गुणः सवर्णदीर्घत्वात् । १०१७ न वा सवर्णदीर्घत्वस्यानवकाशत्वात् । १०१८ उङापोरेकादेश ईत्वलोपाभ्याम् । १०१९ आत्वनपुंसकोपसर्जनह्रस्वत्वान्ययवायावेकादेशतुग्विधिभ्यः । १०२० तुग्यणेकादेशगुणवृद्ध्यौत्त्वदीर्घत्वेत्वमुमेत्त्वरीविधिभ्यः । १०२१ अनङानङ्भ्यां चेति वक्तव्यम् । १०२२ इयङादेशो गुणात् । १०२३ उवङादेशश्चेति वक्तव्यम् । १०२४ श्वेः संप्रसारणपूर्वत्वं यणादेशात् । १०२५ ह्व आकारलोपात् । १०२६ स्वरो लोपात् । १०२७ प्रत्ययविधिरेकादेशात् । १०२८ यणादेशाच्चेति वक्तव्यम् । १०२९ लादेशो वर्णविधेः । १०३० तत्पुरुषान्तोदात्तत्वं पूर्वपदप्रकृतिस्वरात् । १०३१ तस्य दोषः पूर्वपदोत्तरपदयोर्वृद्धिस्वरावेकादेशात् । १०३२ यणादेशादियुवौ । १०३३ उसि पररूपाच्च । १०३४ लुग्लोपयणयवायावेकादेशेभ्यः ॥

४ । ३ **यू स्त्र्याख्यौ नदी २६६** ॥ १०३५ नदीसंज्ञायामाख्याग्रहणं स्त्रीविषयत्वार्थम् । १०३६ प्रथमलिङ्गग्रहणं च । १०३७ प्रयोजनं क्विब्लुप्समासाः । १०३८ अवयवस्त्रीविषयत्वात्सिद्धम् । १०३९ अवयवस्त्रीविषयत्वात्सिद्धमिति चेदियङुवङ्स्थानप्रतिषेधे यण्स्थानप्रतिषेधप्रसङ्गोऽवयवस्येयङुवङ्स्थानत्वात् । १०४० सिद्धं त्वङ्गरूपग्रहणाद्यस्याङ्गस्येयुवौ तत्प्रतिषेधात् । १०४१ ह्रस्वेयुवस्थानप्रवृत्तौ च स्त्रीवचने ॥

**४।१३ यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १९९** ॥ १०४२ अङ्गसंज्ञायां तदादिवचनं स्यादिनुमर्थम् । १०४३ मित्सुटोरुपसंख्यानम् । १०४४ सिद्धं तु तदाद्यादिवचनात् । १०४५ तदेकदेशविज्ञानाद्वा सिद्धम् । १०४६ प्रत्ययग्रहणं पदादावप्रसङ्गार्थम् । १०४७ परिमाणार्थं च । १०४८ । सिद्धं तु प्रत्ययग्रहणे यस्मात्स तदादितदन्तविज्ञानात् । १०४९ प्रयोजनं धातुप्रातिपदिकप्रत्ययसमासतद्धितविधिस्वराः । १०५० कृद्ग्रहणे गतिकारकपूर्वस्यापि । १०५१ प्रयोजनं समासतद्धितविधिस्वराः ॥

**४।१४ सुप्तिङन्तं पदम् २९** ॥ १०५२ पदसंज्ञायामन्तवचनमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधार्थम् ॥

**४।१७ स्वादिष्वसर्वनामस्थाने २३०** ॥ १०५३ नाप्रातिषेधात् । १०५४ अप्राप्तेर्वा १०५५ भुवद्वद्ग्रचो धारयद्वद्ग्रचः पदसंज्ञा ॥

**४।१८ यचि भम् २३१** ॥ १०५६ भसंज्ञायामुत्तरपदलोपे षषः प्रतिषेधः । १०५७ सिद्धमचः स्थानिवत्त्वात् । १०५८ नभोऽङ्गिरोमनुषां वत्युपसंख्यानम् । १०५९ वृषण्वस्वश्वयोः ॥

**४।२० अयस्मयादीनि छन्दसि ३३९०** ॥ १०६० उभयसंज्ञान्यपीति वक्तव्यम् ॥

**४।२१ बहुषु बहुवचनम् १८७** ॥ १०६१ सुतिङामविशेषविधानादृष्टविप्रयोगत्वाच्च नियमार्थं वचनम् । १०६२ तत्र प्रत्ययनियमेऽव्ययानां पदसंज्ञाभावोऽसुबन्तत्वात् । १०६३ अर्थनियमे सिद्धम् ॥

**४।२३ कारके ५३४** ॥ १०६४ कारक इति संज्ञानिर्देशश्चेत्संज्ञिनोऽपि निर्देशः । १०६५ इतरथा ह्यनिष्टप्रसङ्गो ग्रामस्य समीपादागच्छतीत्यकारकस्य । १०६६ कर्मसंज्ञाप्रसङ्गोऽकथितस्य ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति । १०६७ अपादानं च वृक्षस्य पर्णं पततीति । १०६८ न वापायस्याविवक्षितत्वात् । १०६९ अन्वर्थमिति चेदकर्तरि कर्तृशब्दानुपपत्तिः । १०७० सिद्धं तु प्रतिकारकं क्रियाभेदात्पचादीनां करणाधिकरणयोः कर्तृभावः । १०७१ अधिश्रयणोदकासेचनतण्डुलावपनैधोपकर्षणक्रियाः प्रधानस्य कर्तुः पाकः । १०७२ द्रोणं पचत्याढकं पचतीति संभवनक्रिया धारणाक्रिया चाधिकरणस्य पाकः । १०७३ एधाः पक्ष्यन्त्याविक्लित्तेर्ज्वलिष्यन्तीति ज्वलनक्रिया करणस्य पाकः । १०७४ उद्यमननिपातनानि कर्तुश्छिदिक्रिया । १०७५ यत्तत् न तृणेन तत्परशोश्छेदनम् । १०७६ इतरथा ह्यसितृणयोश्छेदनेऽविशेषः स्यात् । १०७७ अपादानादीनां त्वप्रसिद्धिः । १०७८ न वा स्वतन्त्रपरतन्त्रत्वात्तयोः पर्यायेण वचनं वचनाश्रया च संज्ञा ॥

**४।२४ ध्रुवमपायेऽपादानम् ५८६** ॥ १०७९ जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् । १०८० गतियुक्तेष्वपादानसंज्ञा नोपपद्यतेऽध्रुवत्वात् । १०८१ न वाध्रौव्यस्याविवक्षितत्वात् ॥

**४।२७ वारणार्थानामीप्सितः ५९०** ॥ १०८२ वारणार्थेषु कर्मग्रहणानर्थक्यं कर्तुरीप्सिततमं कर्मेति वचनात् ॥

**४।२९ आख्यातोपयोगे ५९२** ॥ १०८३ आख्यातानुपयोगे कारकमिति चेदकथितत्वात्कर्मसंज्ञाप्रसङ्गः । १०८४ अकारकमिति चेदुपयोगवचनानर्थक्यम् ॥

**४।३२ कर्मणा यमभिप्रैति स संप्रदानम् ५६९** ॥ १०८५ क्रियाग्रहणमपि कर्तव्यम् । १०८६ कर्मणः करणसंज्ञा संप्रदानस्य च कर्मसंज्ञा ॥

४ । ४८ उपान्वध्याङ्वसः ५४४ ॥ १०८७ वसेरश्यर्थस्य प्रतिषेधः ॥

४ । ४९ कर्तुरीप्सिततमं कर्म ५३५ ॥ १०८८ ईप्सितस्य कर्मसंज्ञायां निर्वृत्तस्य कारकत्वे कर्मसंज्ञाप्रसङ्गः क्रियेप्सितत्वात् । १०८९ न वोभयेप्सितत्वात् ॥

४ । ५१ अकथितं च ५३९ ॥ १०९० दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ । ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना ॥ १०९१ कथिते लादयश्चेत्स्युः षष्ठीं कुर्यात्तदा गुणे । १०९२ अकारकं ह्यकथितत्वात् । १०९३ कारकं चेत्तु नाकथा । १०९४ कारकं चेद्विजानीयाद्यां यां मन्येत सा भवेत् । १०९५ कथितेऽभिहिते त्वविधिस्त्वमतिर्गुणकर्मणि लादिविधिः सपरे । १०९६ ध्रुवचेष्टितयुक्तिषु चाप्यगुणे तदनल्पमतेर्वचनं स्मरत । १०९७ प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् । १०९८ अप्रधाने दुहादीनाम् । १०९९ ण्यन्ते कर्तुश्च कर्मणः । ११०० नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च । द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ॥ ११०१ सिद्धं वाप्यन्यकर्मणः । ११०२ अन्यकर्मेति चेद्ब्रूयात्तादीनामविधिर्भवेत् । ११०३ कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् । ११०४ देशश्चाकर्मणां कर्मसंज्ञो भवतीति वक्तव्यम् ॥

४ । ५२ गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ ५४० ॥ ११०५ शब्दकर्मनिर्देशे शब्दक्रियाणामिति चेद्ध्वयत्यादीनां प्रतिषेधः । ११०६ शृणोत्यादीनां चोपसंख्यानमशब्दक्रियत्वात् । ११०७ शब्दकर्मण इति चेज्जल्पतिप्रभृतीनामुपसंख्यानम् । ११०८ दृशेः सर्वत्र । ११०९ अदिखादिनीवहीनां प्रतिषेधः । १११० वहेरनियन्तृकर्तृकस्य । ११११ भक्षेरहिंसार्थस्य । १११२ अकर्मकग्रहणे कालकर्मकाणामुपसंख्यानम् । १११३ सिद्धं तु कालकर्मकाणामकर्मकवद्वचनात् ॥

४ । ५३ हृक्रोरन्यतरस्याम् ५४१ ॥ १११४ हृक्रोर्वावचनेऽभिवादिदृशोरात्मनेपद उपसंख्यानम् ॥

४ । ५४ स्वतन्त्रः कर्ता ५५९ ॥ १११५ स्वतन्त्रस्य कर्तृसंज्ञायां हेतुमत्युपसंख्यानमस्वतन्त्रत्वात् । १११६ न वा स्वातन्त्र्यादितरथा ह्यकुर्वत्यपि कारयतीति स्यात् । १११७ नाकुर्वतीति चेत्स्वतन्त्रः ॥

४ । ५५ तत्प्रयोजको हेतुश्च २५७५ ॥ १११८ प्रैषेऽस्वतन्त्रप्रयोजकत्वाद्धेतुसंज्ञाप्रसिद्धिः । १११९ स्वतन्त्रत्वात्सिद्धम् । ११२० स्वतन्त्रत्वात्सिद्धमिति चेत्स्वतन्त्रपरतन्त्रत्वं विप्रतिषिद्धम् ॥

४ । ५६ प्राग्रीश्वरान्निपाताः १९ ॥ ११२१ रीश्वराद्वीश्वरान्मा भूत् । ११२२ कृन्मेजन्तः परोऽपि सः । ११२३ समासेष्वव्ययीभावः । ११२४ लौकिकं चातिवर्तते । ११२५ प्राग्वचनं संज्ञानिवृत्त्यर्थम् ॥

४ । ५८-५९ प्रादयः २१ । उपसर्गाः क्रियायोगे २२ ॥ ११२६ प्रादय इति योगविभागः । ११२७ ११२८ निपातसंज्ञार्थः । ११२९ एकयोगे हि निपातसंज्ञाभावः । ११३० मरुच्छब्दस्योपसंख्यानम् । ११३१ श्रच्छब्दस्योपसंख्यानम् ॥

४ । ६० गतिश्च २३ ॥ ११३२ कारिकाशब्दस्य । ११३३ पुनश्चनसौ छन्दसि । ११३४ गत्युपसर्गसंज्ञाः क्रियायोगे यत्क्रियायुक्तास्तं प्रतीति वचनम् । ११३५ प्रयोजनं घञ्षत्वणत्वे ।

११३६ वृद्धिविधौ च धातुग्रहणानर्थक्यम् । ११३७ वद्रिधिनस्भावाबीत्त्वस्वाङ्गादिस्वरणत्वेषु वचनप्रामाण्यात्सिद्धम् । ११३८ सुदुरोः प्रतिषेधो नुम्विधितत्वषत्वणत्वेषु ॥

**४ । ६१ ऊर्यादिच्विडाचश्च ७६२** ॥ ११३९ कृभ्वस्तियोग इति वक्तव्यम् ॥

**४ । ६२ अनुकरणं चानितिपरम् ७६३** ॥ ११४० अनुकरणस्येतिकरणपरत्वप्रतिषेधोऽनिष्टशब्दनिवृत्त्यर्थः ॥

**४ । ६९ अन्तरपरिग्रहे ७६६** ॥ ११४१ अन्तःशब्दस्याङ्किविधिसमासणत्वेषूपसंख्यानम् ॥

**४ । ७४ साक्षात्प्रभृतीनि च ७७९** ॥ ११४२ साक्षात्प्रभृतिषु च्व्यर्थवचनम् । ११४३ मकारान्तत्वं च गतिसंज्ञानियुक्तम् । ११४४ तत्र च्विप्रतिषेधः । ११४५ न वा पूर्वेण कृतत्वात् ॥

**४ । ८० ते प्राग्धातोः २२३०** ॥ ११४६ प्राग्धातुवचनं प्रयोगनियमार्थमिति चेदनुकरणस्येतिकरणपरप्रतिषेधोऽनिष्टशब्दनिवृत्त्यर्थः । ११४७ छन्दसि परव्यवहितवचनं च । ११४८ संज्ञानियमे सिद्धम् । ११४९ उभयोरनर्थकं वचनमनिष्टादर्शनात् । ११५० उपसर्जनसंनिपाते तु पूर्वपरव्यवस्थार्थम् ॥

**४ । ८४ अनुर्लक्षणे ५४७** ॥ ११५१ अनुर्लक्षणेवचनानर्थक्यं सामान्यकृतत्वात् । ११५२ हेत्वर्थे तु वचनम् ॥

**४ । ८९ आङ्मर्यादावचने ५९७** ॥ ११५३ आङ्मर्यादाभिविध्योरिति वक्तव्यम् ॥

**४ । ९९ लः परस्मैपदम् २१५५** ॥ ११५४ लादेशे परस्मैपदग्रहणं पुरुषबाधितत्वात् । ११५५ इह वचने हि संज्ञाबाधनम् । ११५६ सिचि वृद्धौ तु परस्मैपदग्रहणं ज्ञापकं पुरुषाबाधकत्वस्य ॥

**४ । १०१ तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः २१६०** ॥ ११५७ प्रथममध्यमोत्तमसंज्ञायामात्मनेपदग्रहणं समसंख्यार्थम् । ११५८ आनुपूर्व्यवचनं च । ११५९ न वैकशेषनिर्देशात् ॥

**४ । १०५,१०७-१०८ युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः २१६२ । अस्मद्युत्तमः २१६४ । शेषे प्रथमः २१६५** ॥ ११६० युष्मदस्मच्छेषवचनं नियमार्थम् । ११६१ तत्र युष्मदस्मदन्येषु प्रथमप्रतिषेधः शेषत्वात् । ११६२ सिद्धं तु युष्मदस्मदोः प्रतिषेधात् । ११६३ युष्मदि मध्यमादस्मद्युत्तमो विप्रतिषेधेन । ११६४ अनेकशेषभावार्थं तु । ११६५ न वा युष्मदस्मदोरनेकशेषभावात्तदधिकरणानामप्यनेकशेषभावादविप्रतिषेधः । ११६६ क्रियापृथक्त्वे च द्रव्यपृथक्त्वदर्शनमनुमानमुत्तरत्रानेकशेषभावस्य ॥

**४ । १०९ परः संनिकर्षः संहिता २८** ॥ ११६७ परः संनिकर्षः संहिता चेद्द्रुतायामसंहितम् । ११६८ तुल्यः संनिकर्षः । ११६९ वर्णकालभूयस्त्वम् । ११७० द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कालभेदात् । ११७१ शब्दाविरामे प्रतिवर्णमवसानम् । ११७२ ह्रादाविरामे स्पर्शाघोषसंयोगेऽसंनिधानादसंहितम् । ११७३ एकेन तुल्यः संनिधिः ११७४ पौर्वापर्यमकालव्यपेतं संहिता चेत्पूर्वापराभावादसंहितम् । ११७५ एकैकवर्णवर्तित्वाद्वाच उच्चरितप्रध्वंसित्वाच्च वर्णानाम् ॥

**४ । ११० विरामोऽवसानम् २७** ॥ ११७६ अभावेऽवसानलक्षण उपर्यभाववचनम् । ११७७

विरामे विरामवचनम् । ११७८ अभावेऽवसानसंज्ञिन्युपर्यभाववचनम् । ११७९ विरामे विरामवचनम् । ११८० भावाविरामभावित्वाच्छन्दस्यावसानलक्षणं न । ११८१ तत्पर इति वा वर्णस्यावसानम् । ११८२ वर्णोऽन्त्यो वावसानम् । ११८३ संहितावसानयोर्लोकविदितत्वात्सिद्धम् ॥

इति प्रथमोऽध्यायः ।

---

## द्वितीयोऽध्यायः ।

**१ । १ समर्थः पदविधिः ६४७** ॥ ११८४ पृथगर्थानामेकार्थीभावः समर्थवचनम् । ११८५ अर्थानादेशनात् । ११८६ तत्र लघ्वर्थम् । ११८७ असंभवः खल्वप्यर्थादेशनस्य । ११८८ अप्रवृत्तिः खल्वप्यर्थादेशनस्य । ११८९ वावचनानर्थक्यं च स्वभावसिद्धत्वात् । ११९० संघातस्यैकार्थ्यात्त्रावयवसंख्यातः सुबुत्पत्तिः । ११९१ परस्परव्यपेक्षां सामर्थ्यमेके । ११९२ तत्र नानाकारकान्निघातयुष्मदस्मदादेशप्रतिषेधः । ११९३ प्रचये समासप्रतिषेधः । ११९४ समर्थतराणां वा । ११९५ समुदायसामर्थ्याद्वा सिद्धम् । ११९६ समर्थतराणां वा समुदायसामर्थ्यात् । ११९७ आख्यातं साव्ययकारकविशेषणं वाक्यम् । ११९८ आख्यातं सविशेषणम् । ११९९ एकतिङ् । १२०० समानवाक्ये निघातयुष्मदस्मदादेशाः । १२०१ योगे प्रतिषेधश्चादिभिः । १२०२ समर्थनिघाते हि समानाधिकरणयुक्तयुक्तेषूपसंख्यानमसमर्थत्वात् । १२०३ राजगवीक्षीरे द्विसमासप्रसङ्गो द्विषष्ठीभावात् । १२०४ सिद्धं तु राजविशिष्टाया गोः क्षीरेण सामर्थ्यात् । १२०५ पदविधौ समर्थवचनं वर्णाश्रये शास्त्र आनन्तर्यविज्ञानात् । १२०६ समर्थाधिकारस्य विधेयसामानाधिकरण्यान्निर्देशानर्थक्यम् । १२०७ सिद्धं तु समर्थानामिति वचनात् । १२०८ एकशेषनिर्देशाद्वा । १२०९ समानाधिकरणेषूपसंख्यानमसमर्थत्वात् । १२१० द्रव्यं पदार्थ इति चेत् । १२११ न वा वचनप्रामाण्यात् । १२१२ लुप्ताख्यातेषु च । १२१३ तदर्थगतेर्वा । १२१४ समासो द्वयोर्द्वयोर्भेद्वन्द्वेऽनेकग्रहणम् । १२१५ द्वयोर्द्वयोः समास इति चेन्न बहुषु द्वित्वाभावात् । १२१६ समासान्तप्रतिषेधश्च । १२१७ अविशेषेण बहुव्रीहावनेकपदप्रसङ्गः । १२१८ तत्र स्वरसमासान्तपुंवद्भावेषु दोषः । १२१९ न वावयवतत्पुरुषत्वात् । १२२० तस्यान्तोदात्तत्वं विप्रतिषेधात् । १२२१ निमित्तिस्वरबलीयस्त्वाद्वा । १२२२ एकशितिपात्स्वरवचनं तु ज्ञापकं निमित्तिस्वरबलीयस्त्वस्य ॥

**१ । २ सुबामन्त्रिते पराङ्गवत्स्वरे ३६९६** ॥ १२२३ आमन्त्रितस्य पराङ्गवद्भावे षष्ठ्यामन्त्रितकारकवचनम् । १२२४ तन्निमित्तग्रहणं वा । १२२५ अवचने हि सुबन्तमात्रप्रसङ्गः । १२२६ सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपसंख्यानमनन्तरत्वात् । १२२७ स्वरेऽवधारणाच्च । १२२८ परमपि च्छन्दसि पूर्वस्याङ्गवद्भवतीति वक्तव्यम् । १२२९ अव्ययप्रतिषेधश्च । १२३० अनव्ययीभावस्य । १२३१ स्वरेऽवधारणं सुब्लोपार्थम् । १२३२ न वा सुबन्तैकान्तत्वात् । १२३३ प्रातिपदिकैकान्तस्तु सुब्लोपे ॥

**१ । ३ प्राक्कडारात्समासः ६४८** ॥ १२३४ प्राग्वचनं संज्ञानिवृत्त्यर्थम् ॥

**१ । ४ सह सुपा ६४९** ॥ १२३५ सहवचनं पृथगसमासार्थम् । १२३६ इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च ॥

**१ । १० अक्षशलाकासंख्याः परिणा ६६४** ॥ १२३७ अक्षादयस्तृतीयान्ताः पूर्वोक्तस्य यथा न तत् । १२३८ एकत्वेऽक्षशलाकयोः । १२३९ कितवव्यवहारे च ॥

**१ । १७ तिष्ठद्गुप्रभृतीनि च ६७१** ॥ १२४० तिष्ठद्गु कालविशेषे। १२४१ खलेयवादीनि प्रथमान्तान्यपदार्थे ॥

**१ । १८ पारेमध्ये षष्ठ्या वा ६७२** ॥ १२४२ पारेमध्ये षष्ठ्या वावचनम् । १२४३ अवचने हि षष्ठीसमासाभावो यथैकदेशिप्रधाने । १२४४ एकारान्तानिपातनं च ॥

**१ । २० नदीभिश्च ६७४** ॥ १२४५ नदीभिः संख्यासमासेऽन्यपदार्थे प्रतिषेधः । १२४६ नदीभिः संख्यायाः समाहारेऽव्ययीभावो वक्तव्यः ॥

**१ । २४ द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः ६८६** ॥ १२४७ श्रितादिषु गमिगाम्यादीनामुपसंख्यानम् । १२४८ श्रितादिभिरहीने द्वितीयासमासवचनानर्थक्यं बहुव्रीहिकृतत्वात् । १२४९ अहीने द्वितीयास्वरवचनानर्थक्यं च । १२५० जातिस्वरप्रसङ्गस्तु । १२५१ तत्र जातादिषु वावचनात्सिद्धम् ॥

**१ । २९ अत्यन्तसंयोगे च ६९१** ॥ १२५२ अत्यन्तसंयोगे समासस्याविशेषवचनात् क्तेन समासवचनानर्थक्यम् । १२५३ अनत्यन्तसंयोगार्थं तु ॥

**१ । ३० तृतीया तत्कृतार्थेन गुणवचनेन ६९२** ॥ १२५४ तृतीयासमासेऽर्थग्रहणमनर्थकमर्थगतिर्ह्यवचनात् । १२५५ निर्देश्यमिति चेत्तृतीयार्थनिर्देशोऽपि ॥

**१ । ३१ पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ६९३** ॥ १२५६ पूर्वादिष्ववरस्योपसंख्यानम् ॥

**१ । ३२ कर्तृकरणे कृता बहुलम् ६९४** ॥ १२५७ कर्तृकरणे कृता क्तेन ॥

**१ । ३३ कृत्यैरधिकार्थवचने ६९५** ॥ १२५८ कृत्यैरधिकार्थवचनेऽन्यत्रापि दृश्यते । १२५९ साधनं कृतेति वा पादहारकाद्यर्थम् । १२६० 'कृत्यग्रहणे यण्ण्यतोर्ग्रहणम्' इति काशिका ॥

**१ । ३४-३५ अन्नेन व्यञ्जनम् ६९६ । भक्ष्येण मिश्रीकरणम् ६९७** ॥ १२६१ अन्नेन व्यञ्जनं भक्ष्येण मिश्रीकरणमित्यसमर्थसमासः । १२६२ कारकाणां क्रियया सामर्थ्यात् । १२६३ वचनप्रामाण्यादिति चेन्नानाकारकाणां प्रतिषेधः । १२६४ सिद्धं तु समानाधिकरणाधिकारे क्तस्तृतीयापूर्वपद उत्तरपदलोपश्च । १२६५ षष्ठीसमासश्च युक्तपूर्णान्तः । १२६६ न वासमासेऽदर्शनात् । १२६७ युक्तार्थसंप्रत्ययाच्च सामर्थ्यम् । १२६८ संप्रत्ययाच्च तदर्थाध्यवसानम् । १२६९ संप्रतीयमानार्थलोपे ह्यनवस्था ॥

**१ । ३६ चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ६९८** ॥ १२७० चतुर्थी तदर्थमात्रेण चेत्सर्वप्रसङ्गोऽविशेषात् । १२७१ बलिरक्षिताभ्यां चानर्थकं वचनम् । १२७२ विकृतिः प्रकृत्येति चेदश्वघासादीनामुपसंख्यानम् । १२७३ अर्थेन नित्यसमासवचनम् । १२७४ सर्वलिङ्गता च ॥

**१ । ३७ पञ्चमी भयेन ६९९** ॥ १२७५ भयभीतभीतिभीभिरिति वक्तव्यम् । १२७६ भयनिर्गतजुगुप्सुभिरिति वक्तव्यम् ॥

**१ । ४० सप्तमी शौण्डैः ७१७** ॥ १२७७ शौण्डादिभिरिति वक्तव्यम् ॥

**१ । ४२ ध्वाङ्क्षेण क्षेपे ७१९** ॥ १२७८ ध्वाङ्क्षेणेत्यर्थग्रहणम् ॥

१ । ४३ **कृत्यैर्ऋणे ७२०** ॥ १२७९ कृत्यैर्नियोगे यद्ग्रहणम् ॥

१ । ५१ **तद्धितार्थोत्तरपदसमाहारे च ७५८** ॥ १२८० द्विगुसंज्ञा प्रत्ययोत्तरपदयोश्चेदितरेतराश्रयत्वादप्रसिद्धिः । १२८१ अर्थे चेत्तद्धितानुत्पत्तिर्बहुव्रीहिवत् । १२८२ समासतद्धितविधाविति चेदन्यत्र समाससंज्ञाभावः । १२८३ सिद्धं तु प्रत्ययोत्तरपदयोश्चेति वचनात् । १२८४ द्विगोर्वा लुग्वचनं ज्ञापकं तद्धितोत्पत्तेः । १२८५ समाहारसमूहयोरविशेषात्समाहारग्रहणानर्थक्यं तद्धितार्थेन कृतत्वात् । १२८६ अभिधानार्थं तु । १२८७ द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् । १२८८ उत्तरपदेन परिमाणिना द्विगोः समासवचनम् । १२८९ अन्यत्र समुदायबहुव्रीहित्वादुत्तरपदप्रसिद्धिः । १२९० सर्वत्र मत्वर्थे प्रतिषेधः ॥

१ । ५५ **उपमानानि सामान्यवचनैः ७३४** ॥ १२९१ उपमानसमासे गुणवचनस्य विशेषभाक्त्वात्सामान्यवचनाप्रसिद्धिः । १२९२ न वा श्यामत्वस्योभयत्र भावात्तद्वाचकत्वाच्च शब्दस्य सामान्यवचनप्रसिद्धिः ॥

१ । ५७ **विशेषणं विशेष्येण बहुलम् ७३६** ॥ १२९३ विशेषणविशेष्ययोरुभयविशेषणत्वादुभयोश्च विशेष्यत्वादुपसर्जनाप्रसिद्धिः । १२९४ न वान्यतरस्य प्रधानभावात्तद्विशेषकत्वाच्चापरस्योपसर्जनप्रसिद्धिः ॥

१ । ५८ **पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च ७३७** ॥ १२९५ बहुलवचनस्याकृत्स्नत्वादुत्तरत्रानुक्रमणसामर्थ्यम् ॥

१ । ५९ **श्रेण्यादयः कृतादिभिः ७३८** ॥ १२९६ श्रेण्यादिषु च्व्यर्थवचनम् ॥

१ । ६० **क्तेन नञ्विशिष्टेनानञ् ७३९** ॥ १२९७ नञ्विशिष्टे समानप्रकृतिवचनम् । १२९८ अनञिति च प्रतिषेधो वक्तव्यः । १२९९ नुडिडधिकेन च । १३०० कृतापकृतादीनां चोपसंख्यानम् । १३०१ सिद्धं तु क्तेन विसमासावनञ् । १३०२ गतप्रत्यागतादीनां चोपसंख्यानम् ॥

१ । ६९ **वर्णो वर्णेन ७५०** ॥ १३०३ वर्णेन तृतीयासमास एतप्रतिषेधे वर्णग्रहणम् । १३०४ समानाधिकरणे द्विर्वर्णग्रहणम् । १३०५ समानाधिकरणाधिकारे प्रधानोपसर्जनानां परं परं विप्रतिषेधेन । १३०६ समानाधिकरणसमासाद्बहुव्रीहिः । १३०७ कदाचित्कर्मधारयः सर्वधनाद्यर्थः । १३०८ पूर्वपदातिशय आतिशयिकाद्बहुव्रीहिः सूक्ष्मवस्त्रतराद्यर्थः । १३०९ उत्तरपदातिशय आतिशयिको बहुव्रीहेर्बह्वाढ्यतराद्यर्थः । १३१० समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च ॥

१ । ७१ **चतुष्पादो गर्भिण्या ७५३** ॥ १३११ चतुष्पाज्जातिरिति वक्तव्यम् ॥

२ । ३ **द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ७१४** ॥ १३१२ द्वितीयादीनां विभाषाप्रकरणे विभाषावचनं ज्ञापकमवयवविधाने सामान्यविधानाभावस्य ॥

२ । ५ **कालाः परिमाणिना ७१६** ॥ १३१३ कालस्य येन समासस्तस्यापरिमाणित्वादनिर्देशः । १३१४ सिद्धं तु कालपरिमाणं यस्य स कालस्तेन । १३१५ एकवचनद्विगोश्चोपसंख्यानम् ॥

२ । ७ **ईषदकृता ७५५** ॥ १३१६ ईषद्गुणवचनेन ॥

२ । ८ **षष्ठी ७०२** ॥ १३१७ कृद्योगा च । १३१८ तत्स्थैश्च गुणैः । १३१९ न तु तद्विशेषणैः ॥

**२ । १० न निर्धारणे ७०४** ॥ १३२० प्रतिपदविधाना च ॥

**२ । १४ कर्मणि च ७०८** ॥ १३२१ कर्मणीति षष्ठीनिर्देशश्चेदकर्तरि कृता समासवचनम् । १३२२ तृजकाभ्यां चानर्थकः प्रतिषेधः । १३२३ क्तनिर्देशेऽसमर्थत्वादप्रतिषेधः । १३२४ प्रतिषेध्यमिति चेत्कर्तर्यपि प्रतिषेधः । १३२५ पूजायां च प्रतिषेधानर्थक्यम् । १३२६ तस्मादुभयप्राप्तौ कर्मणि षष्ठ्याः प्रतिषेधः ।

**२ । १८ कुगतिप्रादयः ७६१** ॥ १३२७ प्रादिप्रसङ्गे कर्मप्रवचनीयप्रतिषेधः । १३२८ व्यवेतप्रतिषेधश्च । १३२९ सिद्धं तु क्वाङ्स्वतिदुर्गतिवचनात् । १३३० प्रादयः क्तार्थे । ('१३३१ स्वती पूजायाम् । १३३२ दुर्निन्दायाम् । १३३३ आङीषदर्थे । १३३४ कुः पापार्थे' इति सौनागानां पाठः) । १३३५ प्रादयो गताद्यर्थे प्रथमया । १३३६ अत्यादयः क्रान्ताद्यर्थे द्वितीयया । १३३७ अवादयः क्रुष्टाद्यर्थे तृतीयया । १३३८ पर्यादयो ग्लानाद्यर्थे चतुर्थ्या । १३३९ निरादयः क्रान्ताद्यर्थे पञ्चम्या । १३४० अव्ययं प्रवृद्धादिभिः । १३४१ इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च । १३४२ उदात्तवता तिङा गतिमता चाव्ययं समस्यत इति वक्तव्यम् ॥

**२ । १९ उपपदमतिङ् ७८२** ॥ १३४३ उपपदमतिङिति तदर्थप्रतिषेधः । १३४४ क्रियाप्रतिषेधो वा । १३४५ षष्ठीसमासादुपपदसमासो विप्रतिषेधेन । १३४६ न वा षष्ठीसमासस्याभावादुपपदसमासः ॥

**२ । २३ शेषो बहुव्रीहिः ८२९** ॥ १३४७ शेषवचनं पदतश्चेन्नाभावात् । १३४८ अर्थतश्चेदविशेषात् ॥

**२ । २४ अनेकमन्यपदार्थे ८३०** ॥ १३४९ अनेकवचनमुपसर्जनार्थम् । १३५० न वैकविभक्तित्वात् । १३५१ पदार्थाभिधानेऽनुप्रयोगानुपपत्तिरभिहितत्वात् । १३५२ न वानभिहितत्वात् । १३५३ सामान्याभिधाने हि विशेषानभिधानम् । १३५४ विभक्त्यर्थाभिधानेऽद्रव्यस्य लिङ्गसंख्योपचारानुपपत्तिः । १३५५ सिद्धं तु यथा गुणवचनेषु । १३५६ बहुव्रीहिः समानाधिकरणानाम् । १३५७ अव्ययानां च । १३५८ सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च । १३५९ समुदायविकारषष्ठ्याश्च । १३६० प्रादिभ्यो धातुजस्य वा । १३६१ नञोऽस्त्यर्थानाम् । १३६२ न वानभिधानादसमानाधिकरणेषु संज्ञाभावः । १३६३ अर्थनियमे मत्वर्थग्रहणम् । १३६४ तथा चोत्तरस्य वचनार्थः । १३६५ कर्मवचनेनाप्रथमायाः । १३६६ कर्तृवचनेनापि । १३६७ सुबधिकारेऽस्तिक्षीरादिवचनम् । १३६८ न वाव्ययत्वात् ॥

**२ । २५ संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये ८४३** ॥ १३६९ संख्यासमासे सुजन्तत्वात्संख्याप्रसिद्धिः । १३७० न वासुजन्तत्वात् । १३७१ सुजभावोऽभिहितार्थत्वात्समासे । १३७२ आशिष्यः संख्योत्तरपदः संख्येयवाभिधायित्वात् । १३७३ मत्वर्थे वा पूर्वस्य विधानात् । १३७४ कबभावार्थं वा ॥

**२ । २६,२८ दिङ्नामान्यन्तराले ८४५ । तेन सहेति तुल्ययोगे ८४८** ॥ १३७५ दिक्समाससहयोगयोश्चान्तरालप्रधानाभिधानात् । १३७६ सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्यो दक्षिणोत्तरपूर्वाणामित्येवमर्थम् । १३७७ मत्वर्थे वा पूर्वस्य विधानात् । १३७८ कबभावार्थं वा ॥

**२ । २७ तत्र तेनेदमिति सरूपे ८४६** ॥ १३७९ तृतीयासप्तम्यन्तेषु च क्रियाभिधानात् ।

१३८० न वैकशेषप्रतिषेधार्थम् । १३८१ पूर्वदीर्घार्थं च । १३८२ मत्त्वर्थे वा पूर्वस्य विधानात् । १३८३ कबभावार्थं वा ॥

**२ । २९ चार्थे द्वन्द्वः ९०१** ॥ १३८४ चार्थे द्वन्द्ववचनेऽसमासेऽपि चार्थसंप्रत्ययादनिष्टप्रसङ्गः । १३८५ सिद्धं तु युगपदधिकरणवचने द्वन्द्ववचनात् । १३८६ तत्र पुंवद्भावप्रतिषेधः । १३८७ विप्रतिषिद्धे चानुपपत्तिः । १३८८ शब्दपौर्वापर्यप्रयोगादर्थपौर्वापर्याभिधानम् । १३८९ शब्दपौर्वापर्यप्रयोगादर्थपौर्वापर्याभिधानमिति चेद्द्विवचनबहुवचनानुपपत्तिः । १३९० विग्रहे च युगपद्वचनं ज्ञापकं युगपद्वचनस्य । १३९१ समुदायात्सिद्धम् । १३९२ समुदायात्सिद्धमिति चेन्नैकार्थत्वात्समुदायस्य । १३९३ नैकार्थ्यम् । १३९४ तयोरनेकार्थत्वाद्बहुवचनप्रसङ्ग इति चेन्न बहुत्वाभावात् । १३९५ अन्यवाचकेनान्यस्य वचनानुपपत्तिः । १३९६ अन्यवाचकेनान्यस्य वचनानुपपत्तिरिति चेत्प्लक्षस्य न्यग्रोधत्वान्न्यग्रोधस्य प्लक्षत्वात्स्वशब्देनाभिधानम् । १३९७ कारणाद्द्रव्ये शब्दनिवेश इति चेत्तुल्यकारणत्वात्सिद्धम् । १३९८ दर्शनं हेतुरिति चेत्तुल्यम् । १३९९ तद्विषयं च । १४०० अन्यत्रापि तद्विषयदर्शनात् । १४०१ एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्न इति चेदनुक्तत्वात्प्लक्षेण न्यग्रोधस्य न्यग्रोधप्रयोगः । १४०२ अभिधानं पुनः स्वाभाविकम् । १४०३ एकादीनां दशादिभिर्द्वन्द्वः । १४०४ एकादीनां दशादिभिर्द्वन्द्व इति चेद्विंशत्यादिषु वचनप्रसङ्गः । १४०५ सिद्धं त्वधिकान्ता संख्या संख्यया समानाधिकरणाधिकारेऽधिकलोपश्च ॥

**२ । ३० उपसर्जनं पूर्वम् ६५४** ॥ १४०६ उपसर्जनस्य पूर्ववचनं परप्रयोगनिवृत्त्यर्थम् । १४०७ न वानिष्टदर्शनात् । १४०८ षष्ठ्यन्तयोः समासेऽर्थाभेदात्प्रधानस्यापूर्वनिपातः ॥

**२ । ३४ अल्पाच्तरम् ९०५** ॥ १४०९ अतन्त्रे तरनिर्देशे शङ्खतूणवयोर्मृदङ्गेन समासः । १४१० अनेकप्राप्तावेकस्य नियमोऽनियमः शेषेषु । १४११ ऋतुनक्षत्राणामानुपूर्व्येण समानाक्षराणाम् । १४१२ अभ्यर्हितम् । १४१३ लघ्वक्षरम् । १४१४ सर्वत एवाभ्यर्हितं पूर्वं निपततीति वाच्यम् । १४१५ वर्णानामानुपूर्व्येण । १४१६ भ्रातुश्च ज्यायसः । १४१७ संख्याया अल्पीयस्याः । १४१८ धर्मादिषूभयम् ॥

**२ । ३५ सप्तमीविशेषणे बहुव्रीहौ ८९८** ॥ १४१९ बहुव्रीहौ सर्वनामसंख्ययोरुपसंख्यानम् । १४२० वा प्रियस्य । १४२१ सप्तम्याः पूर्वनिपाते गड्वादिभ्यः परवचनम् ॥

**२ । ३६ निष्ठा ८९९** ॥ १४२२ निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनम् । १४२३ न वोत्तरपदस्यान्तोदात्तवचनं ज्ञापकं परभावस्य । १४२४ प्रतिषेधे तु पूर्वनिपातप्रसङ्गस्तस्माद्राजदन्तादिषु पाठः । १४२५ प्रहरणार्थेभ्यश्च । १४२६ द्वन्द्वे घ्यजाद्यदन्तं विप्रतिषेधेन । १४२७ उभाभ्यामल्पाच्तरम् ॥

**२ । ३८ कडाराः कर्मधारये ७५१** ॥ १४२८ कडारादय इति वक्तव्यम् ॥

**३ । १ अनभिहिते ५३६** ॥ १४२९ अनभिहितवचनमनर्थकमन्यत्रापि विहितस्याभावादभिहिते । १४३० अम्बहुजकक्षु नानादेशत्वादुत्सर्गाप्रतिषेधः । १४३१ अनभिहितस्तु विभक्त्यर्थस्तस्मादनभिहितवचनम् । १४३२ अभिहिते प्रथमाभावः । १४३३ तिङ्कृत्तद्धितसमासैः परिसंख्यानम् । १४३४ उत्सर्गे हि प्रातिपदिकसामानाधिकरण्ये विभक्तिवचनम् । १४३५ द्वयोः क्रिययोः कारकेऽन्यतरेणाभिहिते विभक्त्यभावप्रसङ्गः । १४३६ न वान्यतरेणानभि-

धानात् । १४३७ अनभिहिते हि विधानम् । १४३८ अनभिहितवचनमनर्थकं प्रथमाविधानस्यानवकाशत्वात् । १४३९ अवकाशोऽकारकमिति चेन्नास्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति । १४४० विप्रतिषेधाद्वा प्रथमाभावः । १४४१ कृत्प्रयोगे तु परं विधानं षष्ठ्यास्तत्प्रतिषेधार्थम् ॥

**३ । २ कर्मणि द्वितीया ५३७** ॥ १४४२ समयानिकषाहायोगेषूपसंख्यानम् । १४४३ द्वितीयाविधाने अभितःपरितःसमयानिकषाध्यधिधिग्योगेषूपसंख्यानम् । १४४४ उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥

**३ । ४ अन्तरान्तरेणयुक्ते ५४५** ॥ १४४५ अन्तरान्तरेणयुक्तानामप्रधानवचनम् ॥

**३ । ५ कालाध्वनोरत्यन्तसंयोगे ५५८** ॥ १४४६ अत्यन्तसंयोगे कर्मवद्भावार्थम् ॥

**३ । ६ अपवर्गे तृतीया ५६३** ॥ १४४७ क्रियापवर्ग इति वक्तव्यम् ॥

**३ । ७ सप्तमीपञ्चम्यौ कारकमध्ये ६४३** ॥ १४४८ क्रियामध्य इति वक्तव्यम् ॥

**३ । ८ कर्मप्रवचनीययुक्ते द्वितीया ५४८** ॥ १४४९ कर्मप्रवचनीययुक्ते प्रत्यादिभिश्च लक्षणादिषूपसंख्यानं सप्तमीपञ्चम्योः प्रतिषेधार्थम् ॥

**३ । ९ यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी ६४५** ॥ १४५० यस्य चेश्वरवचनमिति कर्तृनिर्देशश्चेदवचनात्सिद्धम् । १४५१ प्रथमानुपपत्तिस्तु । १४५२ स्ववचनात्सिद्धम् ॥

**३ । १२ गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ५८५** ॥ १४५३ अध्वन्यर्थग्रहणम् । १४५४ आस्थितप्रतिषेधश्च । १४५५ चेष्टायामनध्वानि स्त्रियं गच्छत्यजां नयतीत्यतिप्रसङ्गः । १४५६ सिद्धं त्वसंप्राप्तवचनात् । १४५७ अध्वनश्चानपवादः ॥

**३ । १३ चतुर्थी संप्रदाने ५७०** ॥ १४५८ चतुर्थीविधाने तादर्थ्य उपसंख्यानम् । १४५९ क्लृपि संपद्यमाने । १४६० उत्पातेन ज्ञाप्यमाने । १४६१ हितयोगे च ॥

**३ । १६ नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ५८३** ॥ १४६२ स्वस्तियोगे चतुर्थी कुशलार्थैराशिषि वाविधानात् । १४६३ अलमिति पर्याप्त्यर्थग्रहणम् ॥

**३ । १७ मन्यकर्मण्यनादरे विभाषाप्राणिषु ५८४** ॥ १४६४ यदेतदप्राणिष्वित्येतदनावादिष्विति वक्ष्यामि । १४६५ मन्यकर्मणि प्रकृष्यकुत्सितग्रहणम् ॥

**३ । १८ कर्तृकरणयोस्तृतीया ५६१** ॥ १४६६ तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानम् ॥

**३ । १९ सहयुक्तेऽप्रधाने ५६४** ॥ १४६७ सहयुक्तेऽप्रधानवचनमनर्थकमुपपदविभक्तेः कारकविभक्तिर्बलीयस्त्वादन्यत्रापि ॥

**३ । २० येनाङ्गविकारः ५६५** ॥ १४६८ अङ्गाद्विकृतात्तद्विकारतश्चेदङ्गिनो वचनम् ॥

**३ । २१ इत्थंभूतलक्षणे ५६६** ॥ १४६९ इत्थंभूतलक्षणे तत्स्थे प्रतिषेधः । १४७० नवेत्थंभूतस्य लक्षणेनापृथग्भावात् ॥

**३ । २२ संज्ञोऽन्यतरस्यां कर्मणि ५६७** ॥ १४७१ संज्ञः कृत्प्रयोगे षष्ठी विप्रतिषेधेन । १४७२ उपपदविभक्तेश्चोपपदाविभक्तिः ॥

**३ । २३ हेतौ ५६८** ॥ १४७३ निमित्तकारणहेतुषु सर्वासां प्रायोदर्शनम् ॥

**३ । २८ अपादाने पञ्चमी ५८७** ॥ १४७४ पञ्चमीविधाने ल्यब्लोपे कर्मण्युपसंख्या-

नम् । १४७५ अधिकरणे च । १४७६ प्रश्नाख्यानयोश्च । १४७७ यतश्चाध्वकालनिर्माणम् । १४७८ तद्युक्तात्काले सप्तमी । १४७९ अध्वनः प्रथमा च ॥

३ । ३२ **पृथग्विनानानाभिस्तृतीयान्यतरस्याम् ६०३** ॥ १४८० पृथगादिषु पञ्चमीविधानम् । १४८१ अनधिकारात् । १४८२ अधिकारे हि द्वितीयाषष्ठीविषये प्रतिषेधः ॥

३ । ३५ **दूरान्तिकार्थेभ्यो द्वितीया च ६०५** ॥ १४८३ दूरान्तिकार्थेभ्यः पञ्चमीविधाने तद्युक्तात्पञ्चमीप्रतिषेधः । १४८४ न वा तत्रापि दर्शनादप्रतिषेधः ॥

३ । ३६ **सप्तम्यधिकरणे च ६३३** ॥ १४८५ सप्तमीविधाने क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् । १४८६ साध्वसाधुप्रयोगे च । १४८७ कारकार्हाणां च कारकत्वे । १४८८ अकारकार्हाणां चाकारकत्वे । १४८९ तद्विपर्यासे च । १४९० निमित्तात्कर्मयोगे ॥

३ । ३७ **यस्य च भावेन भावलक्षणम् ६३४** ॥ १४९१ भावलक्षणे सप्तमीविधानेऽभावलक्षण उपसंख्यानम् । १४९२ सिद्धं तु भावप्रवृत्तौ यस्य भावारम्भवचनात् ॥

३ । ४३ **साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ६४०** ॥ १४९३ अप्रत्यादिभिरिति वक्तव्यम् ॥

३ । ४६ **प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ५३२** ॥ १४९४ प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमालक्षणे पदसामानाधिकरण्य उपसंख्यानमधिकत्वात् । १४९५ न वा वाक्यार्थत्वात् । १४९६ अभिहितलक्षणायामनभिहिते प्रथमाविधिः । १४९७ अभिहितानभिहिते प्रथमाभावः । १४९८ तिङ्समानाधिकरण इति चेत्तिङोऽप्रयोगे प्रथमाविधिः । १४९९ शतृशानचोश्च निमित्तभावात्तिङोऽभावस्तयोरपवादत्वात् ॥

३ । ५० **षष्ठी शेषे ६०६** ॥ १५०० प्रत्ययावधारणाच्छेषवचनम् । १५०१ अर्थावधारणाद्वा । १५०२ षष्ठी शेष इति चेद्विशेष्यस्य प्रतिषेधः । १५०३ तत्र प्रथमाविधिः ॥

३ । ५२ **अधीगर्थदयेशां कर्मणि ६१३** ॥ १५०४ कर्मादिष्वकर्मकवद्वचनम् । १५०५ कर्माभिधाने लिङ्गवचनानुपपत्तिः । १५०६ षष्ठीप्रसङ्गश्च ॥

३ । ५४ **रुजार्थानां भाववचनानामज्वरेः ६१५** ॥ १५०७ अज्वरिसंताप्योरिति वक्तव्यम् ॥

३ । ६१ **प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने ६२१** ॥ १५०८ हविषोऽप्रस्थितस्य ॥

३ । ६२ **चतुर्थ्यर्थे बहुलं छन्दसि ३३९६** ॥ १५०९ षष्ठ्यर्थे चतुर्थीवचनम् ॥

३ । ६५ **कर्तृकर्मणोः कृति ६२३** ॥ १५१० कर्तृकर्मणोः षष्ठीविधाने कृद्ग्रहणानर्थक्यं लप्रतिषेधात् । १५११ तस्य कर्मकर्त्रर्थमिति चेत्प्रतिषेधेऽपि तदन्तकर्मकर्तृत्वात्सिद्धम् ॥

३ । ६६ **उभयप्राप्तौ कर्मणि ६२४** ॥ १५१२ उभयप्राप्तौ कर्मणि षष्ठ्याः प्रतिषेधेऽकादिप्रयोगेऽप्रतिषेधः । १५१३ अकाकारयोः प्रयोगे प्रतिषेधो नेति वक्तव्यम्, शेषे विभाषा ॥

३ । ६७ **क्तस्य च वर्तमाने ६२५** ॥ १५१४ क्तस्य च वर्तमाने नपुंसके भाव उपसंख्यानम् । १५१५ शेषविज्ञानात्सिद्धम् ॥

३ । ६९ **न लोकाव्ययनिष्ठाखलर्थतृनाम् ६२७** ॥ १५१६ लादेशे सद्ग्रहणं किकिनोः प्रतिषेधार्थम् । १५१७ तयोरलादेशत्वात् । १५१८ उकारप्रयोगे नेति वक्तव्यम् । १५१९ उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः । १५२० अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः । १५२१ शानंश्चानश्शतृणामुपसंख्यानम् । १५२२ द्विषः शतुर्वावचनम् ॥

३ । ७० **अकेनोर्भविष्यदाधमर्ण्ययोः ६२८** ॥ १५२३ अकस्य भविष्यति । १५२४ इन आधमर्ण्ये च ॥

३ । ७१ **कृत्यानां कर्तरि वा ६२९** ॥ १५२५ भव्यादीनां कर्मणोऽनभिधानात्कृत्यानां कर्तृग्रहणम् ॥

४ । १ **द्विगुरेकवचनम् ७३१** ॥ १५२६ प्रत्यधिकरणं वचनोत्पत्तेः संख्यासामानाधिकरण्याच्च द्विगोरेकवचनविधानम् । १५२७ तत्रानुप्रयोगस्यैकवचनाभावोऽद्विगुत्वात् । १५२८ सिद्धं तु द्विग्वर्थस्यैकवद्वचनात् । १५२९ एकशेषप्रतिषेधश्च । १५३० न वान्यस्यानेकत्वात् । १५३१ समाहारग्रहणं च तद्धितार्थप्रतिषेधार्थम् । १५३२ न वा समाहारैकत्वात् ॥

४ । २ **द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ९०६** ॥ १५३३ प्राणितूर्यसेनाङ्गानां तत्पूर्वपदोत्तरपदग्रहणम् । १५३४ योगविभागात्सिद्धम् ॥

४ । ३ **अनुवादे चरणानाम् ९०७** ॥ १५३५ स्थेणोः । १५३६ अद्यतन्यां च ॥

४ । ७ **विशिष्टलिङ्गो नदी देशोऽग्रामाः ९११** ॥ १५३७ ग्रामप्रतिषेधे नगरप्रतिषेधः । १५३८ उभयतश्च ग्रामाणाम् ॥

४ । ११ **गवाश्वप्रभृतीनि च ९१५** ॥ १५३९ गवाश्वप्रभृतिषु यथोच्चरितं द्वन्द्ववृत्तम् ॥

४ । १२ **विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् ९१६** ॥ १५४० बहुप्रकृतिः फलसेनावनस्पतिमृगशकुन्तक्षुद्रजन्तुधान्यतृणानाम् । १५४१ पशुशकुनिद्वन्द्वे विरोधिनां पूर्वविप्रतिषिद्धम् । १५४२ अश्ववडवयोः पूर्वलिङ्गत्वात्पशुद्वन्द्वनपुंसकम् । १५४३ प्रतिपदविधानात्सिद्धम् । १५४४ एकवचनमनर्थकं समाहारैकत्वात् ॥

४ । २६ **परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः ८१२** ॥ १५४५ परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति चेत्प्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधः । १५४६ पूर्वपदस्य च । १५४७ समासादन्यल्लिङ्गमिति चेदश्ववडवयोष्टाब्लुग्वचनम् । १५४८ निपातनात्सिद्धम् । १५४९ उपसर्जनह्रस्वत्वं वा । १५५० परवल्लिङ्गमिति शब्दशब्दार्थौ १५५१ प्राप्तादिषु चैकदेशिग्रहणात्सिद्धम् ॥

४ । २९ **रात्राह्नाहाः पुंसि ८१४** ॥ १५५२ अनुवाकादयः पुंसि ॥

४ । ३० **अपथं नपुंसकम् ८१५** ॥ १५५३ पुण्यसुदिनाभ्यामह्नो नपुंसकत्वं वक्तव्यम् । १५५४ पथः संख्याव्ययादेः । १५५५ द्विगुश्च । १५५६ अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यत इति वक्तव्यम् । १५५७ वाबन्तः । १५५८ अनो नलोपश्च वा च स्त्रियां भाष्यत इति वक्तव्यम् । १५५९ पात्रादिभ्यः प्रतिषेधो वक्तव्यः ॥

४ । ३१ **अर्धर्चाः पुंसि च ८१६** ॥ १५६० अर्धर्चादय इति वक्तव्यम् ॥

४ । ३२ **इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ३५०** ॥ १५६१ अन्वादेशे समानाधिकरणग्रहणम् । १५६२ देवदत्तं भोजयेमं चेत्यप्रसङ्गार्थम् । १५६३ अन्वादेशश्च कथितानुकथनमात्रम् । १५६४ आदेशवचनं साकच्कार्थम् । १५६५ शित्करणं सर्वादेशार्थम् । १५६६ न वान्त्यस्य विकारवचनानर्थक्यात् । १५६७ अर्थवत्त्वादेशप्रतिषेधार्थम् । १५६८ तस्माच्छित्करणम् ॥

४ । ३४ **द्वितीयाटौस्स्वेनः ३५१** ॥ १५६९ एनदिति नपुंसकैकवचने ॥

४ । ३५ **आर्धधातुके २४३२** ॥ १५७० जग्ध्यादिष्वार्धधातुकाश्रयत्वात्साति तस्मिन्वि-

धानम् । १५७१ तत्रोत्सर्गलक्षणप्रतिषेधः । १५७२ सामान्याश्रयत्वाद्विशेषस्यानाश्रयः । १५७३ सामान्यश्रयत्वाद्विशेषस्यानाश्रय इति चेदुवर्णाकारान्तेभ्यो ण्यद्विधिप्रसङ्गः । १५७४ पौर्वापर्याभावाच्च सामान्येनानुपपत्तिः । १५७५ सिद्धं तु सार्वधातुके प्रतिषेधात् ॥

**४ । ३७ लुङ्सनोर्घस्लृ २४२७** ॥ १५७६ घस्लभावेऽच्युपसंख्यानम् ॥

**४ । ४५ इणो गा लुङि २४५८** ॥ १५७७ इण्वदिकः ॥

**४ । ४९ गाङ् लिटि २४५९** ॥ १५७८ गाङ्यनुबन्धकरणं विशेषणार्थम् । १५७९ ज्ञापकं वा सानुबन्धकस्यादेशवचन इत्कार्याभावस्य । १५८० प्रयोजनं चक्षिङः ख्याञ् । १५८१ लटः शतृशानचौ । १५८२ युवोरनाकौ । १५८३ मेभ्राननुबन्धकस्याम्वचनम् ॥

**४ । ५४ चक्षिङः ख्याञ् २४३६** ॥ १५८४ चक्षिङः क्शाञ्ख्याञौ । १५८५ ख्शादिर्वा । १५८६ आसिद्धे शस्य यवचनं विभाषा । १५८७ प्रयोजनं सौप्रख्ये वुञ्विधिः । १५८८ निष्ठानत्वमाख्याते । १५८९ रुविधिः पुंख्याने । १५९० णत्वं पर्याख्याने । १५९१ सस्थानत्वं नमःख्यात्रे । १५९२ वर्जने प्रतिषेधः । १५९३ असनयोश्च । १५९४ बहुलं तणि । १५९५ अन्नवधकगात्रविचक्षणाजिराद्यर्थम् ॥

**४ । ५६ अजेर्व्यघञपोः २२९२** ॥ १५९६ घञपोः प्रतिषेधे क्यप उपसंख्यानम् । १५९७ ('वलादावार्धधातुके वेष्यते' इति काशिका भाष्यसंमता) ॥

**४ । ५८ ण्यक्षत्रियार्षञितो यूनि लुगणिञोः १२७६** ॥ १५९८ अणिञोर्लुकि तद्राजाद्युवप्रत्ययस्योपसंख्यानम् । १५९९ अणिञोर्लुकि क्षत्रियगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानम् । १६०० अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानम् ॥

**४ । ६२ तद्राजस्य बहुषु तेनैवास्त्रियाम् ११९३** ॥ १६०१ तद्राजादीनां लुकि समासबहुत्वे प्रतिषेधः । १६०२ अबहुत्वे च लुग्वचनम् । १६०३ द्वन्द्वेऽबहुषु लुग्वचनम् । १६०४ सिद्धं तु प्रत्ययार्थबहुत्वे लुग्वचनात् । १६०५ द्वन्द्वेऽबहुषु लुग्वचनम् । १६०६ गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक् । १६०७ एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि । १६०८ न वा सर्वेषां द्वन्द्वे बह्वर्थत्वात् ॥

**४ । ६४ यञञोश्च ११०८** ॥ १६०९ यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम् ॥

**४ । ६७ न गोपवनादिभ्यः ११४९** ॥ १६१० गोपवनादिप्रतिषेधः प्राग्घरितादिभ्यः ॥

**४ । ६९ उपकादिभ्योऽन्यतरस्यामद्वन्द्वे ११५१** ॥ १६११ अद्वन्द्व इति द्वन्द्वाधिकारनिवृत्त्यर्थम् ॥

**४ । ७० आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ११५२** ॥ १६१२ आगस्त्यकौण्डिन्ययोः प्रकृतिनिपातनम् । १६१३ लुक्प्रतिषेधे वृद्ध्यर्थम् । १६१४ प्रत्ययान्तनिपातने हि वृद्ध्यभावः । १६१५ अधिकारात्प्रत्ययलोपः ॥

**४ । ७४ यङोऽचि च २६५०** ॥ १६१६ ऊतोऽचि ॥

**४ । ७७ गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु २२२३** ॥ १६१७ गापोर्ग्रहण इण्पिबत्योर्ग्रहणम् ॥

**४ । ७९ तनादिभ्यस्तथासोः २५४७** ॥ १६१८ तथासोरात्मनेपदवचनम् । १६१९ एकवचनग्रहणं वा । १६२० अवचने ह्यनिष्टप्रसङ्गः ॥

**४। ८१ आमः २२३८** ॥ १६२१ आमो लेर्लोपे लुङ्लोटोरुपसंख्यानम्। १६२२ आमन्तेभ्यो णलः प्रतिषेधः । १६२३ आमन्तेभ्योऽर्थवद्ग्रहणाण्णलोऽप्रतिषेधः । १६२४ आमन्तेभ्योऽर्थवद्ग्रहणाण्णलोऽप्रतिषेध इति चेदमः प्रतिषेधः। १६२५ लुगादेशापवादः। १६२६ तिङ्कृताभावस्तु। १६२७ सुबन्तपदत्वात्सिद्धम्। १६२८ लकारस्य कृत्त्वात्प्रातिपदिकत्वं तदाश्रयं प्रत्ययविधानम्। १६२९ अव्ययत्वं मकारान्तत्वात्। १६३० स्वरः कृदन्तप्रकृतिस्वरत्वात्। १६३१ तथा च निघातानिघातसिद्धिः। १६३२ नञा तु समासप्रसङ्गः॥

**४। ८२ अव्ययादाप्सुपः ४५२** ॥ १६३३ अव्ययादाप्सो लुग्वचनानर्थक्यं लिङ्गाभावात्॥

**४। ८३ नाव्ययीभावादतोऽम्त्वपञ्चम्याः ६५७** ॥ १६३४ नाव्ययीभावादत इति योगव्यवसानम्। १६३५ पञ्चम्या अम्प्रतिषेधार्थम्। १६३६ एकयोगे ह्युभयोः प्रतिषेधः। १६३७ तुर्नियामकः। १६३८ अमि पञ्चमीप्रतिषेधेऽपादानग्रहणम्। १६३९ कर्मप्रवचनीययुक्तेऽप्रतिषेधार्थम्। १६४० न वोत्तरपदस्य कर्मप्रवचनीययोगात्समासात्पञ्चम्यभावः॥

**४। ८४ तृतीयासप्तम्योर्बहुलम् ६६५८** ॥ १६४१ सप्तम्या ऋद्धिनदीसमाससंख्यावयवेभ्यो नित्यम्॥

**४। ८५ लुटः प्रथमस्य डारौरसः २१८८** ॥ १६४२ टितां टेरेविधेर्लुटो डारौरसः पूर्वविप्रतिषिद्धम्। १६४३ आत्मनेपदानां चेति वचनात्सिद्धम्। १६४४ तच्च समसंख्यार्थम्। १६४५ डाविकारस्य शित्करणं सर्वादेशार्थम्। १६४६ निघातप्रसङ्गस्तु। १६४७ सिद्धमलोऽन्त्यविकारात्। १६४८ डिति टेर्लोपाल्लोपः। १६४९ अनित्त्वाद्वा। १६५० प्रश्लिष्टनिर्देशाद्वा। १६५१ तिङ्ग्रहणमेकदेशविकृतस्यानन्यत्वात्। १६५२ स्वरे विप्रतिषेधात्सिद्धम्॥

इति द्वितीयोऽध्यायः।

## तृतीयोऽध्यायः।

**१।१ प्रत्ययः १८०** ॥ १६५३ प्रत्ययाधिकारे प्रकृत्युपपदोपाधीनामप्रतिषेधः। १६५४ निमित्तस्य निमित्तिकार्यार्थत्वादन्यत्रापि। १६५५ प्रधाने कार्यसंप्रत्ययाद्वा सिद्धम्। १६५६ विकारागमेषु च परविज्ञानात्। १६५७ षष्ठीनिर्दिष्टस्य च तद्युक्तत्वात्। १६५८ प्रत्ययविधानानुपपत्तिस्तु। १६५९ तस्मात्तत्र पञ्चमीनिर्देशात्सिद्धम्। १६६० अर्थाश्रयत्वाद्वा॥

**१। २ परश्च १८१** ॥ १६६१ परवचनमनर्थकं पञ्चमीनिर्दिष्टाद्धि परस्य। १६६२ अत्यन्तापरदृष्टानां वा परभूतलोपार्थम्। १६६३ प्रयोगनियमार्थं वा। १६६४ प्रकृतेरर्थाभिधाने प्रत्ययादर्शनात्। १६६५ द्वयसजादीनां च केवलदृष्टत्वात्। १६६६ वावचने चानुत्पत्त्यर्थम्। १६६७ तत्र प्रत्ययनियमे प्रकृतिनियमाभावः। १६६८ प्रकृतिनियमे प्रत्ययानियमः। १६६९ सिद्धं तूभयनियमात्॥

**१। ३ आद्युदात्तश्च ३७०८** ॥ १६७० आद्युदात्तत्वस्य प्रत्ययसंज्ञासंनियोगे प्रयोजनं यस्य संज्ञाकरणं तस्याद्युदात्तार्थम्। १६७१ असंनियोगे हि यस्मात्स तदादेराद्युदात्तत्वं तदन्तस्य चानुदात्तत्वम्। १६७२ न वा प्रकृतेराद्युदात्तवचनं ज्ञापकं तदादेरग्रहणस्य। १६७३ प्रकृतिस्वरस्य विधानसामर्थ्यात्प्रत्ययस्वराभावः। १६७४ आगमानुदात्तार्थं वा। १६७५ न वागमस्यानुदात्तवचनात्। १६७६ अवचने हि सीयुडादेराद्युदात्तत्वम्। १६७७ आद्यु-

दात्तस्य वा लोपार्थम् । १६७८ न वा बहिरङ्गलक्षणत्वात् । १६७९ अवचने हिङ्किनित्कित्स्व-तिप्रसङ्गः । १६८० प्रत्ययाद्युदात्तत्वाद्धातोरन्तः । १६८१ पित्स्वराच्चित्स्वरश्चापि । १६८२ चित्स्वरश्चापि पित्स्वरात् । १६८३ न वाद्युदात्तस्य प्रत्ययसंज्ञासंनियोगात् । १६८४ टापि स्वरितेनैकादेशः । १६८५ चापि चित्करणात् ॥

१ । ५ गुप्तिज्किद्भ्यः सन् २३९३ ॥ १६८६ गुपादिष्वनुबन्धकरणमात्मनेपदार्थम् । ('१६८७ गुपेर्निन्दायाम् । १६८८ तिजेः क्षमायाम् । १६८९ कितेर्व्याधिप्रतीकारे' इति काशिकार्थः) ॥

१ । ६ मान्बधदानशान्भ्यो दीर्घश्चाभ्यासस्य २३९४ ॥ १६९० अभ्यासदीर्घत्वेऽवर्णस्य दीर्घप्रसङ्गः । १६९१ न वाभ्यासविकारेष्वपवादस्योत्सर्गाबाधकत्वात् । ('१६९२ मानेर्जिज्ञासायाम् । १६९३ बधेर्वैरूप्ये । १६९४ दानेरार्जवे । १६९५ शानेर्निशाने' इति काशिका) ॥

१ । ७ धातोः कर्मणः समानकर्तृकादिच्छायां वा २६०८ ॥ १६९६ कर्मग्रहणात्सन्विधौ धातुग्रहणानर्थक्यम् । १६९७ सोपसर्गे वै कर्म । १६९८ सोपसर्गं कर्मेति चेत्कर्मविशेषकत्वादुपसर्गस्यानुपसर्गं कर्म । १६९९ सोपसर्गस्य हि कर्मत्वे धात्वधिकारेऽपि सनोऽविधानमकर्मकत्वात् । १७०० सुबन्ताच्चाप्रसङ्गः क्यजादीनामपवादत्वात् । १७०१ अनभिधानाद्वा । १७०२ कर्मसमानकर्तृकग्रहणानर्थक्यं चेच्छाभिधाने प्रत्ययविधानात् । १७०३ अकर्मणो ह्यसमानकर्तृकाद्वानभिधानम् । १७०४ अङ्गपरिमाणार्थं तु । १७०५ वावचनानर्थक्यं च तत्र नित्यत्वात्सनः । १७०६ तुमुनन्ताद्वा तस्य च लुग्वचनम् । १७०७ आशङ्कायामचेतनेषूपसंख्यानम् । १७०८ न वा तुल्यकारणत्वादिच्छाया हि प्रवृत्तित उपलब्धिः । १७०९ उपमानाद्वा सिद्धम् । १७१० सर्वस्य वा चेतनावत्त्वात् ॥

१ । ८ सुप आत्मनः क्यच् २६५७ ॥ १७११ छन्दस्यघशब्दात्परेच्छायां क्यज् । १७१२ समानाधिकरणानां सर्वत्रावृत्तिरयोगादेकेन । १७१३ द्वितीयानुपपत्तिस्तु । १७१४ क्यचि मान्ताव्ययप्रतिषेधः । १७१५ गोसमानाक्षरनान्तादित्येके ॥

१ । ९ काम्यच्च २६६३ ॥ १७१६ काम्यचश्चित्करणानर्थक्यं कस्येदर्थाभावात् ॥

१ । १० उपमानादाचारे २६६४ ॥ १७१७ अधिकरणाच्च ॥

१ । ११ कर्तुः क्यङ् सलोपश्च २६६५ ॥ १७१८ सलोपो वा । १७१९ ओजोऽप्सरसोर्नित्यम् । १७२० सलोपोऽप्सरस एव । १७२१ आचारे गल्भक्लीबहोडेभ्यः क्विब्वा । १७२२ सर्वप्रातिपदिकेभ्य आचारे क्विब्वक्तव्योऽश्वति गर्दभतीत्येवमर्थम् ॥

१ । १२ भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः २६६७ ॥ १७२३ भृशादिष्वभूततद्भावग्रहणम् । १७२४ च्विप्रतिषेधानर्थक्यं च भवत्यर्थे क्यङ्वचनात् । १७२५ भवतियोगे च्विविधानम् । १७२६ डाचि वचनप्रामाण्यात् । १७२७ भृशादिषूपसर्गः प्रत्ययार्थविशेषणमिति चेत्स्वरे दोषः । १७२८ सोपसर्गादिति चेदड्व्यवायिद्विर्वचनेषु दोषः ॥

१ । १३ लोहितादिडाज्भ्यः क्यष् २६६८ ॥ १७२९ लोहितडाज्भ्यः क्यष्वचनम् । १७३० भृशादिष्वितराणि ॥

---

१–२ गोपनाद्यर्थकानां धातूनामनेकार्थत्वान्निन्दादौ वृत्तिः—इति न्यायसिद्धानि न तु वार्त्तिकानि । अतएव भाष्ये न दृश्यन्ते ।

**१ । १४ कष्टाय क्रमणे २६७०** ॥ १७३१ सत्रकक्षकष्टगहनेभ्यः कण्वचिकीर्षायाम् ॥

**१ । १५ कर्मणो रोमन्थतपोभ्यां वर्तिचरोः २६७१** ॥ १७३२ हनु चलने इति वक्तव्यम् । १७३३ तपसः परस्मैपदं च ॥

**१ । १६ बाष्पोष्मभ्यामुद्वमने २६७२** ॥ १७३४ फेनाच्चेति वक्तव्यम् ॥

**१ । १७ शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे २६७३** ॥ १७३५ अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणम् । १७३६ सुदिनदुर्दिनाभ्यां च । १७३७ नीहाराच्च ॥

**१ । १९ नमोवरिवश्चित्रङः क्यच् २६७५** ॥ १७३८ नमसः क्यचि द्वितीयानुपपत्तिः - १७३९ प्रकृत्यन्तरत्वात्सिद्धम् । १७४० क्यजादिषु प्रत्ययार्थनिर्देशः । ('१७४१ नमसः पूजायाम् । १७४२ वरिवसः परिचर्यायाम् । १७४३ चित्रङ आश्चर्ये । १७४४ भाण्डात्समाचयने । १७४५ चीवरादर्जने परिधाने वा । १७४६ पुच्छादुदसने व्यसने पर्यसने च' इति वार्तिकव्याख्यानभाष्यम् ) ॥

**१ । २१ मुण्डमिश्रश्लक्ष्णलवणव्रतहलकलकृततूस्तेभ्यो णिच् २६७७** ॥ १७४७ हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थम् ॥

**१ । २२ धातोरेकाचो हलादेः क्रियासमभिहारे यङ् २६२९** ॥ १७४८ यङ्विधौ धातुग्रहण उक्तम् (वा १६९६-१६९९) । १७४९ एकाज्झलादिग्रहणे च (वा १७०२-३) । १७५० ऊर्णोतेश्चोपसंख्यानम् । १७५१ सूचिसूत्रिमूत्र्यट्यर्त्यश्यूर्णुग्रहणं यङ्विधावनेकाजहलाद्यर्थम् । १७५२ वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् । आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ॥ १७५३ क्रियासमभिहारे यङो विप्रतिषेधेन लोड्विधानम् । १७५४ न वा नानार्थत्वात्कर्तृकर्मणोर्हि लविधानं क्रियाविशेषे स्वार्थे यङ् । १७५५ उत्तरयोर्विग्रहेण विशेषासंप्रत्ययान्नित्यग्रहणानर्थक्यम् । १७५६ क्रियासमभिहारे च नैतेभ्यः ॥

**१ । २५ सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच् २५६३** ॥ १७५७ सत्यस्य कृञ्यापुक्च । १७५८ णिविधावर्थवेदसत्यानामापुक्च ॥

**१ । २६ हेतुमति च २५७६** ॥ १७५९ हेतुमतीति कारकोपादानं प्रत्ययार्थपरिग्रहार्थं यथा तनूकरणे तक्षः । १७६० हेतुनिर्देशश्च निमित्तमात्रं भिक्षादिषु दर्शनात् । १७६१ कृष्यादिषु चानुपपत्तिः । १७६२ कृष्यादिषु चानुपपत्तिर्नानाक्रियाणां कृष्यर्थत्वात् । १७६३ यज्यादिषु चाविपर्यासः । १७६४ यज्यादिषु चाविपर्यासो नानाक्रियाणां यज्यर्थत्वात् । १७६५ तत्करोतीत्युपसंख्यानं सूत्रयत्याद्यर्थम् । १७६६ आख्यानात्कृतस्तदाचष्ट इति कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम् । १७६७ आख्यानाच्च प्रतिषेधः । १७६८ दृश्यर्थायां च प्रवृत्तौ । १७६९ आङ्लोपश्च कालात्यन्तसंयोगे मर्यादायाम् । १७७० चित्रीकरणे प्रापि । १७७१ नक्षत्रयोगे ज्ञि । १७७२ न वा सामान्यकृतत्वाद्धेतुतो ह्यविशिष्टम् । १७७३ स्वतन्त्रप्रयोजकत्वादप्रयोजक इति चेन्मुक्तसंशयेन तुल्यम् । १७७४ प्रवृत्तिर्ह्युभयत्रानपेक्ष्य । १७७५ कुर्वतः प्रयोजक इति चेत्तुल्यम् ॥

**१ । २७ कण्ड्वादिभ्यो यक् २६७८** ॥ १७७६ कण्ड्वादिभ्यो वावचनम् । १७७७ अवचने हि नित्यप्रत्ययत्वम् । १७७८ तत्र धातुविधितुक्प्रतिषेधः । १७७९ ह्रस्वयलोपौ च ॥

**१ । ३० कमेर्णिङ् २३१०** ॥ १७८० णिङि णित्करणस्य सावकाशत्वाद्वृद्धिप्रतिषेधप्रसङ्गः । १७८१ णित्प्रतिषेधस्य चार्थवत्त्वात् ॥

**१ । ३१ आयादय आर्धधातुके २३०५** ॥ १७८२ आयादिभ्यो यदार्धधातुकमायादिप्रकृतेर्यदार्धधातुकमिति चोभयथानिष्टप्रसङ्गः । १७८३ सिद्धं तु सार्वधातुके नित्यवचनादनाश्रित्य वाविधानम् । १७८४ स्यादिबलीयस्त्वं तु विप्रतिषेधेन तुल्यनिमित्तत्वात् । १७८५ न वायादिविधानस्यानवकाशत्वात् ॥

**१ । ३३ स्यतासी लृलुटोः २१८६** ॥ १७८६ अपवादविप्रतिषेधाच्छबादिबाधनम् ॥ १७८७ अपवादो नानेकलक्षणप्रसङ्गः । १७८८ अपवादविप्रतिषेधाच्छयनादिबाधनम् ॥

**१ । ३४ सिब्बहुलं लेटि ३४२५** ॥ १७८९ सिब्बुत्सर्गश्छन्दसि । १७९० सनाद्यन्ते नेषस्त्वाद्यर्थः । १७९१ प्रकृत्यन्तरत्वात्सिद्धम् । १७९२ पित्करणानर्थक्यं चानच्कत्वात् । १७९३ इटोऽनुदात्तार्थमिति चेदागमानुदात्तत्वात्सिद्धम् । १७९४ सिब्बहुलं छन्दसि णित् ॥

**१ । ३५ कास्प्रत्ययादाममन्त्रे लिटि २३०६** ॥ १७९५ कास्ग्रहणे चकास उपसंख्यानम् । १७९६ कास्यनेकाच इति वक्तव्यम् ॥

**१ । ३६ इजादेश्च गुरुमतोऽनृच्छः २२३७** ॥ १७९७ गुरुमत आम्विधाने लिण्निमित्तात्प्रतिषेधः । १७९८ गुरुमद्वचनं किमर्थमिति चेण्णमुल्युत्तमे यजादिप्रतिषेधार्थम् । १७९९ उपदेशवचनात्सिद्धम् । १८०० उच्छेराम्वक्तव्यः । १८०१ ऋच्छिप्रतिषेधो ज्ञापक उच्छेराम्भावस्य । १८०२ ऊर्णोतेश्चोपसंख्यानम् ॥

**१ । ३८ उषविदजागृभ्योऽन्यतरस्याम् २३४१** ॥ १८०३ विदेराम्कित् । ('१८०४ निपातनाद्वागुणत्वम्' इति भारद्वाजीयपाठः) ॥

**१ । ३९ भीह्रीभृहुवां श्लुवच्च २४९१** ॥ १८०५ श्लुवदतिदेशे प्रयोजनं द्वित्वेत्वे ॥

**१ । ४० कृञ्चानुप्रयुज्यते लिटि २२३९** ॥ १८०६ कृञोऽनुप्रयोगवचनमस्तिभूप्रतिषेधार्थम् । १८०७ आत्मनेपदविध्यर्थं च । १८०८ इष्टः सर्वानुप्रयोगः । १८०९ सर्वानुप्रयोग इति चेदाशिष्यमर्थाभावात् । १८१० अर्थाभावाच्चान्यस्य । १८११ लिट्परार्थं वा । १८१२ अर्थसमाप्तेर्वानुप्रयोगो न स्यात् । १८१३ विपर्यासनिवृत्त्यर्थं वा । १८१४ व्यवहितनिवृत्त्यर्थं च ॥

**१ । ४३ च्लि लुङि २२२१** ॥ १८१५ च्ल्युत्सर्गः सामान्यग्रहणार्थः । १८१६ क्सविधाने चानिड्वचने च्लिसंप्रत्ययार्थः । १८१७ घस्लभावे च । १८१८ च्लेश्चित्करणं विशेषणार्थम् । १८१९ इदित्करणं सामान्यग्रहणार्थम् ॥

**१ । ४४ च्लेः सिच् २२२२** ॥ १८२० सिचश्चित्करणानर्थक्यं स्थानिवत्त्वात् । १८२१ अर्थवत्तु चित्करणसामर्थ्यादीट उदात्तत्वम् । १८२२ तस्माच्चित्करणम् । १८२३ इदित्करणं नकारलोपाभावार्थम् । १८२४ न वा हन्तेः सिचः कित्करणं ज्ञापकं नकारलोपाभावस्य । १८२५ इदित्त्वाद्वा स्थानिवत्त्वात् । १८२६ स्पृशमृशकृषतृपदृपः सिज्वा । १८२७ सिद्धं तु सिचो यादित्वात् । १८२८ चङ्क्ङोः प्राश्लिष्टनिर्देशात्सिद्धम् । १८२९ चिणोऽनित्त्वात् ॥

**१ । ४५ शल इगुपधादनिटः क्सः २३३६** ॥ १८३० क्सविधान इगुपधाभावश्च्लेर्गुणनिमित्तत्वात् । १८३१ न वा क्सस्यानवकाशत्वादपवादो गुणस्य । १८३२ अनिड्वचनमविशेषणं

च्लेर्नित्यादिष्टत्वात् । १८३३ न वा क्सस्य सिजपवादत्वात्तस्य चानिडाश्रयत्वादनिटि प्रसिद्धे क्सविधिः । १८३४ शेषे सिज्विधानम् ॥

**१ । ४६ श्लिष आलिङ्गने २५१४** ॥ १८३५ श्लिष आलिङ्गने नियमानुपपत्तिर्विधेयभावात् । १८३६ सिद्धं तु श्लिष आलिङ्गनेऽच्चिण्विषये । १८३७ आङ्विधाने च श्लिषोऽनालिङ्गने । १८३८ योगविभागात्सिद्धम् ॥

**१ । ४८ णिश्रिद्रुस्रुभ्यः कर्तरि चङ् २३१२** ॥ १८३९ णिश्रिद्रुस्रुषु कमेरुपसंख्यानम् । १८४३ कर्मकर्तरि च । १८४० न वा कर्मण्यविभानात्कर्तृत्वाच्च कर्मकर्तुः सिद्धम् ॥

**१ । ५२ अस्यतिवक्तिख्यातिभ्योऽङ् २४३८** ॥ १८४१ अस्यतिग्रहणमात्मनेपदार्थम् । १८४२ पुषादित्वात् । १८४३ कर्मकर्तरि च ॥

**१ । ६७ सार्वधातुके यक् २७५६** ॥ १८४४ भावकर्मकर्तारः सार्वधातुकार्थाश्चेदेकद्वि-बहुषु नियमानुपपत्तिरतदर्थत्वात् । १८४५ विकरणार्था इति चेत्कृनाभिहिते विकरणाभावः । १८४६ भावकर्मणोर्यग्विधाने कर्मकर्तर्युपसंख्यानम् । १८४७ विप्रतिषेधाद्धि शपो बलीय-स्त्वम् । १८४८ योगविभागात्सिद्धम् ॥

**१ । ७८ रुधादिभ्यः श्नम् २५४३** ॥ १८४९ श्नमि शित्करणं प्वादिह्रस्वार्थम् । १८५० न वा धात्वन्यत्वात् । १८५१ बहुलं पित्सार्वधातुकं छन्दसि ॥

**१ । ८३ हलः श्नः शानज्झौ २५५७** ॥ १८५२ श्नाविकारस्य शित्करणानर्थक्यं स्थानिव-त्त्वात् । १८५३ अर्थवत्तु ज्ञापकं सार्वधातुकादेशेऽनुबन्धास्थानिवत्त्वस्य । १८५४ प्रयोजनं हितातङोरपित्त्वम् । १८५५ तबादिषु चाङित्त्वम् । १८५६ तस्य दोषो मिप आदेशे पिदभावः । १८५७ विदेर्वसोः शित्त्वम् । १८५८ कित्करणाद्वा सिद्धम् ॥

**१ । ८४ छन्दसि शायजपि ३४३२** ॥ १८५९ शायच्छन्दसि सर्वत्र ॥

**१ । ८६ लिङ्याशिष्यङ् ३४३४** ॥ १८६० आशिष्यङः प्रयोजनं स्थागागामिवचिविदयः । १८६१ शकिरुहोश्चेति वक्तव्यम् । १८६२ दृशेरक् पितरं दृशेयं मातरं च ॥

**१ । ८७ कर्मवत्कर्मणा तुल्यक्रियः २७६६** ॥ १८६३ कर्मवदकर्मकस्य कर्ता । १८६४ कर्म दृष्टश्चेत्समानधातौ । १८६५ कर्मस्थभावकानां कर्मस्थक्रियाणां च । १८६६ आत्मनेपद-शबादिविधिप्रतिषेधः । १८६७ कर्मकर्तरि कर्तृत्वं स्वातन्त्र्यस्य विवक्षितत्वात् । १८६८ तत्र लान्तस्य कर्मवदनुदेशः । १८६९ इतरथा हि कृत्यक्तखलर्थेषु प्रतिषेधः । १८७० सिद्धं तु प्राकृतकर्मत्वात् । १८७१ आत्मसंयोगे कर्मकर्तुः कर्मदर्शनात् । १८७२ पदलोपश्च । १८७३ सकर्मकाणां प्रतिषेधोऽन्योन्यमाश्लिष्यत इति । १८७४ तपेर्वा सकर्मकस्य वचनं नियमार्थ-म् । १८७५ तस्य च तपःकर्मकस्यैव । १८७६ दुहिपच्योर्बहुलं सकर्मकयोः । १८७७ सृजियुज्योः श्यंस्तु । १८७८ करणेन तुल्याक्रियः कर्ता बहुलम् । १८७९ स्रवत्यादीनां प्रति-षेधः । १८८० भूषाकर्मकिरतिसनां चान्यत्रात्मनेपदात् ॥

**१ । ८९ न दुहस्नुनमां यक्चिणौ २७६७** ॥ १८८१ ॥ यक्चिणोः प्रतिषेधे हेतुमण्णि-श्रिब्रूञामुपसंख्यानम् । १८८२ 'यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुप-संख्यानम्' इति भारद्वाजीयपाठः ॥

**१ । ९० कुषिरजोः प्राचां श्यन्परस्मैपदं च २७७२** ॥ १८८३ कुषिरजोः श्यन्विधाने सार्वधातुकवचनम् । १८८४ अवचने हि लिङ्लिटोः प्रतिषेधः ॥

**१ । ९१ धातोः २८२९** ॥ १८८५ धात्वधिकारः प्राग्लादेशात् । १८८६ लादेशे हि व्यवहितत्वादप्रसिद्धिः । १८८७ आद्ये योगे न व्यवाये तिङः स्युः । १८८८ न स्यादेत्वं टेष्टितां यद्विधत्ते । १८८९ एशः शित्त्वम् । १८९० यच्च लोटो विधत्ते । १८९१ यच्चाप्युक्तं लिङ्लिटोस्तच्च न स्यात् ॥ १८९२ प्रयोजनं प्रातिपदिकप्रतिषेधः । १८९३ स्वपादिषु । १८९४ अङ्गसंज्ञा च । १८९५ कृत्संज्ञा च । १८९६ उपपदसंज्ञा च । १८९७ धातुग्रहणमनर्थकं यङ्विधौ धात्वधिकारात् । १८९८ अनधिकारे ह्यङ्गसंज्ञाभावः । १८९९ हेतुमद्वचनं तु ज्ञापकमन्यत्राभावस्य । १९०० कण्ड्वादिषु च व्यपदेशिवद्वचनात्सिद्धम् ॥

**१ । ९२ तत्रोपपदं सप्तमीस्थम् ७८१** ॥ १९०१ तत्रग्रहणं विषयार्थम् । १९०२ उपपदसंज्ञायां समर्थवचनम् । १९०३ निमित्तोपादानं च । १९०४ अनुपादाने ह्यनुपपदे प्रत्ययप्रसङ्गः । १९०५ निर्देशः संज्ञाकरणार्थः । १९०६ तत्रवचनमुपपदसंनियोगार्थम् ॥

**१ । ९४ वासरूपोऽस्त्रियाम् २८३०** ॥ १९०७ असरूपस्य वावचनमुत्सर्गस्य बाधकविषयेऽनिवृत्त्यर्थम् । १९०८ तत्रोत्पत्तिवाप्रसङ्गो यथा तद्धिते । १९०९ सिद्धं त्वसरूपस्य बाधकस्य वावचनात् । १९१० अनुबन्धभिन्नेषु विभाषाप्रसङ्गः । १९११ सिद्धमनुबन्धस्यानेकान्तत्वात् । १९१२ प्रयोगे चेन्नादेशेषु प्रतिषेधः । १९१३ स्त्रियां प्रतिषेधे क्तल्युट्तुमुन्खलर्थेषु विभाषाप्रसङ्गः । १९१४ स्त्रियाः प्रागिति चेत्क्त्वायां वावचनम् । १९१५ कालादिषु तुमुनि । १९१६ अर्हे तृज्विधानम् ॥

**१ । ९५ कृत्याः २८३१** ॥ १९१७ कृत्यसंज्ञायां प्राङ्ण्वुल्वचनम् । १९१८ अर्हे कृत्यतृज्वचनं तु ज्ञापकं प्राङ्ण्वुल्वचनानर्थक्यस्य ॥

**१ । ९६ तव्यत्तव्यानीयरः २८३४** ॥ १९१९ केलिमर उपसंख्यानम् । १९२० वसेस्तव्यत्कर्तरि णिच्च । १९२१ तद्धितो वा ॥

**१ । ९७ अचो यत् २८४२** ॥ १९२२ तकिशसिचतियतिजनीनामुपसंख्यानम् । १९२३ हनो वा वध च । १९२४ ताद्धितो वा ॥

**१ । १०० गदमदचरयमश्चानुपसर्गे २८४८** ॥ १९२५ अनुपसर्गाच्चरेराङि चागुरौ ॥

**१ । १०३ अर्यः स्वामिवैश्ययोः २८५१** ॥ १९२६ स्वामिन्यन्तोदात्तत्वं च ॥

**१ । १०५ अजर्यं संगतम् २८५३** ॥ १९२७ अजर्यं कर्तरि ॥

**१ । १०६ वदः सुपि क्यप् च २८५४** ॥ १९२८ वदः सुप्यनुपसर्गग्रहणम् ॥

**१ । १०८ हनस्त च २८५६** ॥ १९२९ हनस्तश्चित्स्त्रियां छन्दसि ॥

**१ । १०९ एतिस्तुशास्वृदृजुषः क्यप् २८५७** ॥ १९३० क्यब्विधौ वृञ्ग्रहणम् । १९३१ अञ्जेश्चोपसंख्यानम् । १९३२ शंसिदुहिगुहिभ्यो वेति वक्तव्यम्[१] ॥

**१ । ११२ भृञोऽसंज्ञायाम् २८६१** ॥ १९३३ भृञः संज्ञाप्रतिषेधे स्त्रियामप्रतिषेधोऽन्येन विहितत्वात् । १९३४ प्रतिषेधः किमर्थ इति चेदस्त्रीसंज्ञाप्रतिषेधार्थः । १९३५ सिद्धं तु स्त्रियां

---

१ इदं काशिकायां वर्तते । तत्र 'प्रशस्य श्रः' 'ईडवन्दवृशंसदुहां ण्यतः' इति सूत्रद्वयबलाच्छंसेः सिद्धम् । इतरयोस्तु मूलं मृग्यम्—इति दीक्षितः ।

संज्ञाप्रतिषेधात्। १९३६ संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिद्ध्यति। १९३७ स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिद्ध्यति॥ १९३८ अथ वा बहुलं कृत्याः संज्ञायामिति तत्स्मृतम्। १९३९ यथा यत्यं यथा जन्यं यथा भित्तिस्तथैव सा॥ १९४० समश्च बहुलम्॥

१।११४ **राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः २८६५**॥ १९४१ सूर्यरुच्याव्यथ्याः कर्तरि। १९४२ कुप्यं संज्ञायाम्। १९४३ कृष्टपच्यस्यान्तोदात्तत्वं च कर्मकर्तरि च॥

१।११८ **प्रत्यपिभ्यां ग्रहेः २८६९**॥ १९४४ प्रत्यपिभ्यां ग्रहेश्छन्दसि॥

१।१२३ **छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ३४०७**॥ १९४५ हिरण्य इति च वक्तव्यम्॥

१।१२४ **ऋहलोर्ण्यत् २८७२**॥ १९४६ पाणौ सृजेर्ण्यद्विधिः। १९४७ समवपूर्वाच्च। १९४८ लपिदभिभ्यां च॥

१।१२५ **ओरावश्यके २८८६**॥ १९४९ आवश्यक उपपद इति चेद्द्योत्य उपसंख्यानम्। १९५० द्योत्य इति चेत्स्वरसमासानुपपत्तिः। १९५१ ओरावश्यके ण्यतः स्तौतेः क्यप्पूर्वविप्रतिषिद्धम्॥

१।१२७ **आनाय्योऽनित्ये २८८८**॥ १९५२ दक्षिणाग्नाविति वक्तव्यम्॥

१।१२९ **पाय्यसांनाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु २८९०**॥ १९५३ पाय्यनिकाय्ययोरादिपत्वकत्वनिपातनम्॥

१।१३० **क्रतौ कुण्डपाय्यसंचाय्यौ २८९१**॥ १९५४ कुण्डपाय्ये यद्विधिः॥

१।१३१ **अग्नौ परिचाय्योपचाय्यसमूह्याः २८९२**॥ १९५५ समूह्य इत्यनर्थकं वचनं सामान्येन कृतत्वात्। १९५६ वह्यर्थमिति चेदूहेस्तदर्थत्वात्सिद्धम्। १९५७ ऊहिविग्रहाच्च ब्राह्मणे सिद्धम्॥

१।१३२ **चित्याग्निचित्ये च २८९३**॥ १९५८ अग्निचित्यान्तोदात्तः॥

१।१३३ **ण्वुल्तृचौ २८९५**॥ १९५९ ण्वुलि सकर्मकग्रहणम्। १९६० न वा धातुमात्राद्दर्शनाण्ण्वुलः। १९६१ तृजादिषु वर्तमानकालोपादानमध्यायकवेदाध्यायाद्यर्थम्। १९६२ न वा कालमात्रे दर्शनादन्येषाम्॥

१।१३४ **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः २८९६**॥ १९६३ अजपि सर्वधातुभ्यः। १९६४ पचाद्यनुक्रमणमनुबन्धासञ्जनार्थमपवादबाधनार्थं च॥

१।१३५ **इगुपधज्ञाप्रीकिरः कः २८९७**॥ १९६५ इगुपधेभ्य उपसर्गे कविधिर्मेघाद्यर्थः। १९६६ न वा बुधादीनां दर्शनादनुपसर्गेऽपि॥

१।१३७ **पाघ्राध्माधेड्दृशः शः २८९९**॥ १९६७ जिघ्रः संज्ञायां प्रतिषेधः॥

१।१३८ **अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च २९००**॥ १९६८ अनुपसर्गान्नौ लिम्पेः। १९६९ गवादिषु च विन्देः संज्ञायाम्॥

१।१४० **ज्वलितिकसन्तेभ्यो णः २९०२**॥ १९७० तनोतेर्ण उपसंख्यानम्॥

१।१४५ **शिल्पिनि ष्वुन् २९०७**॥ १९७१ नृतिखनिरञ्जिभ्य इति वक्तव्यम्॥

**१ । १४९ प्रुसृल्वः समभिहारे वुन् २९११** ॥ १९७२ प्रुसृल्वः साधुकारिणि वुन्विधानम् ॥

**२ । १ कर्मण्यण् २९१३** ॥ १९७३ कर्मणि निर्वर्त्यमानविक्रियमाण इति वक्तव्यम् । १९७४ कर्मणि निर्वर्त्यमानविक्रियमाणे चेद्वेदाध्यायादीनामुपसंख्यानम् । १९७५ यत्र च नियुक्तः । १९७६ ह्रग्रहिनीवहिभ्यश्च । १९७७ अपरिगणनं वा । १९७८ अनभिधानात् । १९७९ अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन । १९८० शीलिकामिभक्ष्याचरिभ्यो णः पूर्वपदप्रकृतिस्वरत्वं च । १९८१ ईक्षिक्षमिभ्यां च । १९८२ न त्वम्भोऽभिगमा । १९८३ अन्नादायेति च कृतां व्यत्ययश्छन्दसि ॥

**२ । ३ आतोऽनुपसर्गे कः २९१५** ॥ १९८४ कविधौ सर्वत्र प्रसारणिभ्यो डः । १९८५ के हि संप्रसारणप्रसङ्गः ॥

**२ । ४ सुपि स्थः २९१६** ॥ १९८६ सुपि स्थो भावे च । १९८७ योगविभागात्सिद्धम् ॥

**२ । ५ तुन्दशोकयोः परिमृजापनुदोः २९१९** ॥ १९८८ तुन्दशोकयोः परिमृजापनुदोरालस्यसुखाहरणयोः । १९८९ कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम् ॥

**२ । ८ गापोष्टक् २९२२** ॥ १९९० सुराशीध्वोः पिबतेः । १९९१ बहुलं तणि ॥

**२ । ९ हरतेरनुद्यमनेऽच् २९२३** ॥ १९९२ अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुःषु ग्रहेरुपसंख्यानम् । १९९३ सूत्रे च धार्यर्थे ॥

**२ । १३ स्तम्बकर्णयोरमिजपोः २९२७** ॥ १९९४ स्तम्बकर्णयोर्हस्तिसूचकयोः ॥

**२ । १४ शमिधातोः संज्ञायाम् २९२८** ॥ १९९५ शमि संज्ञायां धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थम् ॥

**२ । १५ अधिकरणे शेतेः २९२९** ॥ १९९६ अधिकरणे शेतेः पार्श्वादिषूपसंख्यानम् । १९९७ दिग्धसहपूर्वाच्च । १९९८ उत्तानादिषु कर्तृषु । १९९९ गिरौ डश्छन्दसि । २००० तद्धितो वा ॥

**२ । १६ चरेष्टः २९३०** ॥ २००१ चरेर्भिक्षाग्रहणं ज्ञापकं कर्मण्यप्रसङ्गस्य ॥

**२ । २१ दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुःषु २९३५** ॥ २००२ किंयत्तद्बहुषु कृञोऽज्विधानम् ॥

**२ । २४ स्तम्बशकृतोरिन् २९३८** ॥ २००३ स्तम्बशकृतोर्व्रीहिवत्सयोः ॥

**२ । २६ फलेग्रहिरात्मंभरिश्च २९४०** ॥ २००४ भृञः कुक्ष्यात्मनोर्मुम्च ॥

**२ । २८ एजेः खश् २९४१** ॥ २००५ खश्प्रकरणे वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः ॥

**२ । २९ नासिकास्तनयोर्ध्माधेटोः २९४४** ॥ २००६ स्तने धेटः । २००७ नासिकायां ध्मश्च धेटश्च । २००८ नासिकानाडीमुष्टिघटीखारीष्विति वक्तव्यम् ॥

**२ । ३८ प्रियवशे वदः खच् २९५३** ॥ २००९ खच्प्रकरणे गमेः सुप्युपसंख्यानम् । २०१० विहायसो विह च । २०११ खच्च डिद्वा । २०१२ डे च ॥

**२ । ४१ पूःसर्वयोर्दारिसहोः २९५८** ॥ ('२०१३ भगे च दारेः' इति काशिका) ॥

**२ । ४८ अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः २९६५** ॥ २०१४ डप्रकरणे सर्वत्रपन्नयोरुपसंख्यानम् । २०१५ उरसो लोपश्च । २०१६ सुदुरोरधिकरणे । २०१७ निसो देशे । २०१८ अन्येष्वपि दृश्यते ॥

**२ । ४९ आशिषि हनः २९६६** ॥ २०१९ दारावाहनोऽणन्त्यस्य च टः संज्ञायाम् । २०२० चारौ वा । २०२१ कर्मणि समि च ॥

**२ । ५५ पाणिघताडघौ शिल्पिनि २९७२** । २०२२ राजघ उपसंख्यानम् ॥

**२ । ५६ आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् २९७३** ॥ २०२३ ख्युनि च्विप्रतिषेधानर्थक्यं ल्युट्ख्युनोरविशेषात् । २०२४ मुमर्थमिति चेन्नाव्ययत्वात् । २०२५ उत्तरार्थं तु ॥

**२ । ५७ कर्तरि भुवः खिष्णुच्खुकञौ २९७४** ॥ २०२६ इष्णुच इकारादित्वमुदात्तत्वात्कृतं भुवः । २०२७ नञस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्णुचः ॥

**२ । ५९ ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ३७३** ॥ २०२८ धृषेर्द्विर्वचनमन्तोदात्तत्वं च ॥

**२ । ६० त्यदादिषु दृशोऽनालोचने कञ्च ४२२** ॥ २०२९ दृशेः समानान्ययोश्चोपसंख्यानम् । ( २०३० 'दृशेः क्सो वक्तव्यः' इति काशिका) । २०३१ कृदर्थानुपपत्तिस्तु । २०३२ इवार्थे तु तद्धितः ॥

**२ । ६१ सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् २९७५** ॥ २०३३ त्यदादिषु सुब्ग्रहणम् ॥

**२ । ६८-६९ अदोऽनन्ने २९७७ । क्रव्ये च २९७८** ॥ २०३४ अदोऽनन्ने क्रव्येग्रहणं वासरूपानिवृत्त्यर्थम् ॥

**२ । ७१ मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ३४१४** ॥ २०३५ श्वेतवहादीनां डस् । २०३६ पदस्य च । २०३७ वेर्थम् ॥

**२ । ७८ सुप्यजातौ णिनिस्ताच्छील्ये २९८८** ॥ २०३८ णिन्विधौ साधुकारिण्युपसंख्यानम् । २०३९ ब्रह्मणि वदः ॥

**२ । ८३ आत्ममाने खश्च २९९३** ॥ २०४० कर्मकर्तरि च ॥

**२ । ८४ भूते २९९५** ॥ २०४१ निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः । २०४२ अव्ययनिर्देशात्सिद्धम् । २०४३ न वा तद्विधानस्यान्यत्राभावात् । २०४४ भूताधिकारस्य प्रयोजनं कुमारघाती शीर्षघाती आखुहा बिडालः सुत्वानः सुन्वन्तः सुषुपुषोऽनेहा अग्निमादधानस्य ॥

**२ । ८७ ब्रह्मभ्रूणवृत्रेषु क्विप् २९९८** ॥ २०४५ ब्रह्मादिषु हन्तेः क्विब्वचनं नियमार्थम् । २०४६ तथा चोत्तरस्य वचनार्थः ॥

**२ । ९३ कर्मणीनिर्विक्रियः ३००३** ॥ २०४७ कर्मणि कुत्सिते ॥

**२ । १०१ अन्येष्वपि दृश्यते ३०११** ॥ २०४८ अन्येभ्योऽपि दृश्यते ॥

**२ । १०२ निष्ठा ३०१३** ॥ २०४९ निष्ठायामितरेतराश्रयत्वादप्रसिद्धिः । २०५० द्विर्वा क्तक्तवतुग्रहणम् । २०५१ आदिकर्मणि निष्ठा । २०५२ यद्वा भवन्त्यर्थे । २०५३ न्याय्या त्वाश्रयपवर्गात् । २०५४ वा चाद्यतन्याम् ॥

२ । १०६-१०७ लिटः कानज्वा ३०९४ । क्वसुश्च ३०९५ ॥ २०५५ कानच्क्वसोर्वा वचनं छन्दसि लिङो दर्शनात् । २०५६ न वानेन विहितस्यादेशवचनात् । २०५७ कित्करणं संयोगान्तार्थम् । २०५८ ऋकारान्तगुणप्रतिषेधार्थं वा ॥

२ । १०८ भाषायां सदवसश्रुवः ३०९७ ॥ २०५९ भाषायां सदादिभ्यो वा लिट् । २०६० तद्विषये लुङोऽनिवृत्त्यर्थम् । २०६१ अनद्यतनपरोक्षयोश्च । २०६२ अपवादविप्रतिषेधाद्धि तयोर्भावः । २०६३ तस्य क्वसुरपरोक्षे नित्यम् ॥

२ । १०९ उपेयिवाननाश्वाननूचानश्च ३०९८ ॥ २०६४ उपेयुषि निपातनमिडर्थम् । २०६५ उपेयुषि निपातनमिडर्थमिति चेदजादावतिप्रसङ्गः । २०६६ एकादिष्टस्येड्भावार्थं तु । २०६७ व्यञ्जने यणादेशार्थं वा । २०६८ नोपेयिवान्निपात्यो द्विर्वचनादिड्भविष्यति परत्वात् । २०६९ अन्येषामेकाचां द्विर्वचनं नित्यमित्याहुः । २०७० अस्य पुनरिट् च नित्यो द्विर्वचनं च न विहन्यते ह्यस्य । २०७१ द्विर्वचने चैकाच्त्वात् । २०७२ तस्मादिड्बाधते द्वित्वम् । २०७३ अनूचानः कर्तरि ॥

२ । ११० लुङ् २२१८ ॥ २०७४ लुङ्लटोरपवादप्रसङ्गो भूतभविष्यतोरविशेषवचनात् । २०७५ न वापवादस्य निमित्ताभावादद्यतने हि तयोर्विधानम् । २०७६ वसेर्लुङ् रात्रिशेषे । २०७७ जागरणसंततौ ॥

२ । १११ अनद्यतने लङ् २२०५ ॥ २०७८ अनद्यतन इति बहुव्रीहिनिर्देशोऽद्य ह्यो वाभुक्ष्महीति । २०७९ परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये ॥

२ । ११४ विभाषा साकाङ्क्षे २७७५ ॥ २०८० विभाषा साकाङ्क्षे सर्वत्र ॥

२ । ११५ परोक्षे लिट् २१७१ ॥ २०८१ परोभावः परस्याक्षे परोक्षे लिटि दृश्यताम् । २०८२ उत्वं वादेः परादक्ष्णः । २०८३ सिद्धं वाऽस्मान्निपातनात् ॥ २०८४ परोक्षे लिडत्यन्तापह्नवे च ॥

२ । ११८ लट् स्मे २७७८ ॥ २०८५ स्मेरा भूतमात्रे न स्मपुराद्यतने ॥

२ । १२० ननौ पृष्टप्रतिवचने २७८० ॥ २०८६ ननौ पृष्टप्रतिवचन इत्याशिष्यं क्रियासमाप्तेर्विवक्षितत्वात् ॥

२ । १२२ पुरि लुङ् चास्मे २७८२ ॥ २०८७ हशश्वद्भ्यां पुरा । २०८८ स्मः सर्वेभ्यो विप्रतिषेधेन ॥

२ । १२३ वर्तमाने लट् २१५१ ॥ २०८९ प्रवृत्तस्याविरामे शिष्या भवन्त्यवर्तमानत्वात् । २०९० नित्यप्रवृत्ते च कालाविभागात् । २०९१ न्याय्या त्वारम्भानपवर्गात् । २०९२ अस्ति च मुक्तसंशये विरामः । २०९३ सन्ति च कालविभागाः ॥

२ । १२४ लटः शतृशानचावप्रथमासमानाधिकरणे ३१०० ॥ २०९४ लस्याप्रथमासमानाधिकरणेनायोगादादेशानुपपत्तिर्यथान्यत्र । २०९५ योग इति चेदन्यत्रापि योगः स्यात् । २०९६ लटः शतृशानचावप्रथमासमानाधिकरण इति चेत्प्रत्ययोत्तरपदयोरुपसंख्यानम् । २०९७ प्रथमाप्रतिषेध उत्तरपद आदेशानुपपत्तिः । २०९८ सिद्धं तु प्रत्ययोत्तरपदयोश्चेति वचनात् । २०९९ तत्र प्रत्ययस्यादेशनिमित्तत्वादप्रसिद्धिः । २१०० उत्तरपदस्य च सुबन्तनिमित्तत्वाच्छतृशानचोरप्रसिद्धिः । २१०१ न वा लकारस्य कृत्त्वात्प्रातिपदिकत्वम् । २१०२ तिङादेशात्सुबुत्पत्तिः । २१०३ तस्मादुत्तरपदप्रसिद्धिः ॥

**२ । १२६ लक्षणहेत्वोः क्रियायाः ३१०३** ॥ २१०४ लक्षणहेत्वोः क्रियाया गुण उपसंख्यानम् । २१०५ कर्तुश्च लक्षणयोः पर्यायेणाचयोगे । २१०६ तत्त्वाख्याने च । २१०७ सदादयश्च बहुलम् । २१०८ इङ्जुहोत्योर्वावचनम् । २१०९ माङ्याक्रोशे ॥

**२ । १२७ तौ सत् ३१०६** ॥ २११० तौ सदितिवचनमसंसर्गार्थम् । २१११ अवधारणं लृटि विधानम् । २११२ योगविभागतश्च विहितं सत् । २११३ उत्तरयोर्लादेशे वावचनम् । २११४ साधनाभिधानम् । २११५ स्वरः । २११६ उपग्रहप्रतिषेधश्च । २११७ अलादेशे षष्ठीप्रतिषेधः । २११८ द्विषः शतुर्वावचनम् ॥

**२ । १३५ तृन् ३११५** ॥ २११९ तृन्विधावृत्विक्षु चानुपसर्गस्य । २१२० नयतेः षुक्च । २१२१ न वा धात्वन्यत्वात् । २१२२ नेषतु नेष्टादिति दर्शनात् । २१२३ त्विषेर्देवतायामकारश्चोपधाया अनिट्त्वं च । २१२४ क्षदेश्च युक्ते । २१२५ छन्दसि तृच ॥

**२ । १३९ ग्लाजिस्थश्च क्स्नुः ३११९** ॥ २१२६ स्नोः किन्त्वे स्थ ईकारप्रतिषेधः । २१२७ आकिति गुणप्रतिषेधः । २१२८ भुव इट्प्रतिषेधश्च । २१२९ स्थादंशिभ्यां स्नुश्छन्दसि । २१३० स्नोर्गित्त्वान्न स्थ ईकारः । २१३१ क्ङितोरीत्त्वशासनात् । २१३२ गुणाभावस्त्रिषु स्मार्यः । २१३३ श्र्युकोऽनिट्त्वं गकोरितोः ॥

**२ । १४१ शमित्यष्टाभ्यो घिनुण् ३१२१** ॥ २१३४ घिनुणकर्मकाणाम् ॥

**२ । १४६ निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरटपरिवादिव्याभाषासूयो वुञ् ३१२६** ॥ २१३५ वुञनेकाचः । २१३६ निन्दादिभ्यो वुञ्वचनमन्येभ्यो ण्वुलः प्रतिषेधार्थम् । २१३७ तृजादिप्रतिषेधार्थं वैके ॥

**२ । १५० जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः ३१३०** ॥ २१३८ पदिग्रहणमनर्थकमनुदात्तेतश्च हलादेरिति सिद्धत्वात् । २१३९ असरूपनिवृत्त्यर्थं तु ॥

**२ । १५८ स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच् ३१३८** ॥ २१४० आलुचि शीङ्ग्रहणम् ॥

**२ । १७१ आदृगमहनजनः किकिनौ लिट् च ३१५१** ॥ २१४१ किकिनोः कित्त्वमृकारगुणप्रतिषेधार्थम् । २१४२ उत्सर्गश्छन्दसि सदादिभ्यो दर्शनात् । २१४३ भाषायां धाञ्कृसृजनिनमिभ्यः । २१४४ सासहिवावहिचाचलिपापतीनां निपातनम् ॥

**२ । १७४ भियः क्रुक्लुकनौ ३१५४** ॥ २१४५ भियः क्रुकन्नपि वक्तव्यः ॥

**२ । १७८ अन्येभ्योऽपि दृश्यते ३१५८** ॥ २१४६ क्विब्विधिरनुपपदार्थः । २१४७ वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घश्च । २१४८ वचिप्रच्छ्योरसंप्रसारणं च । २१४९ द्युतिगमिजुहोतीनां द्वे च जुहोतेर्दीर्घश्च । २१५० दृणातेर्ह्रस्वश्च द्वे च क्विप्चेति वक्तव्यम् । २१५१ ध्यायतेः संप्रसारणं च ॥

**२ । १८० विप्रसंभ्यो ड्वसंज्ञायाम् ३१६०** ॥ २१५२ डुप्रकरणे मितद्र्वादिभ्य उपसंख्यानं धातुविधितुक्प्रतिषेधार्थम् ॥

**३ । १ उणादयो बहुलम् ३१६९** ॥ २१५३ बाहुलकं प्रकृतेस्तनुदृष्टेः । २१५४ प्रायससुच्चयनादपि तेषाम् । २१५५ कार्यसशेषविधेश्च तदुक्तम् । २१५६ नैगमरूढिभवं हि सुसाधु ॥

२१५७ नाम च धातुजमाह निरुक्ते । २१५८ व्याकरणे शकटस्य तोकम् । २१५९ यन्न विशेषपदार्थसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यम् ॥

३ । ३ भविष्यति गम्यादयः ३१७१ ॥ २१६० भविष्यतीत्यनद्यतन उपसंख्यानम् । २१६१ इतरेतराश्रयं च । २१६२ न वा तद्विधानस्यान्यत्राभावात् । २१६३ भविष्यदधिकारस्य प्रयोजनं यावत्पचति पुरा पचतीत्यनपशब्दत्वाय ॥

३ । ४ यावत्पुरानिपातयोर्लट् २७८३ ॥ २१६४ यावत्पुरादिषु लड्विधिर्लुटः पूर्वविप्रतिषिद्धम् ॥

३ । १० तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् ३१७२ ॥ २१६५ ण्वुलः क्रियार्थोपपदस्य पुनर्विधानं तृजादिप्रतिषेधार्थम् ॥

३ । ११ भाववचनाश्च ३१८० ॥ २१६६ भाववचनानां यथाविहितानां प्रतिपदविध्यर्थम् ॥

३ । १२ अण्कर्मणि च ३१८१ ॥ २१६७ अणः पुनर्वचनमपवादविषयेऽनिवृत्त्यर्थम् ॥

३ । १३ लृट् शेषे च २१९३ ॥ २१६८ लृटि शेषवचनं क्रियायां प्रतिपदविध्यर्थम् । २१६९ अविशेषेण विधाने लृटोऽभावः प्रतिषिद्धत्वात् ॥

३ । १४ लृटः सद्वा ३१०७ ॥ २१७० सद्विधिर्नित्यमप्रथमासमानाधिकरणे ॥

३ । १५ अनद्यतने लुट् २१८५ ॥ २१७१ परिदेवने श्वस्तनी भविष्यन्त्यर्थे । २१७२ कालप्रकर्षात्तूपमानम् ॥

३ । १६ पदरुजविशस्पृशो घञ् ३१८२ ॥ २१७३ स्पृश उपतापे ॥

३ । १७ सृ स्थिरे ३१८३ ॥ २१७४ व्याधिमत्स्यबलेष्विति वक्तव्यम् ॥

३ । १८ भावे ३१८४ ॥ २१७५ भावे सर्वलिङ्गो निर्देशः ॥

३ । १९ अकर्तरि च कारके संज्ञायाम् ३१८८ ॥ २१७६ कारकग्रहणमनादेशे स्वार्थविज्ञानात् । २१७७ संज्ञाग्रहणानर्थक्यं सर्वत्र घञो दर्शनात् । २१७८ अतिप्रसङ्ग इति चेदभिधानलक्षणत्वात्प्रत्ययस्य ॥

३ । २० परिमाणाख्यायां सर्वेभ्यः ३१९० ॥ २१७९ सर्वग्रहणमनर्थकं परिमाणाख्यायामिति सिद्धत्वात् । २१८० घञनुक्रमणमजब्विषये । २१८१ अवचने हि स्त्रीप्रत्ययानामप्यपवादविज्ञानम् । २१८२ दारजारौ कर्तरि णिलुक् च । २१८३ करणे वा ॥

३ । २१ इङश्च ३१९१ ॥ २१८४ इङश्चेत्यपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष् । २१८५ शॄ वायुवर्णनिवृतेषु ॥

३ । ३६ समि मुष्टौ ३२०८ ॥ २१८६ समि मुष्टावित्यनर्थकं परिमाणाख्यायामिति सिद्धत्वात् । २१८७ अपरिमाणार्थं तु । २१८८ उद्ग्राभनिग्राभौ च छन्दसि स्रुगुद्यमननिपातनयोः ॥

३ । ४३ कर्मव्यतिहारे णच् स्त्रियाम् ३२१५ ॥ २१८९ कर्मव्यतिहारे स्त्रीग्रहणं व्यतिपाकार्थम् । २१९० पृथग्ग्रहणं बाधकबाधनार्थम् । २१९१ व्यावचोरीव्यावचर्च्यर्थम् । २१९२ तत्र व्यतीक्षादिषु दोषः । २१९३ सिद्धं तु प्रकृते स्त्रीग्रहणे णज्ग्रहणं णिज्ग्रहणं च ॥

३ । ४४ अभिविधौ भाव इनुण् ३२१८ ॥ २१९४ अभिविधौ भावग्रहणं नपुंसके क्तादिनिवृत्त्यर्थम् । २१९५ पृथग्ग्रहणं बाधकबाधनार्थम् । २१९६ न तु ल्युटः ॥

**३। ५६ एरच् ३२३१** ॥ २१९७ अज्विधौ भयादीनामुपसंख्यानम्। २१९८ नपुंसके क्तादिनिवृत्त्यर्थम्। २१९९ कल्यादिभ्यः प्रतिषेधः। २२०० जवसवौ छन्दसि ॥

**३। ५८ ग्रहवृदृनिश्चिगमश्च ३२३४** ॥ २२०१ अब्विधौ निश्चिग्रहणमनर्थकं स्तेयस्य घञ्विधौ प्रतिषेधात्। २२०२ अस्तेयार्थमिति चेन्नानिष्टत्वात्। २२०३ वशिरण्योश्चोपसंख्यानम्। २२०४ घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम् ॥

**३। ९० यजयाचयतविच्छप्रच्छरक्षो नङ् ३२६८** ॥ २२०५ यजादिभ्यो नस्य ङित्त्वे संप्रसारणप्रतिषेधः। २२०६ अङिति गुणप्रतिषेधः ॥

**३। ९४ स्त्रियां क्तिन् ३२७२** ॥ २२०७ स्त्रियां क्तिन्नाबादिभ्यः। २२०८ निष्ठायां वा सेटोऽकारवचनात् ॥

**३। ९५ स्थागापापचो भावे ३२७३** ॥ २२०९ स्थादिभ्यः सर्वापवादप्रसङ्गः। २२१० सिद्धं त्वङ्विधाने स्थादिप्रतिषेधात्। २२११ श्रुयजिषिस्तुभ्यः करणे। २२१२ ग्लाज्याहाभ्यो निः ॥

**३। ९८ व्रजयजोर्भावे क्यप् ३२७५** ॥ २२१३ क्यब्विधिरधिकरणे च ॥

**३। १०० कृञः श च ३२७७** ॥ २२१४ कृञः श चेति वावचनं क्तिनर्थम् ॥

**३। १०१ इच्छा ३२७८** ॥ २२१५ इच्छापरिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम्। २२१६ जागर्तेरकारो वा ॥

**३। १०४ षिद्भिदादिभ्योऽङ् ३२८१** ॥ २२१७ भिदा विदारणे। २२१८ छिदा द्वैधीकरणे। २२१९ आरा शस्त्र्याम्। २२२० धारा प्रपाते। २२२१ गुहा गिर्योषध्योः ॥

**३। १०७ ण्यासश्रन्थो युच् ३२८४** ॥ २२२२ युच्प्रकरणे घट्टिवन्दिविदिभ्य उपसंख्यानम्। २२२३ इषेरनिच्छार्थस्य। २२२४ परेर्वा ॥

**३। १०८ रोगाख्यायां ण्वुल्बहुलम् ३२८५** ॥ २२२५ धात्वर्थनिर्देशे ण्वुल्। २२२६ इक्श्तिपौ धातुनिर्देशे। २२२७ वर्णात्कारः। २२२८ रादिफः। २२२९ मत्वर्थाच्छः। २२३० इगजादिभ्यः। २२३१ इञ्वपादिभ्यः। २२३२ इकृष्यादिभ्यः। २२३३ संपदादिभ्यः क्विप् ॥

**३। ११३ कृत्यल्युटो बहुलम् २८४१** ॥ २२३४ कृतो बहुलमिति वक्तव्यं पादहारकाद्यर्थम् ॥

**३। ११९ गोचरसंचरवहव्रजव्यजापणनिगमाश्च ३२९८** ॥ २२३५ गोचरादीनामग्रहणं प्रायवचनाद्यथा कषो निकष इति ॥

**३। १२१ हलश्च ३३००** ॥ २२३६ घञ्विधाववहाराधारावायानामुपसंख्यानम् ॥

**३। १२३ उदङ्कोऽनुदके ३३०२** ॥ २२३७ उदङ्कोऽनुदकवचनानर्थक्यं च प्रायवचनाद्यथा गोदोहनः प्रसाधन इति ॥

**३। १२५ खनो घ च ३३०४** ॥ २२३८ खनो डडरेकेकवकाः ॥

**३। १२६ ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ३३०५** ॥ २२३९ अजब्भ्यां स्त्रीखलनाः। २२४० स्त्रियाः खलनौ विप्रतिषेधेन ॥

**३। १२७ कर्तृकर्मणोश्च भूकृञोः ३३०८** २२४१ खल्कर्तृकर्मणोश्च्व्यर्थयोः। २२४२ कर्तृकर्मग्रहणं चोपपदार्थम् ॥

३। १३० **अन्येभ्योऽपि दृश्यते ३४२२** ॥ २२४३ भाषायां शासियुधिदृशिधृषिभ्यो युच्। २२४४ मृषेश्चेति वक्तव्यम् ॥

३। १३१ **वर्तमानसामीप्ये वर्तमानवद्वा २७८९** ॥ २२४५ वर्तमानसामीप्ये वर्तमानवद्वचनं शत्राद्यर्थम् ॥

३। १३२ **आशंसायां भूतवच्च २७९०** ॥ २२४६ आशंसायां भूतवदतिदेशे लङ्लिटोः प्रतिषेधः। २२४७ न वापवादस्य निमित्ताभावादनद्यतने हि तयोर्विधानम्। २२४८ आशंसासंभावनयोरविशेषात्तद्विधानस्याप्राप्तिः। २२४९ न वा संभावनावयवत्वादाशंसायाः। २२५० अर्थासंदेहो वालमर्थत्वात्संभावनस्य ॥

३। १३३ **क्षिप्रवचने लृट् २७९१** ॥ २२५१ क्षिप्रवचने लट आशंसावचने लिङ्प्रतिषेधेन। २२५२ अनिष्पन्ने निष्पन्नशब्दः शिष्योऽनिष्पन्नत्वात्। २२५३ सिद्धं तु भविष्यत्प्रतिषेधात्। २२५४ हेतुभूतकालसंप्रोक्षितत्वाद्वा। २२५५ अस्त्यर्थानां भवन्त्यर्थे सर्वा विभक्तय कर्तुर्विद्यमानत्वात्। २२५६ सिद्धं तु यथास्वकालं समुच्चारणात्। २२५७ अवाल्वात्। २२५८ असिद्धविपर्यासश्च ॥

३। १३५ **नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः २७९३** ॥ २२५९ नानद्यतनवत्प्रतिषेधे लङ्लुटोः प्रतिषेधः। २२६० अद्यतनवद्विधाने हि विधानम्। २२६१ तत्र लङ्विधिप्रसङ्गः। २२६२ लुङ्लुटोश्चायथाकालम् ॥

३। १३६ **भविष्यति मर्यादावचनेऽवरस्मिन् २७९४** ॥ २२६३ भविष्यति मर्यादावचनेऽवरस्मिन्नित्यक्रियाप्रबन्धार्थम्। २२६४ क्रियाप्रबन्धार्थमिति चेद्वचनानर्थक्यम्। २२६५ अहोरात्रप्रतिषेधार्थमिति चेन्नानिष्टत्वात् ॥

३। १३७ **कालविभागे चानहोरात्राणाम् २७९५** ॥ २२६६ अनहोरात्राणामिति तद्विभागे प्रतिषेधः। २२६७ तैश्च विभागे ॥

३। १४० **भूते च २७९७** ॥ २२६८ भूते लङुताप्यादिषु ॥

३। १४१ **वोताप्योः २७९८** ॥ २२६९ विभाषा गर्हाप्रभृतौ प्रागुतापिभ्याम् ॥

३। १४२ **गर्हायां लडपिजात्वोः २७९९** ॥ २२७० गर्हायां लड्विधानानर्थक्यं क्रियासमाप्तिविवक्षितत्वात् ॥

३। १४५ **अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि २८०२** ॥ २२७१ किंवृत्तस्यानधिकारादुत्तरत्राकिंवृत्तग्रहणानर्थक्यम् ॥

३। १४७ **जातुयदोर्लिङ् २८०४** ॥ २२७२ जातुयदोर्लिङ्विधाने यदायद्योरुपसंख्यानम् ॥

३। १५१ **शेषे लृडयदौ २८०८** ॥ २२७३ चित्रीकरणे यदिप्रतिषेधानर्थक्यमर्थान्यत्वात् ॥

३। १५६ **हेतुहेतुमतोर्लिङ् २८१३** ॥ २२७४ हेतुहेतुमतोर्लिङ्वा। २२७५ भविष्यदधिकारे ॥

३। १५७ **इच्छार्थेषु लिङ्लोटौ २८१४** ॥ २२७६ कामप्रवेदने चेत् ॥

३। १६१ **विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् २२०८** ॥ २२७७ निमन्त्रणादीनामर्थे चेदामन्त्रये निमन्त्रये भवन्तमिति प्रत्ययानुपपत्तिः प्रकृत्यभिहितत्वात्।

२२७८ द्विवचनबहुवचनाप्रसिद्धिश्चैकार्थत्वात् । २२७९ सिद्धं तु द्वितीयाकाङ्क्षस्य प्रकृते प्रत्ययार्थे प्रत्ययविधानात् ॥

३ । १६३ **प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च २८१७** ॥ २२८० प्रैषादिषु कृत्यानां वचनं नियमार्थमिति चेत्तदनिष्टम् । २२८१ विध्यर्थं तु स्त्रियाः प्रागिति वचनात् ॥

३ । १६७ । **कालसमयवेलासु तुमुन् ३१७९** ॥ २२८२ प्रथमान्तेष्विति वक्तव्यम् ॥

४ । १ **धातुसंबन्धे प्रत्ययाः २८२४** ॥ २२८३ धातुसंबन्धे प्रत्ययस्य यथाकालविधानात्सिद्धम् । २२८४ उपपदस्य कालान्यत्वम् ॥

४ । २ **क्रियासमभिहारे लोट् । लोटो हिस्वौ वा च तध्वमोः २८२५** ॥ २२८५ हिस्वयोः परस्मैपदात्मनेपदग्रहणं लादेशप्रतिषेधार्थम् । २२८६ समसंख्यार्थं च । २२८७ न वा तध्वमोरादेशवचनं ज्ञापकं पदादेशस्य । २२८८ तत्र पदादेशे पित्त्वाटोः प्रतिषेधः । २२८९ सिद्धं तु लोण्मध्यमपुरुषैकवचनस्य क्रियासमभिहारे द्विर्वचनात् । २२९० योगविभागात्सिद्धम् ॥

४ । ८ **उपसंवादाशङ्कयोश्च ३४३१** ॥ २२९१ उपसंवादाशङ्कयोर्वचनानर्थक्यं लिङर्थत्वात् ॥

४ । २१ **समानकर्तृकयोः पूर्वकाले ३३२०** ॥ २२९२ समानकर्तृकयोरिति बहुष्वप्राप्तिः । २२९३ द्विवचननिर्देशात् । २२९४ सिद्धं तु क्रियाप्रधानत्वात् । २२९५ लोकविज्ञानान्न सिध्यति । २२९६ अनन्त्यवचनात्तु सिद्धम् । २२९७ व्यादाय स्वपितीत्युपसंख्यानमपूर्वकालत्वात् । २२९८ न वा स्वप्नस्यावरकालत्वात् ॥

४ । २४ **विभाषाग्रेप्रथमपूर्वेषु ३३४५** ॥ २२९९ अग्रादिष्वप्राप्तविधेः समासप्रतिषेधः ॥

४ । २६ **स्वादुमि णमुल् ३३४७** ॥ २३०० स्वादुमि मान्तनिपातनमीकाराभावार्थम् । २३०१ च्व्यन्तस्य मकारान्तार्थम् । २३०२ आ च तुमुनः समानाधिकरणे ॥

४ । ३७ **करणे हनः ३३५८** ॥ २३०३ हनः करणेऽनर्थकं वचनं हिंसार्थेभ्यो णमुल्विधानात् । २३०४ अर्थवत्त्वहिंसार्थस्य विधानात् २३०५ नित्यसमासार्थं च ॥

४ । ६७ **कर्तरि कृत् २८३२** ॥ २३०६ कर्तरि कृद्वचनमनादेशे स्वार्थविज्ञानात् । २३०७ तत्र ल्युनादिप्रतिषेधो नानावाक्यत्वात् । २३०८ तद्वच कृत्येष्वेवकारकरणम् । २३०९ तच्च भव्याद्यर्थम् । २३१० ऋषिदेवतयोः कर्तरि समावेशवचनं ज्ञापकमसमावेशस्य । २३११ एवकारकरणं चार्थे । २३१२ तच्च भव्याद्यर्थम् । २३१३ तत्र प्रत्ययनियमेऽनिष्टप्रसङ्गः । २३१४ संज्ञानियमे सिद्धम् । २३१५ विभक्त्यादिषु चाप्राप्तिः प्रकृतेः प्रत्ययपरवचनात् ॥

४ । ६९ **लः कर्मणि च भावे चाकर्मकेभ्यः २१५२** ॥ २३१६ लग्रहणं सकर्मकनिवृत्त्यर्थम् । २३१७ विप्रतिषेधाद्वानः कर्तरि । २३१८ सर्वप्रसङ्गस्तु । २३१९ सर्वत्राप्रसङ्गस्तु । २३२० सर्वप्रसङ्गस्तु ॥

४ । ७७ **लस्य २१५३** ॥ २३२१ लादेशे सर्वप्रसङ्गोऽविशेषात् । २३२२ अर्थवद्ग्रहणात्सिद्धम् । २३२३ अर्थवद्ग्रहणात्सिद्धमिति चेन्न वर्णग्रहणेषु । २३२४ तस्माद्विशिष्टग्रहणम् । २३२५ लादेशो वर्णविधेः पूर्वविप्रतिषिद्धम् ॥

४ । ७९ **टित आत्मनेपदानां टेरे २२३३** ॥ २३२६ टित एत्व आत्मनेपदेष्वानप्रतिषेधः ॥

**४ । ८२ परस्मैपदानां णलतुसुस्थलथुसणल्वमाः २१७३** ॥ २३२७ णलः शित्करणं सर्वादेशार्थम् । २३२८ अकारस्य शित्करणं सर्वादेशार्थम् । २३२९ अकारवचनं समसंख्यार्थम् । २३३० तस्माच्छित्करणम् ॥

**४ । ८५ लोटो लङ्वत् २१९८** ॥ २३३१ लङ्वदतिदेशे जुस्भावप्रतिषेधः । २३३२ उत्ववचनात्सिद्धम् ॥

**४ । ८७-८९ सेर्ह्यपिच्च २२०१ । मेर्निः २२०३** ॥ २३३३ हिन्योरुत्वप्रतिषेधः । २३३४ न वोच्चारणसामर्थ्यात् ॥

**४ । ९३ एत ऐ २२५३** ॥ २३३५ एत ऐत्व आड्गुणप्रतिषेधः । २३३६ न वा बहिरङ्गलक्षणत्वात् ॥

**४ । १०२ लिङः सीयुट् २२५५** ॥ २३३७ यासुडादेः सीयुट्प्रतिषेधः । २३३८ न वा वाक्यापकर्षात् । २३३९ सुट्तिथोस्त्वपकर्षविज्ञानात् । २३४० अनादेश्च सुड्वचनम् । २३४१ न वा तिथोः प्रधानभावात्तद्विशेषणं लिङ्ग्रहणम् ॥

**४ । १०३ यासुट् परस्मैपदेषूदात्तो ङिच्च २२०९** ॥ २३४२ यासुटो ङिद्वचनं पिदर्थम् । २३४३ उदात्तवचनं च । २३४४ आगमानुदात्तार्थं वा ॥

**४ । ११० आतः २२२७** ॥ २३४५ जुस्याकारग्रहणं नियमार्थमिति चेत्सिज्लुग्ग्रहणम् । २३४६ प्रापकमिति चेत्प्रत्ययलक्षणप्रतिषेधः । २३४७ एवकारकरणं च । २३४८ लङ्ग्रहणं च ॥

**४ । ११४ आर्धधातुकं शेषः २१८७** ॥ २३४९ आर्धधातुकसंज्ञायां धातुग्रहणम् । २३५० स्वादिप्रतिषेधः । २३५१ तद्विधानात्सिद्धम् ॥

इति तृतीयोऽध्यायः ।

---

## चतुर्थोऽध्यायः ।

**१ । १ ङ्याप्प्रातिपदिकात् १८२** ॥ २३५२ ङ्याप्प्रातिपदिकग्रहणमङ्गभपदसंज्ञार्थम् । २३५३ यच्छयोश्च लुगर्थम् । २३५४ वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणे च प्रत्ययविधौ तत्संप्रत्ययार्थम् । २३५५ ङ्याब्ग्रहणमनर्थकं प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् । २३५६ प्रयोजनं सर्वनामस्वरसमासतद्धितविधिलुगलुगर्थम् । २३५७ मानिनि च विधिप्रतिषेधार्थम् । २३५८ प्रत्ययग्रहणोपचारेषु च । २३५९ अतिप्रसङ्ग उपपदविधौ । २३६० यञिञोः फकि । २३६१ समासान्तेषु च । २३६२ महदात्वे प्रियादिषु । २३६३ ञ्नित्स्वरे । २३६४ राज्ञः स्वरे ब्राह्मणकुमारयोः । २३६५ समाससंघातग्रहणेषु च । २३६६ तद्धितविधानार्थं तु । २३६७ विप्रतिषेधाद्धि तद्धितबलीयस्त्वम् । २३६८ तत्र समासान्तेषु दोषः । २३६९ ल्यूङोश्च ग्रहणम् । २३७० तदन्तस्य च प्रत्ययार्थेनायोगात्तद्धितानुत्पत्तिः ॥

**१ । ३ स्त्रियाम् ४५३** ॥ २३७१ लिङ्गात्स्त्रीपुंसयोर्ज्ञाने भ्रुकुंसे टाप्प्रसज्यते । २३७२ नत्वं खरकुटीः पश्य । २३७३ खट्वावृक्षौ न सिध्यतः ॥ २३७४ नपुंसकं भवेत्तस्मिन् । २३७५ तदभावे नपुंसकम् । २३७६ असत्तु मृगतृष्णावत् । २३७७ गन्धर्वनगरं यथा ॥ २३७८ आदित्यगतिवत्सन्न । २३७९ वस्त्रान्तर्हितवच्च तत् । २३८० तयोस्तु तत्कृतं दृष्ट्वा । २३८१ यथाकाशेन ज्योतिषः ॥ २३८२ अन्योन्यसंश्रयं त्वेतत् । २३८३ प्रत्यक्षेण विरुध्यते । २३८४

तटे च सर्वलिङ्गानि दृष्ट्वा कोऽध्यवसास्यति ॥ २३८५ संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः । २३८६ संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः स प् प्रसवे पुमान् ॥ २३८७ तस्योक्तौ लोकतो नाम । २३८८ गुणो वा लुपि युक्तवत् ॥ २३८९ स्त्रियामिति स्त्र्यर्थाभिधाने चेट्टाबादयो द्विवचनबहुवचनानेकप्रत्ययानुपपत्तिः । २३९० एकत्वात्स्त्रीत्वस्य । २३९१ स्त्र्यर्थस्य च प्रातिपदिकार्थत्वात्स्त्रियामिति लिङ्गानुपपत्तिः । २३९२ स्त्रीसमानाधिकरणादिति चेद्भूतादिष्वतिप्रसङ्गः । २३९३ षट्संज्ञकेभ्यश्च प्रतिषेधः । २३९४ सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात्स्वार्थे टाबादयः । २३९५ गुणवचनस्य चाश्रयतो लिङ्गवचनभावात् । २३९६ भावस्य च भावयुक्तत्वात् । २३९७ स्त्रीविषये ङ्याबोरप्रसिद्धिरकारान्तादर्शनात् । २३९८ सर्वेषां तु स्वरवर्णानुपूर्वीज्ञानार्थ उपदेशः । २३९९ तस्मात्सिद्धम् ॥

**१ । ४ अजाद्यतष्टाप् ४५४** ॥ २४०० शूद्रा चामहत्पूर्वा । २४०१ जातिः ॥

**१ । ६ उगितश्च ४५५** ॥ २४०२ धातोरुगितः प्रतिषेधः । २४०३ अञ्चतेश्चोपसंख्यानम् । २४०४ उगित्यञ्चतिग्रहणात्सिद्धमधातोः ॥

**१ । ७ वनो र च ४५६** ॥ २४०५ वनो न हशः । २४०६ बहुलं छन्दसि । २४०७ रविधाने बहुव्रीहेरुपसंख्यानं प्रतिषिद्धत्वात् । २४०८ अनो बहुव्रीहिप्रतिषेधे वोपधालोपिनो वावचनम् ॥

**१ । १० न षट्स्वस्रादिभ्यः ३०८** ॥ २४०९ षट्संज्ञानामन्ते लुप्ते टाबुत्पत्तिः कस्मान्न स्यात् । २४१० प्रत्याहाराच्चापा सिद्धम् । २४११ दोषस्त्वित्वे । २४१२ तस्मान्नोभौ ॥

**१ । १४ अनुपसर्जनात् ४६९** ॥ २४१३ अनुपसर्जनग्रहणमनर्थकं प्रातिपदिकेन तदन्तविधिप्रतिषेधात् । २४१४ ज्ञापकं तु पूर्वत्र तदन्ताप्रतिषेधस्य । २४१५ पूर्वसूत्रनिर्देशो वापिशलमधीत इति । २४१६ जातिशब्देभ्यस्त्वतिप्रसङ्गः । २४१७ सिद्धं तु जातेरनुपसर्जनत्वात् । २४१८ अनुपसर्जनाधिकारे जातेर्ङीष्विधाने सुपर्ण्या उपसंख्यानम् । २४१९ न वा समासस्यानुपसर्जनत्वाज्जातिवाचकत्वाच्च शब्दस्य सामान्येन ङीष्विधानम् ॥

**१ । १५ टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ४७०** ॥ २४२० ढग्रहणे सानुबन्धकस्योपसंख्यानम् । २४२१ अननुबन्धकग्रहणे हि न सानुबन्धकस्य । २४२२ अञ्ग्रहणमनर्थकं तदन्ताद्धि ङीन्विधानम् । २४२३ न वा जात्यधिकारात् । २४२४ अनधिकारे हि पुंयोगादाख्यायां ङीन्प्रसङ्गः । २४२५ नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् ॥

**१ । १६ यञश्च ४७१** ॥ २४२६ आपत्यग्रहणं द्वीपाद्यञः प्रतिषेधार्थम् ॥

**१ । १७ प्राचां ष्फ तद्धितः ४७३** ॥ २४२७ तद्धितवचनं षितः प्रातिपदिकादीकारार्थम् ॥

**१ । १८ सर्वत्र लोहितादिकतन्तेभ्यः ४७६** ॥ २४२८ लोहितादिषु शाकल्यस्योपसंख्यानम् । २४२९ कण्वात्तु शकलः पूर्वः । २४३० कतादुत्तर इष्यते । २४३१ पूर्वोत्तरौ तदन्तादी । २४३२ ष्फाणौ तत्र प्रयोजनम् ॥

**१ । १९ कौरव्यमाण्डूकाभ्यां च ४७७** ॥ २४३३ कौरव्यमाण्डूकयोरासुरेरुपसंख्यानम् । २४३४ छश्च ॥

**१ । २० वयसि प्रथमे ४७८** ॥ २४३५ वयस्यचरम इति वक्तव्यम् ॥

**१ । २५ बहुव्रीहेरूधसो ङीष् ४८४** ॥ २४३६ ऊधसो नकारो लिङ्गाधिकारे । २४३७ न वा समासान्ते स्त्रीग्रहणात् । २४३८ इतरथा हि कब्विधिप्रसङ्गः ॥

**१ । २७ दामहायनान्ताच्च ४८६** ॥ २४३९ दामहायनान्तात्संख्यादेः । २४४० तत्पुरुषविज्ञानाद्वा सिद्धम् । २४४१ हायनो वयसि स्मृतः ॥

**१ । ३१ रात्रेश्चाजसौ ३४५९** ॥ २४४२ अजसादिष्विति वक्तव्यम् ॥

**१ । ३२ अन्तर्वत्पतिवतोर्नुक् ४८९** ॥ २४४३ अन्तर्वत्पतिवदिति गर्भभर्तृसंयोगे । २४४४ अन्तर्वत्पतिवतोस्तु मतुब्वत्वे निपातनात् । २४४५ गर्भिण्यां जीवपत्यां च । २४४६ वा च छन्दसि नुग्भवेत् ॥

**१ । ३४ विभाषा सपूर्वस्य ४९१** ॥ २४४७ पत्युः सपूर्वादुपसर्जनसमास उपसंख्यानम् । २४४८ सिद्धं तु पत्युः प्रातिपदिकविशेषणत्वात् ॥

**१ । ३६ पूतक्रतोरै च ४९३** ॥ २४४९ पूतक्रत्वादीनां पुंयोगप्रकरणे वचनम् । २४५० लिङ्गसंनियोगेन सर्वत्रागमादेशानां वचने लिङ्गलुकि तत्कृतप्रसङ्गः । २४५१ सिद्धं त्वागमादेशानामङ्गतः स्त्रीप्रकरणे वचनात् । २४५२ लिङ्गलुकि वा प्रकृतिप्रत्यापत्तिवचनम् ॥

**१ । ३९ वर्णादनुदात्तात्तोपधात्तो नः ४९६** ॥ २४५३ असितपलितयोः प्रतिषेधः । २४५४ छन्दसि क्नमेके । २४५५ वर्णान्ङीब्विधाने पिशङ्गादुपसंख्यानम् ॥

**१ । ४२ जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ५००** ॥ २४५६ नीलादोषधौ । २४५७ प्राणिनि च । २४५८ वा संज्ञायाम् ॥

**१ । ४४ वोतो गुणवचनात् ५०२** ॥ २४५९ गुणवचनान्ङीबाद्युदात्तार्थम् । २४६० खरुसंयोगोपधप्रतिषेधश्च ॥

**१ । ४८ पुंयोगादाख्यायाम् ५०४** ॥ २४६१ गोपालकादीनां प्रतिषेधः । २४६२ पुंयोगादाख्यायां तद्धितलुग्वचनम् । २४६३ सुबन्तसमासवचनाच्चाकारान्तानुपपत्तिः । २४६४ सिद्धं तु स्त्रियाः पुंशब्देनाभिधानात् । २४६५ गतिकारकोपपदानां कृद्भिः सह समासवचनम् । २४६६ प्रयोजनं क्रादल्पाख्यायाम् । २४६७ जातेर्ङीष्विधानम् । २४६८ समासान्तस्य णत्वे । २४६९ कृदन्तात्तद्धिते वृद्धिस्वरौ च । २४७० अवदातायां ङीप्प्रतिषेधः । २४७१ सूर्याद्देवतायां चाब्वक्तव्यः ॥

**१ । ४९ इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ५०५** ॥ २४७२ हिमारण्ययोर्महत्त्वे । २४७३ यवाद्दोषे । २४७४ यवनाल्लिप्याम् । २४७५ उपाध्यायमातुलाभ्यां वा । २४७६ मुद्गलाच्छन्दसि लिच्च । २४७७ आचार्यादणत्वं च । २४७८ अर्यक्षत्रियाभ्यां वा ॥

**१ । ५२ बहुव्रीहेश्चान्तोदात्तात् ५०८** ॥ २४७९ अन्तोदात्ते जातप्रतिषेधः । २४८० पाणिगृहीत्यादीनां विशेषे । २४८१ बहुलं तणि । २४८२ प्रवृद्धविलूनाद्यर्थम् । २४८३ अन्तोदात्तादबह्वन्स्सुकालसुखादिपूर्वात् । २४८४ जातिपूर्वाद्वा ॥

**१ । ५४ स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ५१०** ॥ २४८५ उपसर्जनग्रहणमनर्थकं

बहुव्रीह्यधिकारात् । २४८६ बह्वजर्थमिति चेत्स्वाङ्गग्रहणात्सिद्धम् । २४८७ अनन्तोदात्तार्थमिति चेत्सहादिकृतत्वात्सिद्धम् । २४८८ स्वाङ्गसमुदायप्रतिषेधार्थं तु ॥

**१ । ५९ नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ५११** ॥ २४८९ नासिकादीनां विभाषायां पुच्छाच्च । २४९० कबरमणिविषशरेभ्यो नित्यम् । २४९१ उपमानात्पक्षाच्च पुच्छाच्च । २४९२ नासिकादिभ्यो विभाषायाः सहनञ्विद्यमानपूर्वेभ्यः प्रतिषेधो विप्रतिषेधेन ॥

**१ । ६० दिक्पूर्वपदान्ङीप् ५१५** ॥ २४९३ दिक्पूर्वपदान्ङीषोऽनुदात्तत्वम् । २४९४ ङीब्विधाने ह्यन्यत्रापि ङीब्विषयान्ङीप्प्रसङ्गः ॥

**१ । ६३ जातेरस्त्रीविषयादयोपधात् ५१८** ॥ २४९५ योपधप्रतिषेधे गवयहयमुकयमनुष्यमत्स्यानामप्रतिषेधः ॥

**१ । ६४ पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च ५१९** ॥ २४९६ सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्प्रतिषेधः । २४९७ संभस्त्राजिनशणपिण्डेभ्यः फलात् । २४९८ श्वेताच्च । २४९९ त्रेश्च । २५०० मूलान्नञः ॥

**१ । ६५ इतो मनुष्यजातेः ५२०** ॥ २५०१ इतो मनुष्यजातेरिञ उपसंख्यानम् ॥

**१ । ६६ ऊङुतः ५२१** ॥ २५०२ ऊङ्प्रकरणेऽप्राणिजातेश्चारज्ज्वादीनाम् ॥

**१ । ७० संहितशफलक्षणवामादेश्च ५२५** ॥ २५०३ सहितसहाभ्यां चेति वक्तव्यम् ॥

**१ । ७१ कद्रुकमण्डल्वोश्छन्दसि ३४४९** ॥ २५०४ कद्रुकमण्डलुगुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम् ॥

**१ । ७४ यङश्चाप् ५२८** ॥ २५०५ षाच्च यञश्चाप् ॥

**१ । ७५ आवट्याच्च ५२९** ॥ २५०६ अन उपधालोपिन ऊधसो ङीष् पूर्वविप्रतिषिद्धम् । २५०७ आवट्याद्यायञः ष्फश्चापः ॥

**१ । ७८ अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ्गोत्रे ११९८** ॥ २५०८ प्रकर्षे चोत्तमं कृत्वा दाक्ष्या नोपोत्तमं गुरु । २५०९ आम्विधिः केन ते न स्यात्प्रकर्षे यदयं तमः ॥ २५१० उन्नतस्य प्रकर्षोऽयं गतशब्दोऽत्र लुप्यते । २५११ नाव्ययार्थप्रकर्षोऽस्ति धात्वर्थोऽत्र प्रकृष्यते ॥ २५१२ उन्नतोऽपेक्षते किंचित्त्रयाणां द्वौ किलोन्नतौ । २५१३ चतुष्प्रभृति कर्तव्यो वाराह्यायां न सिध्यति ॥ २५१४ भिद्यतेऽस्य स्वरस्तेन विधिश्चापो न लक्ष्यते । २५१५ शब्दान्तरमिदं विद्यादृष्टमभ्यन्तरं त्रिषु ॥ २५१६ ष्यङ्यनादेशे यलोपवचनम् । २५१७ द्विरण्विधिः । २५१८ आदेशे नलोपवचनम् । २५१९ न वा ष्यङो लोपनिमित्तत्वात् । २५२० अनुबन्धौ त्वया कार्यौ । २५२१ चाबर्थम् । २५२२ टाब्विधिर्मम । २५२३ उक्तेऽपि हि भवन्त्येते । २५२४ तेन ञिन्न भविष्यति ॥ २५२५ अस्थानिवत्त्वे दोषस्ते वृद्धिरत्र न सिध्यति । २५२६ त्वयाप्यत्र विशेषार्थं कर्तव्यं स्याद्विशेषणम् ॥ २५२७ पाश्यायां ते कथं न स्यात् । २५२८ एको मे स्याद्विशेषणम् । २५२९ अन्यस्मिन्सूत्रभेदः स्यात् । २५३० षिति लिङ्गं प्रसज्यते ॥ २५३१ ङिति चेत्क्रीयिते दोषः । २५३२ व्यवधानान्न दुष्यति । २५३३ योऽनन्तरो न धातुः सः । २५३४ यो धातुः सोऽननन्तरः ॥ २५३५ न चेदुभयतः साम्यमुभयत्र प्रसज्यते ॥ २५३६ यङा विशेष्येत यदीह धातुर्यङ् धातुना वा यदि तुल्यमेतत् । २५३७ उभौ प्रधानं यदि नात्र दोषः । २५३८ तथा प्रसार्येत तु वाक्पतिस्ते ॥ २५३९ धातुप्रकरणस्येह न स्थान-

मिति निश्चयः। २५४० आत्वार्थं यदि कर्तव्यं तत्रैवैतत्करिष्यते ॥ २५४१ उपदेशे यदेजन्तं तस्य चेदात्त्वमिष्यते। २५४२ उद्देशो रूढिशब्दानां तेन गोर्न भविष्यति ॥

१। ७९ **गोत्रावयवात् ११९९** ॥ २५४३ गोत्रावयवादगोत्रार्थमिति चेत्तदनिष्टम्। २५४४ गोत्रादिति चेद्वचनानर्थक्यम्। २५४५ अगुरूपोत्तमार्थमिति चेत्सर्वेषामवयवत्वात्सर्वप्रसङ्गः। २५४६ सिद्धं तु रौढ्यादिषूपसंख्यानात् ॥

१। ८२ **समर्थानां प्रथमाद्वा १०७२** ॥ २५४७ समर्थवचनमनर्थकं न ह्यसमर्थेनार्थाभिधानम्। २५४८ प्रथमवचनमनर्थकं न ह्यप्रथमेनार्थाभिधानम् ॥

१। ८३ **प्राग्दीव्यतोऽण् १०७३** ॥ २५४९ प्राग्वचनं सकृद्विधानार्थम् २५५० अधिकारात्सिद्धमिति चेदपवादविषयेऽण्प्रसङ्गः। २५५१ तस्मात्प्राग्वचनम्। २५५२ न वा क्वचिद्वावचनात् ॥

१। ८५ **दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः १०७७** ॥ २५५३ वाङ्मतिपितृमतां छन्दस्युपसंख्यानम्। २५५४ पृथिव्या ञाञौ। २५५५ देवस्य यञञौ। २५५६ बहिषष्टिलोपो यञ्च। २५५७ ईकक्च। २५५८ ईकञ्छन्दसि। २५५९ स्थाम्नोऽकारः। २५६० लोम्नोऽपत्येषु बहुषु। २५६१ सर्वत्र गोरजादिप्रसङ्गे यत्। २५६२ ण्यादयोऽर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषिद्धम् ॥

१। ८६ **उत्सादिभ्योऽञ् १०७८** ॥ २५६३ अञ्प्रकरणे ग्रीष्मादच्छन्दसि ॥

१। ८७ **स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् १०७९** ॥ २५६४ नञ्स्नञौ भवनाचेद्वत्यर्थे प्रतिषेधः। २५६५ वतेः प्रागिति चेद्भाव उपसंख्यानम् ॥

१। ८८ **द्विगोर्लुगनपत्ये १०८०** ॥ २५६६ द्विगोर्लुकि तन्निमित्तग्रहणम्। २५६७ अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपि ॥

१। ८९ **गोत्रेऽलुगचि १०८१** ॥ २५६८ विप्रतिषेधात्तु लुकश्छविधानम्। २५६९ भूम्नीति च लुक्प्राप्तो बाह्ये चार्थे विधीयतेऽजादिः। बाहिरङ्गमन्तरङ्गाद्विप्रतिषेधादयुक्तं स्यात्॥ भूम्नि प्राप्तस्य लुको यदजादौ तद्धितेऽलुकं शास्ति। एतद्ब्रवीति कुर्वन्समानकालावलुग्लुक्च ॥ २५७० यदि वा लुकः प्रसङ्गे भवत्यलुक् छस्तथा प्रसिद्धोऽस्य। २५७१ लुग्वालुकः प्रसङ्गं प्रतीक्षते छेऽलुगस्य तथा। २५७२ गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक्। २५७३ एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि। २५७४ गर्गभार्गविकाग्रहणं वा नियमार्थम् ॥

१। ९० **यूनि लुक् १०८३** ॥ २५७५ यूनि लुगचीति चेत्प्रत्ययस्यायथेष्टप्रसङ्गः। २५७६ सिद्धं त्वविशेषेण लुग्वचनं हलि च प्रतिषेधः। २५७७ प्रयोजनं सौवीरगोत्रेभ्यो णठक्छाः। २५७८ इञ्यौ सर्वत्र। २५७९ प्राग्दीव्यतोऽधिकारे यूनो वृद्धवददतिदेशः। २५८० राजन्याद्वुञ्मनुष्याच्च ज्ञापकं लौकिकं परम् ॥

१। ९२ **तस्यापत्यम् १०८८** ॥ २५८१ तस्येदमित्यपत्येऽपि। २५८२ बाधनार्थं कृतं भवेत्। २५८३ उत्सर्गः शेष एवासौ। २५८४ वृद्धान्यस्य प्रयोजनम् ॥ २५८५ तद्धितार्थनिर्देशे लिङ्गवचनमप्रमाणं तस्याविवक्षितत्वात्। २५८६ सर्वनामनिर्देशे विशेषासंप्रत्ययः सामान्यनिर्देशात्। २५८७ सामान्यचोदनास्तु विशेषेषु। २५८८ अपत्याभिधाने स्त्रीपुंलिङ्गस्याप्रसि-

द्विर्नपुंसकत्वात् । २५८९ सिद्धं तु प्रजनस्य विवक्षितत्वात् । २५९० एकार्थे शब्दान्यत्वाद्दृष्टं लिङ्गान्यत्वम् । २५९१ अवयवान्यत्वाच्च ॥

**१ । ९३ एको गोत्रे १०९३** ॥ २५९२ उत्पादयितारं प्रत्यपत्ययोगात्तस्य च विवक्षितत्वादेकवचनं गोत्रे । २५९३ तत्र प्रत्ययान्ताद्गोत्रे प्रतिषेधो गोत्रे नियतत्वात् । २५९४ परमप्रकृतेश्चोत्पत्तिः । २५९५ स्त्रियां चानियमः । २५९६ यूनि चान्तर्हितेऽप्राप्तिः । २५९७ सर्वेषामप्यपत्ययोगात्प्रत्ययान्ताद्गोत्रे प्रतिषेधार्थमेको गोत्रे । २५९८ नियमानुपपत्तिश्च । २५९९ न ह्येकस्मिन्नपत्येऽनेकप्रत्ययप्राप्तिः । २६०० अपत्यान्तरे शब्दान्तरात्प्रत्ययान्तरप्राप्तिः । २६०१ अपत्यं समुदायश्चेन्नियमोऽत्र समीक्षितः । २६०२ तस्मिन्सुबहवः प्राप्ता नियमोऽस्य भविष्यति ॥ २६०३ तस्मात्प्रतिषेधः । २६०४ संज्ञाकारिभ्यो वा प्रत्ययोत्पत्तिः । २६०५ गोत्राद्यूनीति च । २६०६ तच्च जात्यादिनिवृत्त्यर्थम् ॥

**१ । ९५ अत इञ् १०९५** ॥ २६०७ इञो वृद्धावृद्धाभ्यां फिञ्फिनौ विप्रतिषेधेन । २६०८ तद्राजश्च ॥

**१ । ९६ बाह्वादिभ्यश्च १०९६** ॥ २६०९ बाह्वादिप्रभृतिषु येषां दर्शनं गोत्रभावे लौकिके ततोऽन्यत्र तेषां प्रतिषेधः । २६१० संबन्धिशब्दप्रत्ययानां तत्सदृशात्प्रतिषेधः ॥

**१ । ९७ सुधातुरकङ् १०९७** ॥ २६११ सुधातृव्यासवरुडानिषादचण्डालबिम्बानामिति वक्तव्यम् ॥

**१ । १०४ अनृष्यानन्तर्ये बिदादिभ्योऽञ् ११०६** ॥ २६१२ अनृष्यानन्तर्यवचनमनर्थकं संज्ञागोत्राधिकारात् ॥

**१ । ११४ ऋष्यन्धकवृष्णिकुरुभ्यश्च १११७** ॥ २६१३ ऋषिरत्र्यणो ढाढ्कौ विप्रतिषेधेन । २६१४ द्व्यचो ढको ढ्ग्ढञौ । २६१५ न वर्ष्यणः पुनर्वचनमन्यानिवृत्त्यर्थम् । २६१६ तस्मादृषिभ्योऽणिवधानेऽत्र्यादिप्रतिषेधः । २६१७ ढकः पुनर्वचनमन्यानिवृत्त्यर्थम् । २६१८ तस्मात्तन्नामिकाण्यद्व्यचः । २६१९ ऋष्यन्धकवृष्णिकुर्वणः सेनान्ताण्ण्यः ॥

**१ । १२० स्त्रीभ्यो ढक् ११२३** ॥ २६२० वडवाया वृषे वाच्ये । २६२१ अण् क्रुञ्चाकोकिलात्स्मृतः । २६२२ आरक् पुंसि ततोऽन्यत्र । २६२३ गोधाया ढ्ग्विधौ स्मृतः ॥

**१ । १२८ चटकाया ऐरक् ११३४** ॥ २६२४ चटकायाः पुंलिङ्गनिर्देशः । २६२५ स्त्रियामपत्ये लुक् ॥

**१ । १३० आरगुदीचाम् ११३६** ॥ २६२६ आरग्वचनमनर्थकं रका सिद्धत्वात् ॥

**१ । १३७ राजश्वशुराद्यत् ११५३** ॥ २६२७ राज्ञोऽपत्ये जातिग्रहणम् ॥

**१ । १४५ व्यन्सपत्ने ११६८** ॥ २६२८ व्यन्वचनमनर्थकं प्रत्ययार्थाभावात् ॥

**१ । १४७ गोत्रस्त्रियाः कुत्सने ण च ११७१** ॥ २६२९ गोत्रस्त्रियाः प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात्प्रातिपदिकस्य । २६३० लुगर्थमिति चेन्न लुक्प्रतिषेधात् । २६३१ व्यवहितत्वादप्रतिषेधः । २६३२ व्यवहितत्वादप्रतिषेध इति चेन्न पुंवद्भावात् । २६३३ फिनर्थं तु । २६३४ पुंवद्भावप्रतिषेधार्थं च । २६३५ गोत्राद्यून्यस्त्रियामिति वचनादप्रयोजनम् । २६३६ अवंश्यत्वाद्वा स्त्रियाः प्रयोजनम् ॥

**१ । १५० फाण्टाहृतिमिमताभ्यां णफिञौ ११७४** ॥ २६३७ फाण्टाहृतेः प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात्प्रातिपदिकस्य । २६३८ पुंवद्भावप्रतिषेधार्थं तु ॥

**१ । १५१ कुर्वादिभ्यो ण्यः ११७५** ॥ २६३९ वामरथस्य कण्वादिवत्स्वरवर्जम् ॥

**१ । १५३ उदीचामिञ् ११७७** ॥ २६४० उदीचामिञ्विधौ तक्ष्णोऽण्वचनम् । २६४१ शिवादिरिति चेण्ण्याविधिः । २६४२ सिद्धं तूदीचां वा ण्यवचनात् ॥

**१ । १५५ कौशल्यकार्मार्याभ्यां च ११७९** ॥ २६४३ फिञ्प्रकरणे दगुकोसलकर्मारछागवृषाणां युट् । २६४४ सिद्धं त्वादिष्टस्य युड्वचनात् ॥

**१ । १५८ वाकिनादीनां कुक् च ११८२** ॥ २६४५ कुटि प्रत्ययादेरादेशानुपपत्तिरनादित्वात् । २६४६ पूर्वान्ते नलोपवचनम् । २६४७ सिद्धं त्वादिष्टस्य कुड्वचनात् । २६४८ कारिभ्य इञोऽगोत्रात्फिञ्विप्रतिषेधेन ॥

**१ । १६१ मनोर्जातावञ्यतौ षुक् च ११८५** ॥ २६४९ अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः । नकारस्य च मूर्धन्यस्तेन सिद्धयति माणवः ॥

**१ । १६२ अपत्यं पौत्रप्रभृति गोत्रम् १०८९** ॥ २६५० पौत्रप्रभृतेर्गोत्रसंज्ञायां यस्यापत्यं तस्य पौत्रप्रभृतिसंज्ञाकरणम् । २६५१ जीवद्वंश्यं तु कुत्सितम् ॥

**१ । १६३ जीवति तु वंश्ये युवा १०९०** ॥ २६५२ जीवति तु वंश्ये युवेति पौत्रप्रभृत्यपेक्षं च । २६५३ तच्च दैवदत्त्यर्थम् । २६५४ वृद्धस्य च पूजायाम् । २६५५ आपत्यो वा गोत्रम् । २६५६ परमप्रकृतेश्चापत्यः । २६५७ आपत्याज्जीवद्वंश्यात्स्वार्थे द्वितीयो युवसंज्ञः । २६५८ स चास्त्रियाम् । २६५९ एको गोत्रग्रहणानर्थक्यं च । २६६० बहुवचनलोपिषु च सिद्धम् ॥

**१ । १६५ वान्यस्मिन्सपिण्डे स्थविरतरे जीवति १०९२** ॥ २६६१ गोत्रयूनोः समावेशे को दोषस्तत्कृतं भवेत् । २६६२ यस्कादिषु न दोषोऽस्ति न यूनीत्यनुवर्तनात् ॥ २६६३ दोषोऽत्रिविदपञ्चाला न यूनीत्यनुवर्तनात् । २६६४ कण्वादिषु न दोषोऽस्ति न यून्यास्ति ततः परम् ॥ २६६५ एको गोत्रे प्रतिपदम् । २६६६ गोत्राद्यूनि च तत्स्मरेत् । २६६७ राजन्याद्वुञ्मनुष्याच्च ज्ञापकं लौकिकं परम् ॥

**१ । १६८ जनपदशब्दात्क्षत्रियादञ् ११८६** ॥ २६६८ क्षत्रियादेकराजात्संघप्रतिषेधार्थम् । २६६९ क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत् । २६७० पूरोरण्वक्तव्यः । २६७१ पाण्डोर्ड्यण्वक्तव्यः ॥

**१ । १७० द्व्यञ्मगधकलिङ्गसूरमसादण् ११८८** ॥ २६७२ अणो द्व्यञ्ण्येञो विप्रतिषेधेन । २६७३ द्व्यञः कुरुनादिभ्यो ण्यः ॥

**१ । १७५ कम्बोजाल्लुक् ११९४** ॥ २६७४ कम्बोजादिभ्यो लुग्वचनं चोलाद्यर्थम् ॥

**१ । १७७ अतश्च ११९६** ॥ २६७५ अत इति तदन्तग्रहणमवन्त्यादिभ्यो लुग्वचनात् । २६७६ पर्श्वादिभ्यो लुग्वक्तव्यः । २६७७ योधेयादिप्रतिषेधो ज्ञापकः पर्श्वादिलुकः ॥

**२ । १ तेन रक्तं रागात् १२०२** ॥ २६७८ रक्तादीनामर्थाभिधाने प्रत्ययविधानादुपाध्यानर्थक्यम् ॥

**२ । २ लाक्षारोचनाट्ठक् १२०३** ॥ २६७९ ठक्प्रकरणे शकलकर्दमाभ्यामुपसंख्यानम् । २६८० नील्या अन् । २६८१ पीतात्कन् । २६८२ हरिद्रामहारजनाभ्यामञ् ॥

**२ । ३ नक्षत्रेण युक्तः कालः १२०४** ॥ २६८३ नक्षत्रेण चन्द्रमसो योगात्तद्युक्तात्काले प्रत्ययविधानम् । २६८४ तत्रोत्तरपदलोपः । २६८५ लिङ्गवचनानुपपत्तिश्च । २६८६ कालयोगात्सिद्धम् । २६८७ तथा च संप्रत्ययः ॥

**२ । ७ दृष्टं साम १२०८** ॥ २६८८ दृष्टं साम कलेर्ढक् । २६८९ सर्वत्राग्निकलिभ्यां ढक् । २६९० दृष्टे सामनि जाते चाप्यण् डिद्विर्वा विधीयते । २६९१ तीयादीकक् । २६९२ न विद्यायाः । २६९३ गोत्रादङ्कवदिष्यते ॥

**२ । १० परिवृतो रथः १२११** ॥ २६९४ परिवृतो रथ इति तदेकान्तग्रहणम् ॥

**२ । १३ कौमारापूर्ववचने १२१४** ॥ २६९५ कौमारापूर्ववचन इत्युभयतः स्त्रिया अपूर्वत्वे । २६९६ कौमारापूर्ववचने कुमार्या अण्विधीयते । २६९७ अपूर्वत्वं यदा तस्याः कुमार्यां भवतीति वा ॥ २६९८ पुंयोगात्स्त्र्यभिधानम् ॥

**१ । २१ सास्मिन्पौर्णमासीति संज्ञायाम् १२२३** ॥ २६९९ सास्मिन्पौर्णमासीति सज्ञाग्रहणम् । २७०० असंज्ञायां गरीयानुपसंयोगः ॥

**२ । २८ छ च १२३०** ॥ २७०१ छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसंख्यानम् । २७०२ शतरुद्राद्घ च ॥

**२ । ३४ कालेभ्यो भववत् १२३७** ॥ २७०३ कालेभ्यो भवे प्रत्ययमात्रप्रसङ्गः । २७०४ यः कालेभ्यो भवे तस्य विधाने प्रातिपदिकमात्रात्प्रसङ्गः । २७०५ सिद्धं तूभयनिर्देशात् ॥

**२ । ३५ महाराजप्रोष्ठपदाट्ठञ् १२३८** ॥ २७०६ ठञ्प्रकरणे तदस्मिन्वर्तत इति नवयज्ञादिभ्य उपसंख्यानम् । २७०७ पूर्णमासादण् ॥

**२ । ३६ पितृव्यमातुलमातामहपितामहाः १२४२** ॥ २७०८ पितृमातृभ्यां भ्रातरि व्यड्डुलचौ । २७०९ मातृपितृभ्यां पितरि डामहच् । २७१० मातरि षिच्च । २७११ महो वा छन्दस्यानङोऽवग्रहदर्शनात् । २७१२ अवेर्दुग्धे सोढदूसमरीसचः । २७१३ तिलान्निष्फलात्पिञ्जपेजौ । २७१४ पिञ्जश्छन्दसि डिच्च ॥

**२ । ३८ भिक्षादिभ्योऽण् १२४४** ॥ २७१५ भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वात्प्रत्ययविधौ ॥

**२ । ३९ गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् १२४६** ॥ २७१६ वृद्धाच्चेति वक्तव्यम् । २७१७ अञो वुञ्पूर्वविप्रतिषिद्धम् । २७१८ ठक्तु विप्रतिषेधात् ॥

**२ । ४० केदाराद्यञ्च १२४८** ॥ २७१९ गणिकायाश्चेति वक्तव्यम् ॥

**२ । ४२ ब्राह्मणमाणववाडवाद्यत् १२५०** ॥ २७२० यन्प्रकरणे पृष्ठादुपसंख्यानम् ॥

**२ । ४३ ग्रामजनबन्धुभ्यस्तल् १२५१** ॥ २७२१ गजसहायाभ्यां चेति वक्तव्यम् । २७२२ अह्नः खः । २७२३ क्रतौ । २७२४ पर्श्वा णस् ॥

**२ । ४५ खण्डिकादिभ्यश्च १२५४** ॥ २७२५ अञ्सिद्धिरनुदात्तादेः कोऽर्थः क्षुद्रकमालवात् । २७२६ गोत्राद्वुञ् न च तत्रोत्रम् । २७२७ तदन्तान्न स सर्वतः ॥ २७२८ ज्ञापकं स्यात्तदन्तत्वे । २७२९ तथा चापिशलेर्विधिः । २७३० सेनायां नियमार्थं वा । २७३१ तथा बाध्येत वाञ्वुञा ॥ २७३२ अञ्प्रकरणे क्षुद्रकमालवात्सेनासंज्ञायाम् ॥

**२ । ४९ पाशादिभ्यो यः १२५८** ॥ २७३३ पृथग्वातादर्शनादसमूहः । २७३४ शीघ्रत्वे तु ॥

२ । ५०-५१ खलगोरथात् १२५९ । इनित्रकट्यचश्च १२६० ॥ २०३५ खलादिभ्य इनिः ॥

२ । ५२ विषयो देशे १२६१ ॥ २०३६ विषयाभिधाने जनपदे लुब्बहुवचनविषयात् । २०३७ गान्धार्यादिभ्यो वा । २०३८ राजन्यादिभ्यो वा वुञ् । २०३९ बैल्ववनादिभ्यो नित्यम् । २०४० न वाभिधेयस्य निवासविषयत्वान्निवासविवक्षायां लुब् विषयाविवक्षायां प्रत्ययः ॥

२ । ५५ सोऽस्यादिरिति च्छन्दसः प्रगाथेषु १२६४ ॥ २०४१ छन्दसः प्रत्ययविधाने नपुंसकात्स्वार्थ उपसंख्यानम् ॥

२ । ६० क्रतूक्थादिसूत्रान्ताट्ठक् १२७० ॥ २०४२ तस्येदंप्रत्ययाल्लुक् । २०४३ तस्येदंप्रत्ययस्य च । २०४४ विद्यालक्षणकल्पसूत्रान्तादकल्पादेरिकक् स्मृतः । २०४५ विद्या चानङ्गक्षत्रधर्मत्रिपूर्वा । २०४६ आख्यानाख्यायिकेतिहासपुराणेभ्यश्च । २०४७ अनुसूर्लक्ष्यलक्षणे च । २०४८ सर्वसादेर्द्विगोश्च लः । २०४९ इकन्पदोत्तरपदात् । २०५० शतषष्टेः षिकन्पथः ॥

२ । ६५ सूत्राच्च कोपधात् १२७७ ॥ २०५१ संख्याप्रकृतेरिति वक्तव्यम् ॥

२ । ६६ छन्दोब्राह्मणानि च तद्विषयाणि १२७८ ॥ २०५२ अन्यत्राभिधेयस्यानित्यत्वाच्छन्दोब्राह्मणानां तद्विषयवचनम् । २०५३ तत्र यथाधिकारं तद्विषयप्रसङ्गः । २०५४ सिद्धं तु प्रोक्ताधिकारे तद्विषयवचनात् । २०५५ याज्ञवल्क्यादिभ्यः प्रतिषेधः । २०५६ इनिर्वा प्रोक्ते तद्विषयः । २०५७ काश्यपकौशिकग्रहणं च कल्पे नियमार्थम् ॥

२ । ७१ ओरञ् १२८३ ॥ २०५८ ओरञ्विधेर्नद्यां मतुब्विप्रतिषिद्धम् ॥

२ । ८५ नद्यां मतुप् १३०४ ॥ २०५९ नद्यां मतुब्वचनं मत्वर्थेऽण्विधानात् । २०६० निर्वृत्ताद्यर्थं च ॥

२ । ८७ कुमुदनडवेतसेभ्यो ड्मतुप् १३०६ ॥ २०६१ महिषाच्चेति वक्तव्यम् ॥

२ । ९१ नडादीनां कुक्च १३१० ॥ २०६२ कुटि प्रत्ययादेरादेशानुपपत्तिरनादित्वात् । २०६३ पूर्वान्ते ह्रस्वत्वम् । २०६४ सिद्धं त्वादिष्टस्य कुड्वचनात् । २०६५ संनियोगात्सिद्धम् ॥

२ । ९२ शेषे १३१२ ॥ २०६६ शेषवचनं घादीनामपत्यादिष्वप्रसङ्गार्थम् । २०६७ तस्येदंवचनात्प्रसङ्गः । २०६८ विप्रतिषेधात्सिद्धम् । २०६९ न वा परत्वाद्घादीनाम् । २०७० अणपवादत्वाच्चाण्विषये घादिप्रसङ्गः ॥

२ । ९३ राष्ट्रावारपाराद्घखौ १३१३ ॥ २०७१ अवारपाराद्विगृहीतादपि । २०७२ विपरीताच्च ॥

२ । ९५ कत्र्यादिभ्यो ढकञ् १३१५ ॥ २०७३ ग्रामाच्चेति वक्तव्यम् ॥

२ । ९६ कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु १३१६ ॥ २०७४ कुलस्यापत्यं कुक्षिग्रीवात्तु कन्ढञः ॥

२ । ९९ कापिश्याः ष्फक् १३१९ ॥ २०७५ बाह्ल्युर्दिपर्दिभ्यश्चेति वक्तव्यम् ॥

२ । १०० रङ्कोरमनुष्येऽण्च १३२० ॥ २०७६ रङ्कोरमनुष्यग्रहणानर्थक्यं मनुष्यतत्स्थयोर्वुञ्विधानात् । २०७७ अमनुष्ये मनुष्यस्थे ष्फगणोज्ञापकमिति चेन्नानिष्टत्वात् । २०७८ अण्ग्रहणं च कच्छादिभ्योऽण्वचनात् ॥

**२ । १०४ अव्ययात्त्यप् १३२४** ॥ २७७९ अमेहक्कतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात्स्मृतः । २७८० त्यब्नेर्ध्रुवे । २७८१ निसो गते । २७८२ अरण्याण्ण्यः । २७८३ दूरादेत्यः । २७८४ उत्तरादाहञ् । २७८५ अव्ययात्त्यप्याविष्टयस्योपसंख्यानं छन्दसि । २७८६ अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविधेर्वृद्धाच्छो विप्रतिषेधेन । २७८७ तेभ्यष्ठञ्ञ्ठौ । २७८८ न वा ठञादीनां छापवादत्वात्तद्विषये चाभावादितरेषाम् । २७८९ कोपधादणः पुनर्वचनमन्यानिवृत्त्यर्थम् । २७९० तस्मादन्तोदात्ते कोपधप्रतिषेधः । २७९१ छादोर्देशे कालाट्ठञ् । २७९२ नक्षत्रादण् । २७९३ अव्ययाद् ट्युट्युलौ । २७९४ शरीरावयवाद्यत् । २७९५ वर्गान्ताच्चाशब्दे यत्खौ । २७९६ बह्वचोऽन्तोदात्ताट्ठञ् । २७९७ आयस्थानेभ्यष्ठक् । २७९८ विद्यायोनिसंबन्धेभ्यो वुञ् । २७९९ ऋतष्ठञ् । २८०० रूप्यमयटौ । २८०१ अचित्ताट्ठक् । २८०२ गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् । २८०३ गिनिरन्तेवासिब्राह्मणेभ्यः । २८०४ पत्रपूर्वादञ् । २८०५ द्वन्द्वाद्वुन्वैरिमैथुनिकयोः । २८०६ गोत्रचरणाद्वुञ् । २८०७ कण्वादीञोऽण्विधेः । २८०८ ठञ्ञ्ठाभ्यामोर्देशे ठञ् । २८०९ न वा ठञोऽनवकाशत्वात् । २८१० योपधप्रस्थादीनां वुञ् । २८११ ओश्च ठञः । २८१२ जनपदानामकाणौ । २८१३ न वा वुञपवादत्वादणः । २८१४ कोपधादणोऽकान्ताच्छः । २८१५ धन्ववुञश्च । २८१६ न वा छस्य पुनर्वचनं छापवादनिवृत्त्यर्थम् ॥

**२ । १२४ जनपदतदवध्योश्च १३४८** ॥ २८१७ जनपदतदवध्योर्वुञ्विधानेऽवयवमात्रात्प्रसङ्गः । २८१८ जनपदादिति चेद्वचनानर्थक्यम् ॥

**२ । १२९ अरण्यान्मनुष्ये १३५३** ॥ २८१९ पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम् । २८२० वा गोमयेष्विति वक्तव्यम् ॥

**२ । १३० विभाषा कुरुयुगंधराभ्याम् १३५४** ॥ २८२१ कुरुयुगंधरेभ्यो वावचनान्मनुष्यतत्स्थयोर्वुञ्विधानम् ॥

**२ । १३३ कच्छादिभ्यश्च १३५७** ॥ २८२२ साल्वानां कच्छादिषु पाठोऽण्विधानार्थः । २८२३ न वा पदातिगोयवागूग्रहणमवधारणार्थम् ॥

**२ । १३७ गर्तोत्तरपदाच्छः १३६१** ॥ २८२४ गर्तोत्तरपदाच्छविधेर्जनपदाद्वुञ्पूर्वविप्रतिषिद्धम् ॥

**२ । १३८ गहादिभ्यश्च १३६२** ॥ २८२५ गहादिषु पृथिवीमध्यस्य मध्यमभावः । २८२६ चरणसंबन्धेन निवासलक्षणोऽण् ॥

**२ । १४१ वृद्धादकेकान्तखोपधात् १३६५** ॥ २८२७ ईकान्तादपीति वक्तव्यम् । २८२८ अकेकान्तग्रहणे कोपधग्रहणं सौसुकाद्यर्थम् ॥

**३ । १ युष्मदस्मदोरन्यतरस्यां खञ्च १३७०** ॥ २८२९ युष्मदस्मद्भ्यां प्रत्ययविधाने योगविभागः । २८३० समसंख्याप्रतिषेधार्थः ॥

**३ । २ तस्मिन्नणि च युष्माकास्माकौ १३७१** ॥ २८३१ आदेशवचने च । २८३२ तत्र पुनः खञ्ग्रहणम् ॥

**३ । ३ तवकममकावेकवचने १३७२** ॥ २८३३ एकार्थग्रहणं च ॥

**३ । ४ अर्धाद्यत् १३७४** ॥ २८३४ अर्धाद्यद्विधाने सपूर्वाट्ठञ् । २८३५ दिक्पूर्वपदाद्यच्च ॥

३ । १९ श्वसस्तुट् च १३८९ ॥ २८३६ श्वसस्तुट्यादेशानुपपत्तिरनादित्वात् । २८३७ पूर्वान्ते कप्रतिषेधः । २८३८ सिद्धं त्वादिष्टस्य तुड्वचनात् । २८३९ संनियोगाद्वा ॥

३ । २२ सर्वत्राण् च तलोपश्च १३९० ॥ २८४० हेमन्तस्याणि तलोपवचनानर्थक्यं हेम्नः प्रकृत्यन्तरत्वात् । २८४१ अलोपदर्शनाच्च ॥

३ । २३ सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च १३९१ ॥ २८४२ चिरपरुत्परारिभ्यस्त्नः । २८४३ प्रगस्य छन्दसि गलोपश्च । २८४४ अग्रादिपश्चाड्डिमच् । २८४५ अन्ताच्च । २८४६ सायचिरयोर्मकारान्तत्वं प्रत्ययसंनियुक्तम् । २८४७ सायमोऽह्ने मलोपः । २८४८ तरे च । २८४९ वा सप्तम्याम् । २८५० प्राह्णप्रगयोरेकारान्तत्वम् । २८५१ पूर्वान्ते विसर्जनीयः । २८५२ सिद्धं त्वादिष्टस्य तुड्वचनात् । २८५३ संनियोगाद्वा ॥

३ । २४ विभाषा पूर्वाह्णापराह्णाभ्याम् १३९२ ॥ २८५४ पूर्वाह्णापराह्णाभ्यां सुबन्तवचनं सप्तमीश्रवणार्थम् । २८५५ अलुग्वचनं ज्ञापकमिति चेदव्ययात्सप्तमीप्रसङ्गः ॥

२ । २५ तत्र जातः १३९३ ॥ २८५६ तत्र जातादिषु वचनं नियमार्थम् ॥

३ । ३४ श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् १४०७ ॥ २८५७ लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम् । २८५८ फल्गुन्यषाढाभ्यां टानौ । २८५९ श्रविष्ठाषाढाभ्यां छण् । २८६० न वा नक्षत्रेभ्यो बहुलं लुग्वचनात् ।

३ । ३९ प्रायभवः १४१४ ॥ २८६१ प्रायभवग्रहणमनर्थकं तत्रभवेन कृतत्वात् । २८६२ अनित्यभवः प्रायभव इति चेन्मुक्तसंशयेन तुल्यम् ॥

३ । ४२ कोशाड्ढञ् १४१७ ॥ २८६३ विकारे कोशाड्ढञ् । २८६४ संभूते ह्यर्थानुपपत्तिः ॥

२ । ५३ तत्र भवः १४२८ ॥ २८६५ तत्रप्रकरणे तत्रेति पुनर्वचनं कालनिवृत्त्यर्थम् ॥

३ । ५८ गम्भीराञ्ञ्यः १४३५ ॥ २८६६ ञ्यप्रकरणे परिमुखादिभ्य उपसंख्यानम् ॥ २८६७ अव्ययीभावाद्विधाने उपकूलादिभ्यः प्रतिषेधः । (२८६८ 'बहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम्' इति काशिका )।

३ । ६० अन्तःपूर्वपदाट्ठञ् १४३७ ॥ २८६९ समानस्य तदादेश्च अध्यात्मादिषु चेष्यते । २८७० ऊर्ध्वं दमाच्च देहाच्च । २८७१ लोकोत्तरपदस्य च ॥ २८७२ मुखपार्श्वतसोरीयः । २८७३ कुग्जनस्य परस्य च । २८७४ ईयः कार्योऽथ मध्यस्य । २८७५ मण्मीयौ चापि प्रत्ययौ ॥ २८७६ मध्य मध्यं दिनण्चास्मात् । २८७७ स्थाम्नो लुगजिनात्तथा ॥

३ । ६६ तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः १४४५ ॥ २८७८ भवव्याख्यानयोर्युगपदधिकारोऽपवादविधानार्थः । २८७९ कृतनिर्देशौ हि तौ । २८८० तत्र व्याख्यातव्यनाम्नो ग्रहणं भवार्थम् । २८८१ व्याख्याने ह्यवचनात्सिद्धम् । २८८२ भवे मन्त्रेषु लुग्वचनम् । २८८३ कल्पे च व्याख्याने । २८८४ न वा तादर्थ्यात्ताच्छब्द्यम् ॥

३ । ७२ द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् १४५१ ॥ २८८५ नामाख्यातग्रहणं संघाताविगृहीतार्थम् ॥

---

१. अत्र च 'बाह्यो दैव्यः पाञ्चजन्योऽथ गम्भीराञ्ञ्य इष्यते' इति 'अन्तःपूर्व-' (४ । ३ । ६०) इति सूत्रस्थभाष्यं प्रमाणम् । दीक्षितेन तु दैव्यबाह्ययोर्वार्तिकान्तराभ्यामपि सिद्धत्वात्तत्त्यक्त्वा 'पञ्चजनादुपसंख्यानम्' इत्येतावदेवोक्तम्:

**३ । ८४ विदूराञ्ञ्यः १४६४** ॥ २८८६ वालवायो विदूरं च । २८८७ प्रकृत्यन्तरमेव वा । २८८८ नवै तत्रेति चेद्ब्रूयाज्जित्वरीवदुपाचरेत् ॥

**३ । ८७ अधिकृत्य कृते ग्रन्थे १४६७** ॥ २८८९ अधिकृत्य कृते ग्रन्थे लुबाख्यायिकाभ्यो बहुलम् ॥

**३ । ८८ शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः १४६८** ॥ २८९० द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः ॥

**३ । १०० जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने १४८०** ॥ २८९१ सर्ववचनं प्रकृतिनिर्ह्रासार्थम् । २८९२ तच्च मद्रवृज्यर्थम् ॥

**३ । १०१ तेन प्रोक्तम् १४८१** ॥ २८९३ प्रोक्तग्रहणमनर्थकं तत्रादर्शनात् । २८९४ ग्रन्थे च दर्शनात् । २८९५ छन्दोऽर्थमिति चेत्तुल्यम् ॥

**३ । १०४ कलापिवैशम्पायनान्तेवासिभ्यश्च १४८४** ॥ २८९६ प्रत्यक्षकारिग्रहणम् । २८९७ कलापिखाडायनग्रहणं ज्ञापकं वैशम्पायनान्तेवासिषु प्रत्यक्षकारिग्रहणस्य । २८९८ छन्दोग्रहणं चेतरथा ह्यतिप्रसङ्गः ॥

**३ । १०५ पुराणप्रोक्तेषु ब्राह्मणकल्पेषु १४८५** ॥ २८९९ पुराणप्रोक्तेषु ब्राह्मणकल्पेषु याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वात् ॥

**३ । ११६ कृते ग्रन्थे १४९६** ॥ २९०० कृते ग्रन्थे माक्षिकादिभ्योऽण् । २९०१ तद्विशेषेभ्यश्च । २९०२ योगविभागात्सिद्धम् ॥

**३ । १२० तस्येदम् १५००** ॥ २९०३ तस्येदमित्यसंनिहितेऽप्रातिरिदमः प्रत्यक्षवाचित्वात् । २९०४ सिद्धं तु यद्योगा तत्र । २९०५ अनन्तरादिषु च प्रतिषेधः । २९०६ सिद्धं तु परिगणनात् । २९०७ स्वे ग्रामजनपदमनुष्येभ्यः । २९०८ पश्चाद्राह्ये । २९०९ रथाद्रथाङ्गे । २९१० वहेस्तुरणिट्च । २९११ अग्नीधः शरणे रञ् भं च । २९१२ समिधामाधाने षेण्यण् । २९१३ चरणाद्धर्माम्नाययोः ॥

**३ । १२५ द्वन्द्वाद्वुन्वैरमैथुनिकयोः १५०५** ॥ २९१४ वैरे देवासुरादिभ्यः प्रतिषेधः ॥

**३ । १२७ संघाङ्कलक्षणेष्वञ्यञिञामण् १५०७** ॥ २९१५ संघादिषु घोषग्रहणम् । २९१६ संघादिषु प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात्प्रातिपदिकस्य । २९१७ लिङ्गपुंवद्भावप्रतिषेधार्थं तु ॥

**३ । १३१ रैवतिकादिभ्यश्छः १५११** ॥ कौपिञ्जलहस्तिपदादण् । २९१८ आथर्वणिकस्येकलोपश्च ॥

**३ । १३४ तस्य विकारः १५१४** ॥ २९१९ तस्यग्रहणे तस्य पुनर्वचनं शैषिकनिवृत्त्यर्थम् । २९२० तस्येदंवचनात्प्रसङ्गः । २९२१ बाधनार्थं कृतं भवेत् । २९२२ उत्सर्गः शेष एवासौ । २९२३ न वा संप्रत्ययः । २९२४ अवयवे च प्राण्योषधिवृक्षेभ्योऽनिवृत्तिः । २९२५ अणमयटोश्च विप्रतिषेधानुपपत्तिर्मयडुत्सर्गात् । २९२६ अनुवृत्तौ हि छस्योत्सर्गापवादविप्रतिषेधान्मयट् ॥

**३ । १३६ बिल्वादिभ्योऽण् १५१६** ॥ २९२७ बिल्वादिषु गवेधुकाग्रहणं मयट्प्रतिषेधार्थम् ॥

**३ । १४० अनुदात्तादेश्च १५२०** ॥ २९२८ अनुदात्तादेरञो विधान आद्युदात्तान्ङीष उपसंख्यानम् । २९२९ पदस्य ह्यनुदात्तादित्वम् । २९३० न वा समर्थस्यानुदात्तादित्वात् । २९३१ पदग्रहणं परिमाणार्थम् ॥

**३ । १४३ मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः १५२३** ॥ २९३२ मयड्वैतयोर्वचनमपवादविषयेऽनिवृत्त्यर्थम् । २९३३ एतयोरित्यर्थनिर्देशः ॥

**३ । १५५ ञितश्च तत्प्रत्ययात् १५३३** ॥ २९३४ विकारावयवयोर्विकारावयवयुक्तत्वान्मयट्प्रतिषेधार्थं ञितश्च प्रत्ययादञो विधानम् । २९३५ न वा दृष्टो ह्यवयवे समुदायशब्दो विकारे च प्रकृतिशब्दस्तस्मान्मयडभावः । २९३६ विकारावयवशब्दात्प्रसङ्ग इति चेन्न तेनानभिधानात् । २९३७ अभिधाने ह्यन्यतोऽपि मयट्प्रसङ्गः । २९३८ तस्मात्तत्प्रत्ययान्ताल्लुग्वचनम् ॥

**३ । १५६ क्रीतवत्परिमाणात् १५३४** ॥ २९३९ क्रीतवत्परिमाणादङ्गं च । २९४० अणो वृद्धान्मयट् । २९४१ औरञोऽनुदात्तादेरञश्च । २९४२ मयटः प्राण्यञ्विप्रतिषेधेन । २९४३ न वानवकाशत्वादपवादो मयट् । २९४४ प्राण्यञश्च । २९४५ तस्मान्मयड्विधाने प्राणिप्रतिषेधः । २९४६ अनुदात्तादेरञः प्राण्यञ्विप्रतिषेधेन ॥

**३ । १६३ फले लुक् १५४१** ॥ २९४७ फले लुग्वचनानर्थक्यं प्रकृत्यन्तरत्वात् । २९४८ एकान्तदर्शनात्प्रसङ्ग इति चेद्वृक्षे लुग्वचनम् ॥

**३ । १६६ लुप् च १५४५** ॥ २९४९ लुप्प्रकरणे फलपाकशुषामुपसंख्यानम् । २९५० पुष्पमूलेषु च बहुलम् ॥

**४ । १ प्राग्वहतेष्ठक् १५४८** ॥ २९५१ ठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसंख्यानम् । २९५२ आहौ प्रभूतादिभ्यः । २९५३ पृच्छतौ सुस्नातादिभ्यः । २९५४ गच्छतौ परदारादिभ्यः ॥

**४ । ९ आकर्षात्ष्ठल् १५५७** ॥ २९५५ आकर्षात्पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च आवसथात्किसरादेः षितः षडेते ठगधिकारे ॥

**४ । १७ विभाषा विवधात् १५६७** ॥ २९५६ वीवधाच्चेति वक्तव्यम् ॥

**४ । २० त्रेर्मम्नित्यम् १५७०** ॥ २९५७ त्रेर्मम्नित्यवचनं विषयार्थम् । २९५८ तत्र यथाधिकारं तद्विषयप्रसङ्गः । २९५९ भावप्रत्ययान्तादिमब्वक्तव्यः ॥

**४ । २४ लवणाल्लुक् १५७४** ॥ २९६० लवणाल्लुग्वचनानर्थक्यं रसवाचित्वात् । २९६१ असंसृष्टे च दर्शनात् । २९६२ संसृष्टे चादर्शनात् ॥

**४ । ३० प्रयच्छति गर्ह्यम् १५८०** ॥ २९६३ प्रयच्छति गर्ह्याय । २९६४ मेस्यालोपो वा । २९६५ वृद्धेर्वृधुषिभावः ॥

**४ । ४१ धर्मं चरति १५९१** ॥ २९६६ अधर्माच्च ॥

**४ । ४९ ऋतोऽञ् १५९९** ॥ २९६७ नृनराभ्यामञ्वचनम् । २९६८ विशसितुरिड्लोपश्च । २९६९ विभाजयितुर्णिलोपश्च ॥

**४ । ६५ हितं भक्षाः १६१६** ॥ २९७० हितं भक्षा इति चतुर्थीनिर्देशः । २९७१ इतरथा ह्यनिर्देशः ॥

**४ । ७६ तद्वहति रथयुगप्रासङ्गम् १६२७** ॥ २९७२ वहत्यभिधाने रथशकटहलसीरेभ्यः प्रत्ययविधानानर्थक्यं विहितत्वात् । २९७३ शब्दभेदादविधानम् । २९७४ शब्दभेदादविधानमिति चेदर्थाश्रयत्वात्प्रत्ययविधानस्यार्थसामान्यात्सिद्धम् ॥

**४ । ८२ संज्ञायां जन्या १६३४** ॥ २९७५ जन्या इति निपातनानर्थक्यं पञ्चमीनिर्देशात् ॥

**४ । ८३ विध्यत्यधनुषा १६३५** ॥ २९७६ विध्यत्यकरणेन । २९७७ इतरथा ह्यतिप्रसङ्गः ॥

**४ । १२८ मत्वर्थे मासतन्वोः ३४७४** ॥ २९७८ मासतन्वोरनन्तरार्थे वा । २९७९ लुगकारेकाररेफाश्च ॥

**४ । १४० वसोः समूहे च ३५८६** ॥ २९८० अक्षरसमूहे छन्दस उपसंख्यानम् । २९८१ छन्दसि बहुभिर्वसव्यैरुपसंख्यानम् । २९८२ अग्निरीशे वसव्यस्य । २९८३ स्वार्थविज्ञानात्सिद्धम् ॥

इति चतुर्थोऽध्यायः ।

---

## पञ्चमोऽध्यायः ।

**१ । २ उगवादिभ्यो यत् १६६२** ॥ २९८४ यञ्ज्यावञः पूर्वविप्रतिषिद्धं सनङ्गुपानहो प्रयोजनम् । २९८५ ढञ्च । २९८६ हविरपूपादिभ्यो विभाषया यत् । २९८७ अन्नविकारेभ्यश्च । २९८८ नाभेर्नभभावे प्रत्ययानुपपत्तिः प्रकृत्यभावात् । २९८९ सिद्धं तु शाखादिषु वचनाद्ध्रस्वत्वं च । २९९० नभ्यात्तु लुग्वचनम् ॥

**१ । ४ विभाषा हविरपूपादिभ्यः १६६४** ॥ २९९१ हविरपूपादिभ्योऽप्राप्ते ॥

**१ । ६ शरीरावयवाद्यत् १६६६** ॥ २९९२ यत्प्रकरणे रथाच्च ॥

**१ । ९ आत्मन्विश्वजनभोगोत्तरपदात्खः १६७०** ॥ २९९३ भोगोत्तरपदात्खविधानेऽनिर्देशः पूर्वपदार्थहितत्वात् । २९९४ भोगीनरिति चेद्वावचनम् । २९९५ राजाचार्याभ्यां नित्यम् । २९९६ खविधाने पञ्चजनादुपसंख्यानम् । २९९७ सर्वजनाट्ठञ्च । २९९८ महाजनान्नित्यम् ॥

**१ । १० सर्वपुरुषाभ्यां णढञौ १६७२** ॥ २९९९ सर्वाण्णस्य वावचनम् । ३००० पुरुषाद्वधविकारसमूहतेनकृतेषु ॥

**१ । १२ तदर्थं विकृतेः प्रकृतौ १६७४** ॥ ३००१ तदर्थमिति कृत्यनामभ्यञ्ञ् । ३००२ न वा प्रयोजनेन कृतत्वात् ॥

**१ । १३ छदिरुपधिबलेर्ढञ् १६७५** ॥ ३००३ उपध्यर्थमिति प्रत्ययानुपपत्तिरुपध्यभावात् । ३००४ सिद्धं तु कृदन्तस्य स्वार्थेऽञ्वचनात् ॥

**१ । १९ आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् १६८१** ॥ ३००५ ऊर्ध्वमानं किलोन्मानम् । ३००६ परिमाणं तु सर्वतः । ३००७ आयामस्तु प्रमाणं स्यात् । ३००८ संख्या बाह्या तु सर्वतः ॥ ३००९ भेदमात्रं ब्रवीत्येषा नैषा मानं कुतश्चन । ३०१० ठगादयः प्रागर्हाच्चेदर्हे तद्विधिः । ३०११ वस्नेवचनात्सिद्धम् । ३०१२ वस्नेवचनात्सिद्धमिति चेन्मांसौदनिकादिष्वप्राप्तिः । ३०१३ आर्हाच्चेद्भोजनादिष्वतिप्रसङ्गः ॥

**१ । २० असमासे निष्कादिभ्यः १६८२** ॥ २०१४ निष्कादिष्वसमासग्रहणं ज्ञापकं पूर्वत्र तदन्ताप्रतिषेधस्य । २०१५ प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि ॥

**१ । २१ शताच्च ठन्यतावशते १६८६** ॥ २०१६ शतप्रतिषेधेऽन्यशतत्वे प्रतिषेधः ॥

**१ । २२ संख्याया अतिशदन्तायाः कन् १६८७** ॥ २०१७ तिग्रहणाड्डतिग्रहणमिति चेदर्थवद्ग्रहणात्सिद्धम् ॥

**१ । २५ कंसाट्टिठन् १६९०** ॥ २१०८ टिठन्नर्धाच्च । २०१९ कार्षापणाद्वा प्रतिषेधश्च ॥

**१ । २८ अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् १६९३** ॥ २०२० संज्ञाप्रतिषेधानर्थक्यं च तन्निमित्तत्वाल्लोपस्य । २०२१ उक्तं संख्यात्वे प्रयोजनं तस्मादिहाध्यर्धग्रहणानर्थक्यम् ॥

**१ । २९ विभाषा कार्षापणसहस्राभ्याम् १६९४** ॥ २०२२ कार्षापणसहस्राभ्यां सुवर्णशतमानयोरुपसंख्यानम् ॥

**१ । ३०-३१ द्वित्रिपूर्वान्निष्कात् १६९५ । बिस्ताच्च १६९६** ॥ २०२३ द्वित्रिभ्यां द्वैयोग्यम् । २०२४ तत्र च बहुग्रहणम् ॥

**१ । ३३ खार्या ईकन् १६९८** ॥ २०२५ खार्या ईकन्केवलायाश्च । २०२६ काकिण्याश्चोपसंख्यानम् । २०२७ केवलायाश्च ॥

**१ । ३५ शाणाद्वा १७००** ॥ २०२८ शतशाणाभ्यां वा । २०२९ द्वित्रिपूर्वादण्च ॥

**१ । ३७ तेन क्रीतम् १७०२** ॥ २०३० तेन क्रीतमिति करणात् । २०३१ अकर्त्रेकान्तात् । २०३२ संख्यैकवचनाद्विगोश्चोपसंख्यानम् ॥

**१ । ३८ तस्य निमित्तं संयोगोत्पातौ १७०४** ॥ २०३३ तस्य निमित्तप्रकरणे वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम् । २०३४ संनिपाताच्च ॥

**१ । ३९ गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् १७०५** ॥ २०३५ यत्प्रकरणे ब्रह्मवर्चसाच्च ॥

**१ । ४७ तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते १७१३** ॥ २०३६ तदस्मिन्दीयतेऽस्मा इति च ॥

**१ । ४८ पूरणार्धाट्ठन् १७१४** ॥ २०३७ ठन्प्रकरणेऽनन्तादुपसंख्यानम् ॥

**१ । ५२ संभवत्यवहरतिपचति १७१८** ॥ २०३८ तत्पचतीति द्रोणादण्च ॥

**१ । ५७-५८ तदस्य परिमाणम् १७२३ ॥ संख्यायाः संज्ञासंघसूत्राध्ययनेषु १७२४** ॥ २०३९ संज्ञायां स्वार्थे । २०४० ततः परिमाणिनि । २०४१ जीवितपरिमाणे चोपसंख्यानम् । २०४२ जीवितपरिमाणे चेत्यनर्थकं वचनं कालादिति सिद्धत्वात् । २०४३ इह वचने हि लुक्प्रसङ्गः । २०४४ अन्येभ्योऽपि दृश्यते खारशताद्यर्थम् । २०४५ स्तोमे डविधिः पञ्चदशाद्यर्थः ॥

**१ । ५९ पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् १७२५** ॥ २०४६ विंशत्यादयो दशदर्थे चेत्समासवचनानुपपत्तिः । २०४७ परिमाणिनि चेत्पुनः स्वार्थे प्रत्ययविधानम् । २०४८ षष्ठीवचनविधिश्च । २०४९ अनारम्भो वा प्रातिपदिकविज्ञानाद्यथा सहस्रादिषु ॥

**१ । ६४-७६ छेदादिभ्यो नित्यम् १७२९ । पन्थो ण नित्यम् १७४०** ॥ २०५० छेदादिभ्यो विग्रहदर्शनान्नित्यग्रहणानर्थक्यम् । २०५१ विकारार्थमिति चेदकङ्गादिभिस्तुल्यम् ॥

**१। ७१ यज्ञर्त्विग्भ्यां घखञौ १७३५** ॥ ३०५२ यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम् ॥

**१ । ७२ पारायणतुरायणचान्द्रायणं वर्तयति १७३६** ॥ ३०५३ तद्वर्तयतीत्यनिर्देशस्तत्रादर्शनात् । ३०५४ इड्यज्योश्च दर्शनात् ॥

**१ । ७४ योजनं गच्छति १७३८** ॥ ३०५५ योजनं गच्छतीति क्रोशशतयोजनशतयोरुपसंख्यानम् । ३०५६ ततोऽभिगमनमर्हतीति च ॥

**१ । ७७ उत्तरपथेनाहृतं च १७४१** ॥ ३०५७ आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसंख्यानम् । ३०५८ अजपथशङ्कुपथाभ्यां च । ३०५९ मधुकमरिचयोरण्स्थलात् ॥

**१ । ८० तमधीष्टो भृतो भूतो भावी १७४४** ॥ ३०६० अधीष्टभृतयोर्द्वितीयानिर्देशोऽनर्थकस्तत्रादर्शनात् । ३०६१ सिद्धं तु चतुर्थीनिर्देशात् ॥

**१ । ८४ अवयसि ठंश्च १७४८** ॥ ३०६२ अवयसि ठंश्चेत्यनन्तरस्यानुकर्षः ॥

**१ । ९० षष्टिकाः षष्टिरात्रेण पच्यन्ते १७५६** ॥ ३०६३ षाष्टिके संज्ञाग्रहणम् ॥

**१ । ९४ तदस्य ब्रह्मचर्यम् १७५८** ॥ ३०६४ तदस्य ब्रह्मचर्यमिति महानाम्न्यादिभ्य उपसंख्यानम् । ३०६५ तच्चरतीति च । ३०६६ अवान्तरदीक्षाभ्यो डिनिः । ३०६७ अष्टाचत्वारिंशतो ड्वुंश्च । ३०६८ चातुर्मास्यानां यलोपश्च । ३०६९ चतुर्मासाण्ण्यो यज्ञे तत्रभवे । ३०७० संज्ञायामण् ॥

**१ ।९६ तत्र च दीयते भववत् १७६०** ॥ ३०७१ कार्यग्रहणमनर्थकं तत्रभवेन कृतत्वात् ॥

**१ । ९७ व्युष्टादिभ्योऽण् १७६१** ॥ ३०७२ अण्प्रकरणे अग्निपदादिभ्य उपसंख्यानम् ॥

**१ । १११ अनुप्रवचनादिभ्यश्छः १७७४** ॥ ३०७३ छप्रकरणे विशिपूरिपदिरुहिप्रकृतेरनात्सपूर्वपदादुपसंख्यानम् । ३०७४ स्वर्गादिभ्यो यत् । ३०७५ पुण्याहवाचनादिभ्यो लुक् ॥

**१ । ११३ ऐकागारिकट् चौरे १७७६** ॥ ३०७६ एकागारान्निपातानर्थक्यं ठञ्प्रकरणात् ॥

**१ । ११४ आकालिकडाद्यन्तवचने १७७७** ॥ ३०७७ आकालान्निपातनानर्थक्यं ठञ्प्रकरणात् । ३०७८ आकालाट्ठंश्च ॥

**१ । ११९ तस्य भावस्त्वतलौ १७८१** ॥ ३०७९ स्त्रीपुंसाभ्यां त्वतलोरुपसंख्यानम् । ३०८० वावचनं च । ३०८१ अपवादसमावेशाद्वा सिद्धम् । ३०८२ तस्य भाव इत्यभिप्रायादिष्वतिप्रसङ्गः । ३०८३ सिद्धं तु यस्य गुणस्य भावाद्द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ । ३०८४ यद्वा सर्वे भावाः स्वेन भावेन भवन्ति स तेषां भावस्तदभिधाने । ३०८५ त्वतल्भ्यां नञ्समासः पूर्वविप्रतिषिद्धं त्वतलोः स्वरसिद्ध्यर्थम् । ३१८६ वा छन्दसि । ३०८७ नञ्समासादन्यो भाववचनः स्वरोपपदवृद्ध्यर्थम् ॥

**१ । १२० आ च त्वात् १७८२** ॥ ३०८८ आ च त्वादिति चकारकरणमपवादसमावेशार्थम् ॥

**१ । १२१ न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटयुधकतरसलसेभ्यः १७८३** ॥ ३०८९ न नञ्पूर्वादित्युत्तरस्य प्रतिषेधः ॥

**१ । १२२ पृथ्वादिभ्य इमनिज्वा १७८४** ॥ ३०९० पृथ्वादिभ्यो वावचनमण्समावेशार्थम् ॥

**१ । १२४ गुणवचनब्राह्मणादिभ्यः कर्मणि च १७७८** ॥ ३०९१ ब्राह्मणादिषु चातुर्वर्ण्यादीनामुपसंख्यानम् । ३०९२ अर्हतो नुम्च ॥

**१ । १३० हायनान्तयुवादिभ्योऽण् १७९५** ॥ ३०९३ अणुप्रकरणे श्रोत्रियस्य घलोपश्च ॥

**१ । १३२ योपधाद्गुरूपोत्तमाद्वुञ् १७९७** ॥ ( ' ३०९४ सहायाद्वा ' इति काशिका ) ॥

**२ । ४ विभाषा तिलमाषोमाभङ्गाणुभ्यः १८०९** ॥ ३०९५ तिलादिभ्यः खञ्च । ३०९६ उमाभङ्ग्योरधान्यत्वात् ॥

**२ । ६ यथामुखसंमुखस्य दर्शनः खः १८०७** ॥ ३०९७ संमुखेति समस्यान्तलोपः ॥

**२ । १० परोवरपरंपरपुत्रपौत्रमनुभवति १८११** ॥ ३०९८ परोवरेति परस्योत्ववचनम् । ३०९९ परपरतराणां परंपरभावः ॥

**२ । १२ समांसमां विजायते १८१३** ॥ ३१०० समां समां विजायत इति यलोपवचनादलुग्विज्ञानम् । ३१०१ समां समां विजायत इति यलोपवचनादलुग्विज्ञानामिति चेदुत्तरपदस्य लुग्वचनम् । ३१०२ सिद्धं तु पूर्वपदस्य यलोपवचनात् । ३१०३ अनुत्पत्तावुत्तरपदस्य च वावचनम् ॥

**२ । १४ आगवीनः १८१५** ॥ ३१०४ गोराङ्पूर्वादातस्य गोः प्रतिदानात्कारिणि खः ॥

**२ । २३ हैयंगवीनं संज्ञायाम् १८२४** ॥ ३१०५ ह्योगोदोहस्य हियङ्ग्वादेशः संज्ञायां तस्य विकारे ॥

**२ । २५ पक्षात्तिः १८२६** ॥ ३१०६ मूल इति वक्तव्यम् ॥

**२ । २९ संप्रोदश्च कटच् १८३०** ॥ ३१०७ कटच्प्रकरणे अलाबूतिलोमाभ्यो रजस्युपसंख्यानम् । ३१०८ भङ्गायाश्च । ३१०९ गोष्ठादयः स्थानादिषु पशुनामादिभ्यः । ( ३११० 'संघाते कटच् । ३१११ गुणादिभ्यो ग्रामच् । ३११२ कमलादिभ्यः षण्डच् । ३११३ नरकारितरंगाणां स्कन्धच् । ३११४ पूर्वादिभ्यः काण्डच् ' इति काशिका) । ३११५ विस्तारे पटच् । ३११६ द्वित्वे गोयुगच् । ३११७ ('षट्त्वे षड्गवच्' इति काशिका) । ३११८ विकारे स्नेहने तैलच् । ३११९ भवने क्षेत्रे शाकटशाकिनौ । ३१२० उपमानाद्वा सिद्धम् । (वार्तिकस्थादिपदग्राह्याः प्रत्यया भाष्यकाशिकयोर्दर्शिताः ) ॥

**२ । ३३ इनच्पिटच्चिकचि च १८३४** ॥ ३१२१ इनच्पिटच्काश्चिकाचिचिकादेशाश्च ३१२२ क्लिन्नस्य चिल्पिलश्चास्य चक्षुषी । ३१२३ चुल् च वक्तव्यः ॥

**२ । ३७ प्रमाणे द्वयसज्दघ्नञ्मात्रचः १८३८** ॥ ३१२४ प्रमाणं प्रत्ययार्थो न । ३१२५ तद्वति । ३१२६ अस्येति वर्तनात् । ३१२७ प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम । ३१२८ प्रमाणे लः । ३१२९ द्विगोर्नित्यम् । ३१३० डट् स्तोमे । ३१३१ शच्शनोर्डिनिः । ३१३२ विंशतेश्च । ३१३३ प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये । ३१३४ वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम् ॥

**२ । ३९ यत्तदेतेभ्यः परिमाणे वतुप् १८४०** ॥ ३१३५ डावतावर्थवैशेष्यान्निर्देश पृथगुच्यते । ३१३६ मात्रायप्रतिघाताय । ३१३७ भावः सिद्धश्च डावतोः । ३१३८ वतुप्प्रकरणे युष्मदस्मद्भ्यां सादृश्य उपसंख्यानम् ॥

**२ । ४२ संख्याया अवयवे तयप् १८४३** ॥ ३१३९ अवयवविधानेऽवयविनि प्रत्ययः ॥

**२ । ४५ तदस्मिन्नधिकमिति दशान्ताड्डः १८४६** ॥ ३१४० अधिके समानजातौ ।

३१४१ इष्टं शतसहस्रयोः । ३१४२ यस्य संख्या तदाधिक्ये डः कर्तव्यो मतो मम । ३१४३ डविधाने परिमाणशब्दानामाधिक्यस्याधिकरणाभावादनिर्देशः । ३१४४ सिद्धं तु पञ्चमीनिर्देशात् ॥

२ । ४६ **शदन्तविंशतेश्च १८४७** ॥ ३१४५ शद्ग्रहणेऽन्तग्रहणं प्रत्ययग्रहणे यस्मात्स-तदादेरधिकार्थम् । ३१४६ संख्याग्रहणं च । ३१४७ विंशतेश्च ॥

२ । ४७ **संख्याया गुणस्य निमाने मयट् १८४८** ॥ ३१४८ निमाने गुणिनि । ३१४९ भूयसः । ३१५० एकोऽन्यतरः । ३१५१ समानानाम् । ३१५२ निमेये चापि दृश्यते ॥

२ । ४८ **तस्य पूरणे डट् १८४९** ॥ ३१५३ तस्य पूरण इत्यतिप्रसङ्गः । ३१५४ सिद्धं तु संख्यापूरण इति वचनात् । ३१५५ यस्य वा भावादन्यसंख्यात्वं तत्र ॥

२ । ४९ **नान्तादसंख्यादेर्मट् १८५०** ॥ ३१५६ मडादिषु यस्यादिस्तन्निर्देशः । ३१५७ प्रत्ययान्तरे हि स्वरे दोषः ॥

२ । ५१ **षट्कतिकतिपयचतुरां थुक् १८५१** ॥ ३१५८ चतुरश्छयतावाद्यक्षरलो-पश्च । ३१५९ थट्थुकोः पृथक्करणं पदान्तविधिप्रतिषेधार्थम् ॥

२ । ५२ **बहुपूगगणसंघस्य तिथुक् १८५२** ॥ ३१६० बहुकतिपयवतूनां लिङ्गवि-शिष्टादुत्पत्तिः । ३१६१ बहुकतिपयवतूनां लिङ्गविशिष्टादुत्पत्तिः सिद्धा । ३१६२ पुंवद्व-चनं च ॥

२ । ५९ **मतौ छः सूक्तसाम्नोः १८५९** ॥ ३१६३ छप्रकरणेऽनेकपदादपि । ३१६४ सिद्धं तु प्रातिपदिकविज्ञानात् । ३१६५ 'स्वं रूपं शब्दस्याशब्दसंज्ञा' इति वचनात् । ३१६६ आम्नायशब्दानामान्यभाव्यं स्वरवर्णानुपूर्वीदेशकालनियतत्वात् । ३१६७ पदैकदेश-सुब्लोपदर्शनाच्च ॥

२ । ६० **अध्यायानुवाकयोर्लुक् १८६०** ॥ ३१६८ अध्यायानुवाकाभ्यां वा लुक् ॥

२ । ६५ **धनहिरण्यात्कामे १८६५** ॥ ३१६९ धनहिरण्यात्कामाभिधाने । ३१७० षष्ठ्यर्थे ह्यनिष्टप्रसङ्गः ॥

२ । ७७ **तावतिथं ग्रहणमिति लुग्वा १८७७** ॥ ३१७१ तावतिथं ग्रहणमिति लुग्वावचनानर्थक्यं विभाषाप्रकरणात् । ३१७२ तावतिथेन गृह्णातीति लुक्च ॥

२ । ७९ **शृङ्खलमस्य बन्धनं करभे १८७९** ॥ ३१७३ शृङ्खलमस्य बन्धनं करभ इत्यनिर्देशः । ३१७४ सिद्धं तु तद्वन्निर्देशाल्लुक्च ॥

२ । ८२ **तदस्मिन्नन्नं प्रायेण संज्ञायाम् १८८२** ॥ ३१७५ प्राये संज्ञायां वटकेभ्य इनिः ॥

२ । ८४ **श्रोत्रियंश्छन्दोऽधीते १८८४** ॥ ३१७६ श्रोत्रियंश्छन्दोऽधीत इति वाक्यार्थे पदवचनम् । ३१७७ छन्दसो वा श्रोत्रभावस्तदधीत इति घंश्च ॥

२ । ८५ **श्राद्धमनेन भुक्तमिनिठनौ १८८५** ॥ ३१७८ इनिठनोः समानकालग्रहणम् ॥

२ । ९२ **क्षेत्रियच्परक्षेत्रे चिकित्स्यः १८९२** ॥ ३१७९ क्षेत्रियः श्रोत्रियवत् । ३१८० परक्षेत्राद्वा तत्र चिकित्स्य इति परलोपो घंश्च ॥

२ । ९४ **तदस्यास्त्यस्मिन्निति मतुप् १८९४** ॥ ३१८१ मतुप्प्रभृतयः सन्मात्रे चेदति

प्रसङ्गः । ३१८२ तस्माद्भूमादिग्रहणम् । ३१८३ भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥ ३१८४ सन्मात्रे चर्षिदर्शनात् । ३१८५ गुणवचनेभ्यो मतुपो लुक् । ३१८६ अव्यतिरेकात्सिद्धमिति चेद्दृष्टो व्यतिरेकः । ३१८७ तथा च लिङ्गवचनसिद्धिः ॥

**२ । ९५ रसादिभ्यश्च १८९९** ॥ ३१८८ रसादिभ्यः पुनर्वचनमन्यानिवृत्त्यर्थम् ॥

**२ । ९६ प्राणिस्थादातो लजन्यतरस्याम् १९०३** ॥ ३१८९ प्राण्यङ्गादिति वक्तव्यम् ॥

**२ । ९७ सिध्मादिभ्यश्च १९०४** ॥ ३१९० लजन्यतरस्यामिति समुच्चयः । ३१९१ पिच्छादिभ्यस्तुन्दादीनां नानायोगकरणं ज्ञापकमसमावेशस्य । ३१९२ वस्य पुनर्वचनं सर्वविभाषार्थम् ॥

**२ । १०० लोमादिपामादिपिच्छादिभ्यः शनेलचः १९०७** ॥ ३१९३ नप्रकरणे दद्रुा ह्रस्वत्वं च । ३१९४ विष्वगित्युत्तरपदलोपश्चाकृतसंधेः ॥

**२ । १०१ प्रज्ञाश्रद्धार्चाभ्यो णः १९०८** ॥ ३१९५ वृत्तेश्च ॥

**२ । १०२–१०३ तपःसहस्राभ्यां विनीनी १९०९ । अण् च १९१०** ॥ ३१९६ तपसो विन्वचनमण्विधानात् । ३१९७ अण्प्रकरणे ज्योत्स्नादिभ्य उपसंख्यानम् ॥

**२ । १०७ ऊषशुषिमुष्कमधो रः १९१४** ॥ ३१९८ रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् ॥ ('३१९९ नगपांसुपाण्डुभ्यश्च' इति काशिका) । ('३२०० कच्छ्वा ह्रस्वत्वं च' इति काशिका) ॥

**२ । १०९ केशाद्वोऽन्यतरस्याम् १९१६** ॥ ३२०१ वप्रकरणे मणिहिरण्याभ्यामुपसंख्यानम् । ३२०२ छन्दसीवनिपौ च । ३२०३ मेधारथाभ्यामिरन्निरचौ ॥ ३२०४ वप्रकरणे अन्येभ्योऽपि दृश्यत इति वक्तव्यम् ॥

**२ । ११२ रजःकृष्यासुतिपरिषदो वलच् १९१९** ॥ ३२०५ वलच्प्रकरणे अन्येभ्योऽपि दृश्यते ॥

**२ । ११५ अत इनिठनौ १९२२** ॥ ३२०६ इनिठनोरेकाक्षरात्प्रतिषेधः । ३२०७ एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ ॥

**२ । ११६ व्रीह्यादिभ्यश्च १९२३** ॥ ३२०८ शिखादिभ्य इनिर्वाच्य इकन्यवखदादिषु । ३२०९ शिखायवखदादिभ्यो नियमस्यावचनं निवर्तकत्वात् ॥

**२ । १२० रूपादाहतप्रशंसयोर्यप् १९२७** ॥ ३२१० यप्प्रकरणे अन्येभ्योऽपि दृश्यते ॥

**२ । १२२ बहुलं छन्दसि ३४९८** ॥ ३२११ छन्दोविन्प्रकरणे अष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घश्च । ३२१२ मर्मणश्चेति वक्तव्यम् । ३२१३ सर्वत्रामयस्य । ३२१४ शृङ्गवृन्दाभ्यामारकन् । ३२१५ फलबर्हाभ्यामिनच् । ३२१६ हृदयाच्चालुरन्यतरस्याम् । ३२१७ शीतोष्णतृप्रेभ्यस्तन्न सहते । ३२१८ हिमाच्चेलुः । ३२१९ बलाच्चोलः । ३२२० वातात्समूहे च । ३२२१ पर्वमरुद्भ्यां तप् । ३२२२ ददातिवृत्तं वा ॥

**२ । १२५ आलजाटचौ बहुभाषिणि १९३१** ॥ ३२२३ कुत्सित इति वक्तव्यम् ॥

**२ । १२९ वातातीसाराभ्यां कुक्च १९३५** ॥ ३२२४ पिशाचाच्चेति वक्तव्यम् ॥

**२ । १३५ पुष्करादिभ्यो देशे १९४१** ॥ ३२२५ इनिप्रकरणे बलाद्बाहूरुपूर्वपदादुपसंख्यानम् । ३२२६ सर्वादेश्च । ३२२७ अर्थाच्चासंनिहिते । ३२२८ तदन्ताच्च ॥

**३ । १ प्राग्दिशो विभक्तिः १९४७** ॥ ३२२९ विभक्तित्वे प्रयोजनमित्प्रतिषेधः । ३२३० इदमो विभक्तिस्वरश्च । ३२३१ त्यदादिविधयश्च ॥

**३ । २ किंसर्वनामबहुभ्योऽद्व्यादिभ्यः १९४८** ॥ ३२३२ बहुग्रहणे संख्याग्रहणम् । ३२३३ द्व्यादिप्रतिषेधात्किम उपसंख्यानम् ॥

**३ । ५ एतदोऽन् १९५१** ॥ ३२३४ एतद इति योगविभागः । ३२३५ एतदश्च थम उपसंख्यानम् ॥

**३ । ७-१० पञ्चम्यास्तसिल् १९५३ । सप्तम्यास्त्रल् १९५७** ॥ ३२३६ तसिलादयो विभक्त्यादेशाश्चेत्सुब्लुक्स्वरगुणदीर्घैत्त्वौत्त्वस्मायादिविधिप्रतिषेधः । ३२३७ पञ्चमीनिर्देशात्सिद्धम् । ३२३८ अनादेशे स्वार्थविज्ञानात्समानशब्दाप्रतिषेधः ॥

**३ । ८ तसेश्च १९५५** ॥ ३२३९ तसेस्तसिल्वचनं स्वरार्थम् ॥

**३ । ९ पर्यभिभ्यां च १९५६** ॥ ३२४० पर्यभिभ्यां च सर्वोभयार्थे ॥

**३ । १४ इतराभ्योऽपि दृश्यन्ते १९६३** ॥ ३२४१ भवदादियोग इति वक्तव्यम् ॥

**३ । १८ दानीं च १९६७** ॥ ३२४२ दानींमिति निपातनात्स्वरसिद्धिः ॥

**३ । १९ तदो दा च १९६८** ॥ ३२४३ तदो दावचनमनर्थकं विहितत्वात् ॥

**३ । २० तयोर्दार्हिलौ च च्छन्दसि ३४२९** ॥ ३२४४ तयोरिति प्रातिपदिकनिर्देशः ॥

**३ । २२ सद्यःपरुत्परार्यैषमः परेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः १९७०** ॥ ३२४५ समानस्य सभावो द्यश्चाहनि । ३२४६ पूर्वपूर्वतरयोः परभाव उदारी च संवत्सरे । ३२४७ इदमः समसण् । ३२४८ परस्मादेद्यव्यहनि । ३२४९ इदमोऽश्भावो द्यश्च । ३२५० पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युसुच् । ३२५१ द्युश्चोभयात् ॥

**३ । ३१ उपर्युपरिष्टात् १९८१** ॥ ३२५२ ऊर्ध्वस्योपभावो रिल्रिष्टातिलौ च ॥

**३ । ३२ पश्चात् १९८२** ॥ ३२५३ अपरस्य पश्चभाव आतिश्च प्रत्ययः । ३२५४ दिक्पूर्वपदस्य च । ३२५५ अर्धोत्तरपदस्य च समासे । ३२५६ अर्धे च ॥

**३ । ३५ एनबन्यतरस्यामदूरेऽपञ्चम्याः १९८४** ॥ ३२५७ अपञ्चम्या इति प्रागसः ॥

**३ । ४२ संख्याया विधार्थे धा १९८८** ॥ ३२५८ धाविधानं धात्वर्थपृथग्भावे ॥

**३ । ४४ एकाद्धो ध्यमुञन्यतरस्याम् १९९०** ॥ ३२५९ सहभावे ध्यमुञ् ॥

**३ । ४५ द्वित्र्योश्च धमुञ् १९९१** ॥ ३२६० धमुञन्तात्स्वार्थे डविधानम् ॥

**३ । ४७ याप्ये पाशप् १९९३** ॥ ३२६१ पाशपि कुत्सितग्रहणम् ॥

**३ । ५२ एकादाकिनिच्चासहाये १९९८** ॥ ३२६२ एकादाकिनिचि द्विबह्वर्थे प्रत्ययविधानम् । ३२६३ सिद्धं तु संख्यादेशवचनात् । ३२६४ असहायस्य वा ॥

**३ । ५५ अतिशायने तमबिष्ठनौ २००१** ॥ ३२६५ शुक्लतरस्य शुक्लभावात्प्रकृतेः प्रत्ययविज्ञानम् । ३२६६ तदन्ताच्च स्वार्थे छन्दसि दर्शनं श्रेष्ठतमायेति ॥

**३ । ५७ द्विवचनविभज्योपपदे तरबीयसुनौ २००५** ॥ ३२६७ तरबीयसुनोरेकद्रव्यस्योत्कर्षापकर्षयोरुपसंख्यानम् । ३२६८ सिद्धं तु गुणप्रधानत्वात् ॥

**३ । ६६ प्रशंसायां रूपप् २०२१** ॥ ३२६९ प्रकृतेर्लिङ्गवचनाभावात्तिङ्प्रकृतेरम्भाववचनम् । ३२७० सिद्धं तु क्रियाप्रधानत्वात् । ३२७१ वृषलादिभ्य उपसंख्यानम् । ३२७२ सिद्धं तु प्रकृत्यर्थवैस्पष्ट्यवचनात् ॥

**३ । ६७ ईषदसमाप्तौ कल्पब्देश्यदेशीयरः २०२२** ॥ ३२७३ ईषदसमाप्तौ क्रियाप्रधानत्वाल्लिङ्गवचनानुपपत्तिः । ३२७४ प्रकृत्यर्थविशेषणत्वात्सिद्धम् । ३२७५ प्रकृत्यर्थे चेल्लिङ्गवचनानुपपत्तिः । ३२७६ सिद्धं तु तत्संबन्ध उत्तरपदार्थे प्रत्ययवचनात् । ३२७७ क्तान्तात्प्रत्ययविधानानुपपत्तिः क्तस्य भूतकाललक्षणत्वात्कल्पबादीनां चासमाप्तिवचनात् । ३२७८ सिद्धं त्वाशंसायां भूतवद्वचनात् ॥

**३ । ६८ विभाषा सुपो बहुच्पुरस्तात्तु २०२३** ॥ ३२७९ बहुचि सुब्ग्रहणात्पूर्वेण तिङो विधानम् । ३२८० स्वरः प्रातिपदिकत्वात् । ३२८१ तुग्रहणं नित्यपूर्वार्थम् । ३२८२ तमादिभ्यकल्पादयो विप्रतिषेधेन । ३२८३ तमादिरीषत्प्रधानात् ॥

**३ । ७१-७२ अव्ययसर्वनाम्नामकच्प्राक्टेः २०२६ । कस्य च दः २०२७** ॥ ३२८४ अनोकारसकारमकारादाविति वक्तव्यम् । ३२८५ अकच्प्रकरणे तूष्णीमः काम् । ३२८६ शीले को मलोपश्च । ३२८७ अम्बहुजकक्षु नानादेशत्वादुत्सर्गप्रतिषेधः । ३२८८ कविधेस्तमादयः पूर्वविप्रतिषिद्धम् । ३२८९ कदाचिच्छिभकतरादयः । ३२९० एकदेशिप्रधानश्च समासः । ३२९१ उत्तरपदार्थप्रधानश्च संज्ञायां कन्विध्यर्थम् । ३२९२ कदाचिद्वन्द्वः ॥

**३ । ७४ कुत्सिते २०२९** ॥ ३२९३ कुत्सितादीनामर्थे चेल्लिङ्गवचनानुपपत्तिः । ३२९४ कुत्सितादिसमानाधिकरणादिति चेदतिप्रसङ्गो यथा टाबादिषु । ३२९५ सिद्धं तु येन कुत्सितादिवचनं तद्युक्तात्स्वार्थे प्रत्ययविधानात् ॥

**३ । ८३ ठाजादावूर्ध्वं द्वितीयादचः २०३५** ॥ ३२९६ चतुर्थात् । ३२९७ अनजादौ च । ३२९८ लोपः पूर्वपदस्य च । ३२९९ अप्रत्यये तथैवेष्टः । ३३०० उवर्णाल्ल इलस्य च । ३३०१ ठग्रहणमुको द्वितीयत्वे कविधानार्थम् । ३३०२ अजादिलक्षणे हि माथितिकादिवत्प्रसङ्गः । ३३०३ द्वितीयादचो लोपे संध्यक्षरद्वितीयत्वे तदादेर्लोपवचनम् ॥

**३ । ८४ शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् २०३८** ॥ ३३०४ वरुणादीनां च तृतीयात्स चाकृतसंधीनाम् । ३३०५ वाचिकादिषु पदवृत्तप्रतिषेधः । ३३०६ सिद्धमेकाक्षरपूर्वपदानामुत्तरपदलोपवचनात् । ३६०७ षषष्ठाजादिवचनात्सिद्धम् ॥

**३ । ८८ कुटीशमीशुण्डाभ्यो रः २०४३** ॥ ३३०८ कुटीशमीशुण्डाभ्यः प्रत्ययसंनियोगेन पुंवद्वचनम् ॥

**३ । ९१ वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे २०४६** ॥ ३३०९ वत्सादिभ्यस्तनुत्वे कार्श्यप्रतिषेधः ॥

**३ । ९२-९३ किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् २०४७ । वा बहूनां जातिपरिप्रश्ने डतमच् २०४८** ॥ ३३१० किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाध्यानर्थक्यम् ॥

**३ । ९४ एकाच्च प्राचाम् २०४९** ॥ ३३११ प्राग्वचनानर्थक्यं च विभाषाप्रकरणात् ॥

**३ । ९८ लुब्मनुष्ये २०५३** ॥ ३३१२ लिङ्गसिद्ध्यर्थं लुब्मनुष्ये ॥

**३ । ११८ अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् २०७१** ॥ ३३१३ अणो गोत्राद्गोत्रवचनम् ॥

**४ । १ पादशतस्य संख्यादेर्वीप्सायां वुन्लोपश्च २०७३** ॥ ३३१४ पादशतग्रहणमनर्थकमन्यत्रापि दर्शनात् ॥

**४ । ३ स्थूलादिभ्यः प्रकारवचने कन् २०७५** ॥ ३३१५ कन्प्रकरणे चञ्चद्बृहतोरुपसंख्यानम् ॥

**४ । ४ अनत्यन्तगतौ क्तात् २०७६** ॥ ३३१६ अनत्यन्तगतौ क्तान्तात्तमादयः पूर्वविप्रातिषिद्धम् । ३३१७ तदन्ताच्च स्वार्थे कन्वचनम् ॥

**४ । ५ न सामिवचने २०७७** ॥ ३३१८ सामिवचने प्रतिषेधानर्थक्यं प्रकृत्यभिहितत्वात् ॥

**४ । ७ अषडक्षाशितंग्वलंकर्मालंपुरुषाध्युत्तरपदात्खः २०७९** ॥ ३३१९ अध्युत्तरपदात्प्रत्ययविधानानुपपत्तिर्विग्रहाभावात् । ३३२० तस्मात्तत्रेदमिति सधीनर् ॥

**४ । २७ देवात्तल् २०९५** ॥ ३३२१ तलि स्त्रीलिङ्गवचनम् ॥

**४ । ३० लोहितान्मणौ २०९८** ॥ ३३२२ लोहिताल्लिङ्गबाधनं वा । ३३२३ अक्षरसमूहे छन्दस्युपसंख्यानम् । ३३२४ छन्दसि बहुभिर्वसव्यैरुपसंख्यानम् । ३३२५ अग्निरीशे वसव्यस्येति । ३३२६ अपओकक्कविक्षेमवर्चोनिष्केनलोकथजनपूर्वनवयविष्ठेभ्यो यत् । ३३२७ नवस्य नू त्नतनखाश्च । ३३२८ नश्च पुराणे प्रात् ॥

**४ । ३६ तद्युक्तात्कर्मणोऽण् २१०४** ॥ ३३२९ अण्प्रकरणे कुलालवरुडानिषादचण्डालमित्रेभ्यश्छन्दसि । ३३३० भागरूपनामभ्यो धेयः । ३३३१ मित्राच्छन्दसि । ३३३२ अणामित्राच्च । ३३३३ सांनाय्यानुजावरानुषूकचातुष्प्राश्यराक्षोघ्नवैयातवैकृतवादिवस्कृताग्रायणाग्रहायणसांतपनानि । ३३३४ आग्नीध्रसाधारणादञ् । ३३३५ अवयसमरुद्भ्यां छन्दसि । ३३३६ नवसूरमर्तयविष्ठेभ्यो यत् । ३३३७ क्षेमाद्यः ॥

**४ । ४२ बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् २१०९** ॥ ३३३८ बह्वल्पार्थान्मङ्गलामङ्गलवचनम् ॥

**४ । ४४ प्रतियोगे पञ्चम्यास्तसिः २१११** ॥ ३३३९ तसिप्रकरण आद्यादिभ्य उपसंख्यानम् ॥

**४ । ५० अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरि च्विः २११७** ॥ ३३४० च्विविधावभूततद्भावग्रहणम् । ३३४१ प्रकृतिविवक्षाग्रहणं च । ३३४२ समीपादिभ्य उपसंख्यानम् ॥

**४ । ५७ अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच् २१२८** ॥ ३३४३ डाचि चित्करणं विशेषणार्थम् ॥

**४ । ६७ मद्रात्परिवापणे २१३८** ॥ ३३४४ भद्राच्चेति वक्तव्यम् ॥

**४ । ६८ समासान्ताः ६७६** ॥ ३३४५ प्रयोजनमव्ययीभावद्विगुद्वन्द्वतत्पुरुषबहुव्रीहिसंज्ञाः ।

**४ । ६९ न पूजनात् ९५४** ॥ ३३४६ पूजायां स्वतिग्रहणम् । ३३४७ प्राग्बहुव्रीहिग्रहणं च ॥

**४ । ७३ बहुव्रीहौ संख्येये डजबहुगणात् ८५१** ॥ ३३४८ डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानं निस्त्रिंशाद्यर्थम् । ३३४९ अन्यत्राधिकलोपात् । ३३५० अव्ययादेरिति वक्तव्यम् ॥

**४। ७७ अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदार-गवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुष-र्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ९४९** ॥ ३३५१ चतुरोऽच्प्रकरणे त्र्युपाभ्या-मुपसंख्यानम् ॥

**४। ७८ ब्रह्महस्तिभ्यां वर्चसः ९४६** ॥ ३३५२ पल्यराजभ्यां चेति वक्तव्यम् ॥

**४। ८७ अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ७८७**॥ ३३५३ अहर्ग्रहणं द्वन्द्वार्थम्। ३३५४ तत्पुरुषाभावात् ॥

**४। ८८ अह्नोऽह्न एतेभ्यः ७९०** ॥ ३३५५ अह्नोऽह्नवचनानर्थक्यं चाह्नष्टखोर्नियम-वचनात् ॥

**४। १०३ अनसन्ताच्छन्दसि ३५०९** ॥ ३३५६ अनसन्तान्नपुंसकाच्छन्दसि वेति-वक्तव्यम् ॥

**४। ११३ बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ८५२** ॥ ३३५७ षाचि प्रत्ययान्तरकर-णमन्तोदात्तार्थम् ॥

**४। ११५ द्वित्रिभ्यां ष मूर्ध्नः ८५४** ॥ ३३५८ मूर्ध्नः षवचनम् ॥

**४। ११६ अप्पूरणीप्रमाण्योः ८३२** ॥ ३३५९ अपि प्रधानपूरणीग्रहणम्। ३३६० नेतु-र्नक्षत्र उपसंख्यानम्। ३३६१ छन्दसि च। ३३६२ मासाद्भृतिप्रत्ययपूर्वपदाट्ठज्विधिः ॥

**४। ११८ अञ्नासिकायाः संज्ञायां नसं चास्थूलात् ८५६** ॥ ३३६३ खरखुराभ्यां च-नस्वक्तव्यः। ३३६४ शितिना अर्चना अहिना इति नैगमाः ॥

**४। ११९ उपसर्गाच्च ८५८** ॥ ३३६५ वेर्ग्रो वक्तव्यः। ३३६६ ख्यश्च ॥

**४। १३१ ऊधसोऽनङ् ४८३** ॥ ३३६७ ऊधसोऽनङि स्त्रीग्रहणम् ॥

**४। १३५ गन्धस्येदुत्पूतिसुसुरभिभ्यः ८७४** ॥ ३३६८ गन्धस्येत्त्वे तदेकान्तग्रहणम् ॥

**४। १५६ ईयसश्च ८९४** ॥ ३३६९ ईयस उपसर्जनदीर्घत्वं च। ३३७० पुंवद्वचना-त्सिद्धम् ॥

इति पञ्चमोऽध्यायः।

---

## षष्ठोऽध्यायः।

**१। १ एकाचो द्वे प्रथमस्य २१७५** ॥ ३३७१ एकाचो द्वे प्रथमस्येति बहुव्रीहिनिर्दे-शः। ३३७२ एकवर्णेषु व्यपदेशिवद्वचनात्। ३३७३ प्रथमत्वे च। ३३७४ योगविभागो वा। ३३७५ एकाज्मात्रस्य द्विर्वचनार्थः। ३३७६ एकाचोऽवयवैकाच्त्वादवयवानां द्विर्वचनप्र सङ्गः। ३३७७ तत्र जुस्भाववचनम्। ३३७८ स्वरश्च। ३३७९ अङ्गावश्च। ३३८० नुम्प्रति षेधश्च। ३३८१ शास्त्रहानिश्च। ३३८२ सिद्धं तु तत्समुदायैकाच्त्वाच्छास्त्राहानेः। ३३८३ तत्र बहुव्रीहिनिर्देशेऽनच्कस्य द्विर्वचनमन्यपदार्थत्वात्। ३३८४ सिद्धं तु तद्गुणसंविज्ञाना-त्पाणिनेर्यथा लोके। ३३८५ स्थाने द्विर्वचने णिलोपवचनं समुदायादेशत्वात्। ३३८६ यच्च सन्यङन्तस्य द्विर्वचने। ३३८७ द्विष्प्रयोग इति चेण्णकारषकारादेशादेरेत्ववचनं लिटि। ३३८८ इड्वचनं च यङ्लोपे। ३३८९ इड्दीर्घप्रतिषेधश्च। ३३९० पदान्तविधिप्रतिषेधश्च ॥

11

**१। २ अजादेर्द्वितीयस्य २१७६॥** ३३९१ द्वितीयस्येत्यवचनमजादेरिति कर्मधारयात्पञ्चमी । ३३९२ द्वितीयद्विर्वचने प्रथमनिवृत्तिः प्राप्तत्वात् । ३३९३ न वा प्रथमविज्ञाने हि द्वितीयाप्राप्तिरद्वितीयत्वात् । ३३९४ यथा वादिविकारेऽलोन्त्यविकाराभावः । ३३९५ तत्र पूर्वस्याचो निवृत्तौ व्यञ्जनानिवृत्तिरशासनात्पूर्वस्य । ३३९६ न्द्रादिप्रतिषेधाच्च । ३३९७ तत्र द्वितीयाभावे प्रथमाद्विर्वचनं प्रतिषिद्धत्वात् । ३३९८ सति तस्मिन्प्रतिषेधः । ३३९९ सति तस्मिन्प्रतिषेध इति चेद्धलादिशेषे दोषः । ३४०० लोकवद्धलादिशेषे । ३४०१ क्वचिदन्यत्र लोप इति चेद्द्विर्वचनम् ॥

**१ । ३ न न्द्राः संयोगादयः २४४६ ॥** ३४०२ न्द्रादेर्द्विर्वचनप्रसङ्गस्तत्र न्द्राणां प्रतिषेधः ३४०३ ईर्ष्यतेस्तृतीयस्य । ३४०४ कण्ड्वादीनां च । ३४०५ वा नामधातूनाम् । ३४०६ यथेष्टं वा नामधातूनाम् ॥

**१ । ५ उभे अभ्यस्तम् ४२६ ॥** ३४०७ अभ्यस्तसंज्ञायां सहवचनम् । ३४०८ आद्युदात्तत्वे पृथगप्रसङ्गार्थम् ॥

**१ । ६ जक्षित्यादयः षट् ४२८ ॥** ३४०९ जक्षित्यादिषु सप्तग्रहणं वेवीत्यर्थम् । ३४१० अपरिगणनं वागणान्तत्वात् ॥

**१ । ७ तुजादीनां दीर्घोऽभ्यासस्य ३५०९ ॥** ३४११ तुजादिषु छन्दःप्रत्ययग्रहणम् । ३४१२ अनारम्भो वापरिगणितत्वात् । ३४१३ अन्येषां च दर्शनात् । ३४१४ अनेकान्तत्वाच्च ॥

**१ । ८ लिटि धातोरनभ्यासस्य २१७७ ॥** ३४१५ लिटि द्विर्वचने जागर्तेर्वावचनम् । ३४१६ अभ्यासप्रतिषेधानर्थक्यं च छन्दसि वावचनात् । ३४१७ प्रयोजनमादित्यान्याचिषामहे ॥

**१ । ९ सन्यङोः २३९५ ॥** ३४१८ सन्यङोः परत इति चेदिट्टो द्विर्वचनं परादित्वात् ॥ ३४१९ हन्तेश्चिटः । ३४२० एकाच उपदेशेऽनुदात्तादित्युपदेशवचनमनुदात्तविशेषणं चेत्सन इट्प्रतिषेधः । ३४२१ सन्यङन्तस्येति चेदशेः सन्यनिटः । ३४२२ दीर्घकुत्वप्रसारणषत्वमाधिकस्य द्विर्वचनात् । ३४२३ आवृद्धग्रोश्चाभ्यस्तविधिप्रतिषेधः । ३४२४ सङाश्रये च समुदायस्य समुदायादेशत्वाज्झलाश्रये चाव्यपदेश आमिश्रत्वात् ॥

**१ । १२ दाश्वान्साह्वान्मीढ्वांश्च ३६२९ ॥** ३४२५ दाशेर्वसौ द्वित्वेट्प्रतिषेधौ । ३४२६ सहेर्दीर्घत्वं च । ३४२७ मिहेर्ढत्वं च । ३४२८ मद्यर्थ इति चेन्मिहेस्तदर्थत्वात्सिद्धम् । ३४२९ द्विर्वचनप्रकरणे कृञादीनां के । ३४३० चरिचलिपतिपदिवदीनामच्याक्चाभ्यासस्य । ३४३१ हन्तेर्घनः । ३४३२ पाटेर्णिलुक्च दीर्घश्चाभ्यासस्योक्च । ३४३३ द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्त्वेभ्यः । ३४३४ द्विर्वचनात्प्रसारणात्त्वधात्वादिविकाररीत्वेत्त्वेत्त्वेत्त्वोत्वगुणवृद्धिविधयः ॥

**१ । १३ ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे १००३ ॥** ३४३५ ष्यङः संप्रसारणे पुत्रपत्योस्तदादावतिप्रसङ्गः । ३४३६ वर्णग्रहण इति चेत्तदन्तप्रतिषेधः । ३४३७ सिद्धं तूत्तरपदवचनात् । ३४३८ यथागृहीतस्यादेशवचनादप्रत्ययस्थे सिद्धम् । ३४३९ अनन्त्यविकारेऽन्त्यसदेशस्य वा । ३४४० प्रयोजनं न संप्रसारणे संप्रसारणम् । ३४४१ सान्तम हतोर्दीर्घत्वे । ३४४२ अन्कारान्तस्यालोपे । ३४४३ मृजेर्वृद्धिविधौ । ३४४४ वसोः संप्रसारणे

च । ३४४५ युवादीनां च । ३४४६ वोरुपधाग्रहणं च । ३४४७ आदित्यदादिविधिसंयोगादिलोपकुत्वढत्वभष्भावषत्वणत्वेष्वतिप्रसङ्गः । ३४४८ उदात्तनिर्देशात्सिद्धम् ॥

१ । १४ **बन्धुनि बहुव्रीहौ १००९** ॥ ३४४९ मातज्मातृकमातृषु ष्यङ् प्रसार्यो विभाषया ॥

१ । १६ **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च २४१२** ॥ ३४५० वयिग्रहणं वेञः प्रतिषेधात् । ३४५१ न वा यकारप्रतिषेधो ज्ञापकोऽप्रतिषेधस्य । ३४५२ पित्यभ्यासार्थमिति चेन्नाविशिष्टत्वात् ॥

१ । १७ **लिट्यभ्यासस्योभयेषाम् २४०८** ॥ ३४५३ अभ्याससंप्रसारणं हलादिशेषाद्विप्रतिषेधेन । ३४५४ न वा संप्रसारणाश्रयबलीयस्त्वादन्यत्रापि । ३४५५ प्रयोजनं रमाल्लोपेयङ्यणः। ३४५६ व्यचेः कुटादित्वमनस्यञ्णिति संप्रसारणार्थम् ॥

१ । २० **न वशः २६४६** ॥ ३४५७ वशेर्यङि प्रतिषेधः ॥

१ । २७ **शृतं पाके ३०६७** ॥ ३४५८ श्राश्रप्योः शृभावः । ३४५९ क्षीरहविषोरिति वाच्यम् । ३४६० श्रपेः शृतमन्यत्र हेतोः ॥

१ । २८ **प्यायः पी ३०७२** ॥ ३४६१ आङ्पूर्वादन्धूधसोः ॥

१ । ३० **विभाषा श्वेः २४२०** ॥ ३४६२ श्वेर्लिटयभ्यासलक्षणप्रतिषेधः ॥

१ । ३२ **ह्वः संप्रसारणम् २५८६** ॥ ३४६३ ह्वः संप्रसारणे योगविभागः । ३४६४ णौ च संश्चङ्विषयार्थः। ३४६५ अभ्यस्तनिमित्तेऽनभ्यस्तप्रसारणार्थम्।३४६६ अभ्यस्तप्रसारणे ह्यभ्याससंप्रसारणाप्राप्तिः । ३४६७ समानाङ्गे प्रसारणप्रतिषेधात्प्रतिषेधः।३४६८कृदन्तप्रतिषेधार्थं च॥

१ । ३७ **न संप्रसारणे संप्रसारणम् ३६३** ॥ ३४६९ समानाङ्गग्रहणं च । ३४७० तत्रोपोषुषि दोषः । ३४७१ न वा यस्याङ्गस्य प्रसारणप्राप्तिस्तस्मिन्प्राप्तिप्रतिषेधात् । ३४७२ ऋचि त्रेरुत्तरपदादिलोपश्छन्दसि । ३४७३ रयेर्मतौ बहुलम् । ३४७४ कक्ष्यायाः संज्ञायाम् ॥

१ । ४५ **आदेच उपदेशेऽशिति २३७०** ॥ ३४७५ आत्व एश्युपसंख्यानम् । ३४७६ अशित्येकादेशे प्रतिषेध आर्दवत्त्वात् । ३४७७ प्रत्ययविधिः । ३४७८ अभ्यासरूपं च । ३४७९ अवयवानां प्रतिषेधश्च । ३४८० शिति प्रतिषेधे श्लुलुकोरुपसंख्यानं ररीध्वं वाध्वं शिशीते । ३४८१ प्रातिपदिकप्रतिषेधः । ३४८२ धात्वधिकारात्प्रातिपदिकस्याप्राप्तिः ॥

१ । ४८ **क्रीङ्जीनां णौ २६००** ॥ ३४८३ आत्वे णौ लीयतेरुपसंख्यानं प्रलम्भनशालीनीकरणयोः ॥

१ । ४९ **सिध्यतेरपारलौकिके २६०२** ॥ ३४८४ सिध्यतेरज्ञानार्थस्य । ३४८५ इतरथा ह्यनिष्टप्रसङ्गः ॥

१ । ५० **मीनातिमिनोतिदीङां ल्यपि च २५०८** ॥ ३४८६ मीनात्यादीनामात्त्व उपदेशवचनं प्रत्ययविध्यर्थम् । ३४८७ निमिमीलियां खलचोः प्रतिषेधः ॥

१ । ५८ **सृजिदृशोर्झल्यमकिति २४०५** ॥ ३४८८ अमि सङ्ग्रहणम् । ३४८९ क्विप्प्रतिषेधार्थम् ॥

१ । ६० **शीर्षंश्छन्दसि ३५१४** ॥ ३४९० शीर्षंश्छन्दसि प्रकृत्यन्तरम् । ३४९१ आदेशप्रतिषेधार्थम् ॥

**१ । ६१ ये च तद्धिते १६६७** ॥ ३४९२ ये च तद्धिते शिरस आदेशवचनम् । ३४९३ वा केशेषु । ३४९४ अचि शीर्षः । ३४९५ छन्दसि च ॥

**१ । ६३ पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु २२८** ॥ ३४९६ पदादिषु मांस्पृत्स्नूनामुपसंख्यानम् । ३४९७ नस्नासिकाया यत्तस्क्षुद्रेषु । ३४९८ अवर्णनगरयोरिति वक्तव्यम् ॥

**१ । ६४ धात्वादेः षः सः २२६४** ॥ ३४९९ सादेशे सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधः ॥

**१ । ६६ लोपो व्योर्वलि ८७३** ॥ ३५०० व्योर्लोपे क्वावुपसंख्यानम् । ३५०१ वलोपाप्रसिद्धिरूङ्भावप्रसङ्गात् । ३५०२ अतिप्रसङ्गो व्रश्चादिषु । ३५०३ उपदेशसामर्थ्यात्सिद्धम् । ३५०४ उपदेशसामर्थ्यात्सिद्धमिति चेत्संप्रसारणहलादिशेषेषु सामर्थ्यम् । ३५०५ न वा बहिरङ्गलक्षणत्वात् । ३५०६ अनारम्भो वा । ३५०७ आस्रेमाणं जीरदानुरिति वर्णलोपात् । ३५०८ यथा संस्फानो गयस्फानः ॥

**१ । ६७ वेरपृक्तस्य ३७५** ॥ ३५०९ दर्विजागृव्योः प्रतिषेधो वक्तव्यः । ३५१० वेर्लोपे दर्विजागृव्योरप्रतिषेधोऽनुनासिकपरत्वात् । ३५११ धात्वन्तस्य चार्थवत्त्वात् । ३५१२ वस्य वानुनासिकत्वात्सिद्धम् ॥

**१ । ६८ हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल् २५२** ॥ ३५१३ हलन्तादपृक्तलोपसंयोगान्तलोपश्चेन्नलोपाभावो यथा पचन्निति । ३५१४ वस्वादिषु दत्वं संयोगादिलोपबलीयस्त्वात् । ३५१५ यथा कूटतडिति । ३५१६ रात्तलोपो नियमवचनात् । ३५१७ रोरुत्वं च । ३५१८ न वा संयोगान्तलोपस्योत्त्वे सिद्धत्वात् । ३५१९ यथा हरिवो मेदिनमिति ॥

**१ । ६९ एङ्ह्रस्वात्संबुद्धेः १९३** ॥ ३५२० संबुद्धिलोपे डतरादिभ्यः प्रतिषेधः । ३५२१ अपृक्ताधिकारस्य निवृत्तत्वात् । ३५२२ तच्चामर्थम् । ३५२३ अपृक्तसंबुद्धिलोपाभ्यां लुक् । ३५२४ न वा लोपलुकोर्लुगवधारणाद्यथानडुह्यत इति ॥

**१ । ७१ ह्रस्वस्य पिति कृति तुक् २८५८** ॥ ३५२५ तुकि पूर्वान्ते नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च । ३५२६ न वा बहिरङ्गलक्षणत्वात् ३५२७ ग्रामणिपुत्रादिषु चाप्राप्तिः । ३५२८ परादौ संयोगादेरित्यतिप्रसङ्गः । ३५२९ विलोपवचनं च । ३५३० इट्प्रतिषेधश्च । ३५३१ अभक्ते स्वरः ॥

**१ । ७४ आङ्माङोश्च १४७** ॥ ३५३२ आङ्माङोः सानुबन्धकनिर्देशो गतिकर्मप्रवचनीयप्रतिषेधसंप्रत्ययार्थः ॥

**१ । ७५-७६ दीर्घात् १४८ । पदान्ताद्वा १४९** ॥ ३५३३ दीर्घात्पदान्ताद्वा विश्वजनादीनां छन्दसि ॥

**१ । ७७ इको यणचि ४७** ॥ ३५३४ जश्त्वं न सिद्धं यणमत्र पश्य । ३५३५ यश्चापदान्तो हलचश्च पूर्वः । ३५३६ दीर्घस्य यण् । ३५३७ ह्रस्व इति प्रवृत्तम् । ३५३८ संबन्धवृत्त्या । ३५३९ गुणवृद्धिबाध्यः ॥ ३५४० यणादेशः प्लुतपूर्वस्य च । ३५४१ दीर्घशाकलप्रतिषेधार्थम् ॥

**१ । ७९ वान्तो यि प्रत्यये ६३** ॥ ३५४२ वान्तादेशे स्थानिनिर्देशः । ओकारौकारयोरिति । ३५४३ गोर्यूतौ छन्दसि । ३५४४ अध्वपरिमाणे च ॥

**१ । ८३ भय्यप्रवय्ये च च्छन्दसि ३५१७** ॥ ३५४५ भय्यादिप्रकरणे हृदय्या उपसं-

ख्यानम् । ३५४६ अव् स्वरस्य च । ३५४७ शरुवृत्ताद्वा सिद्धम् । ३५४८ ऋज्जती शरुरि-त्यपि दृश्यते । ३५४९ शरुहस्त इति च लोके ॥

१ । ८४ एकः पूर्वपरयोः ६८ ॥ ३५५० एकवचनं पृथगादेशप्रतिषेधार्थम् । ३५५१ न वा द्रव्यवत्कर्मचोदनायां द्वयोरेकस्याभिनिर्वृत्तिः । ३५५२ तत्रैकवाक्यभावात् । ३५५३ तत्रावयवे शास्त्रार्थसंप्रत्ययो यथा लोके । ३५५४ सिद्धं तु धर्मोपदेशनेऽनवयवविज्ञानाद्यथा लौकिक-वैदिकेषु । ३५५५ पूर्वपरग्रहणं परस्यादेशप्रतिषेधार्थम् । ३५५६ पञ्चमीनिर्दिष्टाद्धि परस्य । ३५५७ षष्ठीनिर्दिष्टार्थं तु । ३५५८ अनिर्दिष्टे हि षष्ठ्यर्थाप्रसिद्धिः ॥

१ । ८५ अन्तादिवच्च ७५ ॥ ३५५९ अन्तादिवद्वचनमामिश्रस्यादेशवचनात् । ३५६० तत्र यस्यान्तादिवत्तन्निर्देशः । ३५६१ सिद्धं तु पूर्वपराधिकारात् । ३५६२ अन्तवत्त्वे प्रयोजनं बह्वच्पूर्वपदाट्ठञ्विधाने । ३५६३ प्रत्ययैकादेशः पूर्वविधौ । ३५६४ वैभक्तस्य णत्वे । ३५६५ अदस ईत्वोत्वे । ३५६६ स्वस्तित्वं विप्रतिषेधात् । ३५६७ लिङ्गविशिष्टग्रहणाद्वा । ३५६८ पूर्वपदान्तोदात्तत्वं च । ३५६९ एकादेशे हि स्वरिताप्रसिद्धिः । ३५७० कृदन्तप्रकृतिस्वरत्वं च । ३५७१ एकादेशे ह्यप्रसिद्धिरुत्तरपदस्यापरत्वात् । ३५७२ उत्तरपदवृद्धिश्चैकादेशात् । ३५७३ एकादेशप्रसङ्गस्त्वन्तरङ्गबलीयस्त्वात् । ३५७४ तत्र वृद्धिविधानम् । ३५७५ आदिवत्त्वे प्रयोजनं प्रगृह्यसंज्ञायाम् । ३५७६ सुप्तिङाञ्विधिषु । ३५७७ आङ्ग्रहणे पदविधौ । ३५७८ आटश्च वृद्धिविधौ । ३५७९ कृदन्तप्रातिपदिकत्वे च । ३५८० नाभ्यासादीनां ह्रस्वत्वे । ३५८१ न वा बहिरङ्गलक्षणत्वात् । ३५८२ वर्णा अयविधौ च । ३५८३ प्रयोजनं खट्वाभिर्जुहा-वास्या अश्व इति । ३५८४ न वानाद्रूप्यातिदेशात् ॥

१ । ८६ षत्वतुकोरसिद्धः ३३३३ ॥ ३५८५ षत्वतुकोरसिद्धवचनमादेशलक्षणप्रतिषे-धार्थमुत्सर्गलक्षणभावार्थं च । ३५८६ तत्रोत्सर्गलक्षणाप्रसिद्धिरुत्सर्गाभावात् । ३५८७ असिद्धवचनात्सिद्धमिति चेन्नान्यस्यासिद्धवचनादन्यस्य भावः । ३५८८ तस्मात्स्थानिवद्वच-नमसिद्धत्वं च । ३५८९ स्थानिवद्वचनानर्थक्यं शास्त्रासिद्धत्वात् । ३५९० संप्रसारणङीट्सु सिद्धः । ३५९१ संप्रसारणङीट्सु सिद्धः पदान्तपदाद्योरेकादेशस्यासिद्धवचनम् ॥

१ । ८७ आद्गुणः ६९ ॥ ३५९२ आदेकश्चेद्गुणः केन । ३५९३ स्थानेऽन्तरतमो हि सः । ३५९४ ऐदौतौ नैचि तावुक्तौ । ३५९५ ऋकारो नोभयान्तरः ॥ ३५९६ आकारो नार्तिं धातौ सः । ३५९७ प्लुतश्च विषये स्मृतः । ३५९८ आन्तर्यान्नित्चतुर्मात्राः । ३५९९ तपरत्वान्न ते स्मृताः । ३६०० गुणे ङिशीटामुपसंख्यानं दीर्घत्वबाधनार्थम् । ३६०१ न वा बहिरङ्गलक्ष-णत्वात् ॥

१ । ८९ एत्येधत्यूठ्सु ७३ ॥ ३६०२ इणीकारादौ प्रतिषेधः । ३६०३ योगविभागात्सि-द्धम् । ३६०४ अक्षादूहिन्याम् । ३६०५ प्रादूहोढोढ्येषैष्येषु । ३६०६ स्वादीरेरिणोः । ३६०७ ऋते च तृतीयासमासे । ३६०८ प्रवत्सतरकम्बलवसनां चर्णे । ३६०९ ऋणद-शाभ्यां च ॥

१ । ९१ उपसर्गादृति धातौ ७४ ॥ ३६१० छे तुकः संबुद्धिगुणः । ३६११ न वा बहि-रङ्गलक्षणत्वात् । ३६१२ संप्रसारणदीर्घत्वण्यल्लोपाभ्यासगुणादयश्च । ३६१३ यणादेशादाद्गुणः । ३६१४ इरुर्गुणवृद्धिविधयश्च । ३६१५ भलोपधातुप्रातिपदिकप्रत्ययसमासान्तोदात्तनिवृत्ति-

स्वरा एकादेशाच्च । ३६१६ अल्लोपाल्लोपौ चार्धधातुके । ३६१७ इयङुवङ्गुणवृद्धिटित्किन्मित्पूर्वपदविकाराश्च । ३६१८ उत्तरपदविकाराश्चेति वक्तव्यम् ॥

१ । ९३ **औतोऽम्शसोः २८५** ॥ ३६१९ ओतस्तिङि प्रतिषेधः । ३६२० गोग्रहणे योरुपसंख्यानम् । ३६२१ समासाच्च प्रतिषेधः । ३६२२ न वा बहिरङ्गलक्षणत्वात् । ३६२३ सुबधिकारात्सिद्धम् । ३६२४ एकयोगे चैकदेशानुवृत्तिरन्यत्रापि । ३६२५ अभ्युपसंख्यानं वृद्धिबलीयस्त्वात् । ३६२६ न वानवकाशत्वात् । ३६२७ योश्च सर्वनामस्थाने वृद्धिविधिः । ३६२८ यद्द्याव इन्द्रेति दर्शनात् ॥

१ । ९४ **एङि पररूपम् ७८** ॥ ३६२९ पररूपप्रकरणे तुन्त्वोर्विनिपात उपसंख्यानम् । ३६३० न वा निपातैकत्वात् । ३६३१ एवे चानियोगे । ३६३२ शकन्ध्वादिषु च । ३६३३ सीमन्तः केशेष्विति वक्तव्यम् । ३६३४ ओत्वोष्ठयोः समासे वा । ३६३५ एमन्नादिषु च्छन्दसि ॥

१ । ९५ **ओमाङोश्च ८०** ॥ ३६३६ उस्योमाङ्क्ष्वाटः प्रतिषेधः ॥

१ । ९८ **अव्यक्तानुकरणस्यात इतौ ८१** ॥ ३६३७ इतावनेकाज्ग्रहणं श्रदर्थम् ॥

१ । ९९ **नाम्रेडितस्यान्त्यस्य तु वा ८२** ॥ ३६३८ नित्यमाम्रेडिते डाचि । ३६३९ अकारान्तानुकरणाद्वा ॥

१ । १०१ **अकः सवर्णे दीर्घः ८५** ॥ ३६४० सवर्णदीर्घत्व ऋति ॠ वावचनम् । ३६४१ ऌति ॢवावचनम् ॥

१ । १०२ **प्रथमयोः पूर्वसवर्णः १६४** ॥ ३६४२ प्रथमयोरिति योगविभागः सवर्णदीर्घार्थः । ३६४३ एकयोगे हि जश्शसोः पररूपप्रसङ्गः । ३६४४ आद्गुणयणादेशयोरपवादा वृद्धिसवर्णदीर्घपूर्वसवर्णादेशास्तेषां पररूपं स्वरसंधिषु । ३६४५ योगविभागोऽन्यशास्त्रनिवृत्त्यर्थः । ३६४६ योगविभागोऽन्यशास्त्रनिवृत्त्यर्थश्चेदम्यातिप्रसङ्गः । ३६४७ नकाराभावश्च तस्मादित्यनन्तरनिर्देशात् । ३६४८ इज्ग्रहणं तु ज्ञापकं पररूपाभावस्य ॥

१ । १०३ **तस्माच्छसो नः पुंसि १९६** ॥ ३६४९ नत्वं पुंसां बहुत्वे चेत्पुंशब्दादिष्यते स्त्रियाम् । ३६५० नपुंसके तथैवेष्टम् । ३६५१ स्त्रीशब्दाच्च प्रसज्यते ॥ ३६५२ पुंशब्दादिति चेदिष्टं स्थूरापत्ये न सिध्यति । कुण्डिन्या अररकायाः । ३६५३ पुंस्प्राधान्यात्प्रसिध्यति ॥ ३६५४ पुंस्प्राधान्ये त एव स्युर्ये दोषाः पूर्वचोदिताः । ३६५५ तस्मादर्थे भवेन्नत्वं वध्रिकादिषु पूर्ववत् ॥

१ । १०७ **अमि पूर्वः १९४** ॥ ३६५६ वा छन्दसीत्येव ॥

१ । १०८ **संप्रसारणाच्च ३३०** ॥ ३६५७ वा छन्दसीत्येव । ३६५८ संप्रसारणात्पूर्वत्वे समानाङ्गग्रहणं समानाङ्गप्रतिषेधार्थम् । ३६५९ सिद्धमसंप्रसारणात् । ३६६० कार्यकृतत्वाद्वा । ३६६१ दीर्घत्वं वचनप्रामाण्यात् । ३६६२ अन्तवत्त्वाद्वा । ३६६३ आटो वृद्धेरियङ् । ३६६४ आद्गुणात्सवर्णदीर्घत्वमाङभ्यासयोः । ३६६५ स्वरदोषस्तु । ३६६६ आङि पररूपवचनं तु ज्ञापकमन्तरङ्गबलीयस्त्वस्य । ३६६७ प्रयोजनं पूर्वसवर्णपूर्वत्वतहिलोपटेनङ्यङिस्मिन्ङिणत्वमन्तरङ्गं बहिरङ्गलक्षणाद्वर्णविकारात् ॥

**१ । ११३ अतो रोरप्लुतादप्लुते १६३** ॥ ३६६८ अप्लुतादप्लुतवचनेऽकारदृशोः समानपदे प्रतिषेधः । ३६६९ न वा बहिरङ्गलक्षणत्वात् ॥

**१ । ११९ नान्तःपादमव्यपरे ३५१८** ॥ ३६७० नान्तःपादमिति सर्वप्रतिषेधश्चेदतिप्रसङ्गः । ३६७१ अकाराश्रयमिति चेदुत्त्ववचनम् । ३६७२ अयवोः प्रतिषेधश्च । ३६७३ एङ्प्रकरणात्सिद्धमिति चेदुत्त्वप्रतिषेधः । ३६७४ पुनरेङ्ग्रहणात्सिद्धम् ॥

**१ । १२३ अवङ् स्फोटायनस्य ८८** ॥ ३६७५ गोरग्वचनं गवाग्रे स्वरासिद्धयर्थम् । ३६७६ अवङादेशे हि स्वरदोषः ॥

**१ । १२४ इन्द्रे च नित्यम् ८९** ॥ ३६७७ इन्द्रादाविति वक्तव्यम् ॥

**१ । १२५ प्लुतप्रगृह्या अचि ९०** ॥ ३६७८ प्लुतप्रगृह्येष्वज्ग्रहणमनर्थकमाधिकारात्सिद्धम् । ३६७९ तत्तु तस्मिन्प्रकृतिभावार्थम् । ३६८० प्लुतप्रकृतिभाववचनं तु ज्ञापकमेकादेशात्प्लुतो विप्रतिषेधेनेति । ३६८१ एकादेशात्प्लुतो विप्रतिषेधेनेति चेच्छालेन्द्रेऽतिप्रसङ्गः । ३६८२ न वा बहिरङ्गलक्षणत्वात् ॥

**१ । १२६ आङोऽनुनासिकश्छन्दसि ३५२९** ॥ ३६८३ आङोऽनर्थकस्य ॥

**१ । १२७ इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ९१** ॥ ३६८४ सित् (नित्य) समासयोः शाकलप्रतिषेधः । ३६८५ ईषाअक्षादिषु च्छन्दसि प्रकृतिभाववचनम् ॥

**१ । १२८ ऋत्यकः ९२** ॥ ३६८६ ऋत्यकः सवर्णार्थम् । ३६८७ अनिगन्तार्थं च । ३६८८ ऋति ह्रस्वादुपसर्गाद्वृद्धिर्विप्रतिषेधेन ॥

**१। १२९ अप्लुतवदुपस्थिते ९८** ॥ ३६८९ वद्वचनं प्लुतकार्यप्रतिषेधार्थम् । ३६९० प्लुतप्रतिषेधे हि प्रगृह्यप्लुतप्रतिषेधप्रसङ्गोऽन्येन विहितत्वात् ॥

**१ । १३० ई३ चाक्रवर्मणस्य ९९** ॥ ३६९१ ई३ चाक्रवर्मणस्येत्यनुपस्थितार्थम् ॥

**१ । १३५ सुट् कात्पूर्वः २५५३** ॥ ३६९२ सुटि कात्पूर्ववचनमककारादौ कात्पूर्वार्थम् । ३६९३ सुटि कात्पूर्ववचनमककारादौ कात्पूर्वार्थमिति चेदन्तरेणापि तत्सिद्धम् । ३६९४ द्विर्वचनात्सुड्विप्रतिषेधेन । ३६९५ द्विर्वचनात्सुड्विप्रतिषेधेनेति चेद्विर्भूते शब्दान्तरभावात्पुनः प्रसङ्गः । ३६९६ द्विर्भूते शब्दान्तरभावात्पुनः प्रसङ्ग इति चेद्विर्वचनम् । ३६९७ तथा चानवस्था । ३६९८ अड्व्यवाय उपसंख्यानम् । ३६९९ अभ्यासव्यवाये च । ३७०० अविप्रतिषेधो वा बहिरङ्गलक्षणत्वात् । ३७०१ उपदेशिवद्वचनं च । ३७०२ लिटि गुणवाडि दीर्घप्रतिषेधार्थम् । ३७०३ कात्पूर्वान्त इति चेद्वृविधिप्रतिषेधः । ३७०४ परादाविड्गुणप्रसङ्गः । ३७०५ अभक्ते स्वरः ॥

**१ । १४२ अपाच्चतुष्पाच्छकुनिष्वालेखने २६८८** ॥ ३७०६ किरतेर्हर्षजीविकाकुलायकरणेषु ॥

**१ । १४४ अपरस्पराः क्रियासातत्ये १०५९** ॥ ३७०७ समो हिततत्तयोर्वा लोपः । ३७०८ सन्तुमुनोः कामे । ३७०९ मनसि च । ३७१० अवश्यमः कृत्ये ॥

**१ । १५० विष्किरः शकुनौ वा १०६५** ॥ ३७११ विष्किरः शकुनौ विकिरो वा ।

**१ । १४७ आश्चर्यमनित्ये १०६२** ॥ ३७१२ आश्चर्यमद्भुते ॥

१ । १५७ **पारस्करप्रभृतीनि च संज्ञायाम् १०७१** ॥ ३०१३ तद्बृहतोः करपत्योश्चोरदेवतयोः सुट्तलोपश्च । ३०१४ प्रायस्य चित्तिचित्तयोः सुडस्कारो वा ॥

१ । १५८ **अनुदात्तं पदमेकवर्जम् ३६५०** ॥ ३०१५ आगमस्य विकारस्य प्रकृतेः प्रत्ययस्य च । ३०१६ पृथक्स्वरनिवृत्त्यर्थमेकवर्जं पदस्वरः ॥ ३०१७ यौगपद्यं तर्वे सिद्धम् । ३०१८ पर्यायो रिक्तशासनात् । ३०१९ उदात्ते ज्ञापकं त्वेतत् । ३०२० स्वरितेन समावेशेत् । ३०२१ अनुदात्ते विप्रतिषेधानपपत्तिरेकस्मिन्युगपत्संभवात् । ३०२२ सिद्धं त्वेकाननुदात्तत्वात् । ३०२३ एकवर्जमिति चाप्रसिद्धिः संदेहात् । ३०२४ सिद्धं तु यस्मिन्ननुदात्त उदात्तवचनानर्थक्यं तद्वर्जम् । ३०२५ प्रकृतिप्रत्यययोः स्वरस्य सावकाशत्वादप्रसिद्धिः । ३०२६ विप्रतिषेधात्प्रत्ययस्वरः । ३०२७ विप्रतिषेधात्प्रत्ययस्वर इति चेत्काम्यायादिषु चित्करणम् । ३०२८ प्रकृतिस्वरे प्रत्ययस्वराभावः । ३०२९ सिद्धं तु प्रकृतिस्वरबलीयस्त्वात्प्रत्ययस्वराभावः । ३०३० सति शिष्टस्वरबलीयस्त्वं च । ३०३१ तच्चानेकप्रत्ययसमासार्थम् । ३०३२ स्यादिस्वराप्रसङ्गश्च तासेः परस्यानुदात्तवचनात् । ३०३३ शास्त्रपरविप्रतिषेधानियमाद्वा शब्दपरविप्रतिषेधाद्वा सिद्धम् । ३०३४ विभक्तिस्वरान्नञ्स्वरो बलीयान् ॥ ३०३५ विभक्तिनिमित्तस्वराच्च । ३०३६ यच्चोपपदं कृति नञ् । ३०३७ सहनिर्दिष्टस्य च ॥

१ । १६१ **अनुदात्तस्य च यत्रोदात्तलोपः ३६५१** ॥ ३०३८ उदात्तलोपे स्वरितोदात्तयोरभावादनुदात्तग्रहणानर्थक्यम् । ३०३९ अन्त इति चेच्छम्क्सयुष्मदस्मादिदंकिलोपेषु स्वरः ॥ ३०४० आदिरिति चेदिन्धीत द्वयमित्यन्तः । ३०४१ आदौ सिद्धम् । ३०४२ विदीन्धिखिदिभ्यश्च लसार्वधातुकानुदात्तप्रतिषेधाल्लिङि सिद्धम् । ३०४३ अयाचि चित्करणात् ॥

१ । १६२ **धातोः ३६७१** ॥ ३०४४ धातोरन्त इति चेदनुदात्तेचवग्रहणम् । ३०४५ संश्च नित् । ३०४६ आदावूर्णुप्रत्ययधातुष्वन्तोदात्तत्वम् । ३०४७ अन्तोदात्तवचनात्सिद्धम् ३०४८ पिबौ निपातनात् ॥

१ । १६३ **चितः ३७१०** ॥ ३०४९ चितः सप्रकृतेर्बह्वकजर्थम् ॥

१ । १६६ **तिसृभ्यो जसः ३७१३** ॥ ३०५० तिसृभ्यो जस्ग्रहणानर्थक्यमन्यत्राभावात् ।

१ । १६७ **चतुरः शसि ३६८२** ॥ ३०५१ चतुरः शसि स्त्रियामप्रतिषेध आद्युदात्तनिपातनात् । ३०५२ विभक्तिस्वरभावश्च हलादिग्रहणात् । ३०५३ आद्युदात्तनिपातने हि हलादिग्रहणानर्थक्यम् ॥

१ । १६८ **सावेकाचस्तृतीयादिर्विभक्तिः ३७१४** ॥ ३०५४ सावेकाच उदात्तत्वे त्वन्मदोः प्रतिषेधः । ३०५५ सिद्धं तु यस्मात्तृतीयादिस्तस्याभावात्सौ । ३०५६ प्रकृतेश्चानकाच्त्वात् ॥

१।१७१ **ऊडिदंपदाद्यप्पुम्रैद्युभ्यः ३७१७** ॥ ३०५७ उठ्युपधाग्रहणमन्त्यप्रतिषेधार्थम् ॥

१ । १७२ **अष्टनो दीर्घात् ३७१८** ॥ ३०५८ अष्टनो दीर्घग्रहणं षट्संज्ञाज्ञापकमाकारान्तस्य नुडर्थम् ॥

१ । १७३ **शतुरनुमो नद्यजादी ३७१९** ॥ ३०५९ नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यानम् ॥

१ । १७४ **उदात्तयणोर्हल्पूर्वात् ३७२०** ॥ ३७६० उदात्तयणि हल्ग्रहणं नकारान्तार्थम् । ३७६१ हल्पूर्वग्रहणानर्थक्यं चसमुदायादेशत्वात् । ३७६२ स्वरितत्वे चावचनात् ॥

१ । १७६ **ह्रस्वनुड्भ्यां मतुप् ३७२२** ॥ ३७६३ मतुबुदात्तत्वे रेग्रहणम् । ३७६४ त्रिप्रतिषेधश्च ॥

१ । १७७ **नामन्यतरस्याम् ३७२३** ॥ ३७६५ नाम्स्वरे मतौ ह्रस्वग्रहणम् ॥

१ । १८५ **तित्स्वरितम् ३७२९** ॥ ३७६६ तिति प्रत्ययग्रहणम् ॥

१ । १८६ **तास्यनुदात्तेन्ङिदुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङोः ३७३०** ॥ ३७६७ तास्यादिभ्योऽनुदात्तत्वे सप्तमीनिर्देशोऽभ्यस्तसिजर्थः । ३७६८ चित्स्वरात्तास्यादिभ्योऽनुदात्तत्वं विप्रतिषेधेन । ३७६९ मुकश्चोपसंख्यानम् । ३७७० इतश्चोपसंख्यानम् । ३७७१ इतश्चानेकान्तत्वात् । ३७७२ तत्रादिप्रभृतिजुहोत्यादिभ्योऽप्रतिषेधः स्थान्यादेशभावात् । ३७७३ अनुदात्तङिद्ग्रहणाद्वा । ३७७४ ङितोऽनुदात्तत्वे विकरणेभ्यः प्रतिषेधः । ३७७५ ङितोऽनुदात्तत्वे विकरणेभ्योऽप्रतिषेधः सर्वस्योपदेशविशेषणत्वात् ॥

१ । १८७ **आदिः सिचोऽन्यतरस्याम् ३७३१** ॥ ३७७६ सिच आद्युदात्तत्वेऽनिटः पित उपसंख्यानम् ॥

१ । ८८ **स्वपादिर्हिंसामच्यनिटि ३६७२** ॥ ३७७७ स्वपादीनां वावचनादभ्यस्तस्वरो विप्रतिषेधेन ॥

१ । १९० **अनुदात्ते च ६७४** ॥ ३७७८ अनुदात्ते चेति बहुव्रीहिनिर्देशो लोपयणादेशार्थः ॥

१ । १९१ **सर्वस्य सुपि ३६८५** ॥ ३७७९ सर्वस्वरोऽनच्कस्य ॥

१ । १९५ **अचः कर्तृयकि ३६७८** ॥ ३७८० यकि रपर उपसंख्यानम् । ३७८१ उपदेशवचनात्सिद्धम् । ३७८२ उपदेशवचने जनादीनाम् । ३७८३ योगविभागात्सिद्धम् ॥

१ । २०४ **संज्ञायामुपमानम् ३६९९** ॥ ३७८४ उपमानस्याद्युदात्तवचनं ज्ञापकमनुबन्धलक्षणे स्वरे प्रत्ययलक्षणप्रतिषेधस्य ॥

१ । २०५ **निष्ठा च द्व्यजनात् ३६९३** ॥ ३७८५ निष्ठायां यञि दीर्घत्वे प्रतिषेधः । ३७८६ न वा बहिरङ्गलक्षणत्वात् ॥

१ । २०७ **आशितः कर्ता ३६९५** ॥ ३७८७ आशिते कर्तरि निपातनमुपधादीर्घत्वमाद्युदात्तत्वं च ॥

१ । २०८-२१५ **रिक्ते विभाषा ३६९६ । विभाषा वेण्विन्धानयोः ३७०३** ॥ ३७८८ वेणुरिक्तयोरप्राप्ते ॥

१ । २२२ **चौ ३६५२** ॥ ३७८९ चोरतद्धिते ॥

१ । २२३ **समासस्य ३७३४** ॥ ३७९० समासान्तोदात्तत्वे व्यञ्जनान्तेषूपसंख्यानम् । ३७९१ हल्स्वरप्राप्तौ वा व्यञ्जनमविद्यमानवत् । ३७९२ प्रयोजनं लिदाद्युदात्तान्तोदात्तविधयः ॥

२ । १ **बहुव्रीहौ पूर्वपदं प्रकृत्या ३७३५** ॥ ३७९३ बहुव्रीहिस्वरं शास्ति समासान्तविधेः सुकृत् । ३७९४ नञ्सुभ्यां नियमार्थं तु । ३७९५ परस्य शिति शासनात् ॥ ३७९६ क्षेपे विधिर्नञो ऽप्रसिद्धः । ३७९७ परस्य नियमो भवेत् । ३७९८ अन्तश्च वाप्रिये सिद्धः । ३७९९

संभवात् । ३८०० प्रकृताद्विधेः ॥ ३८०१ बहुव्रीहावृते सिद्धम् । ३८०२ इष्टतश्चावधारणात् । ३८०३ द्विपादिष्टैर्वितस्तेश्च पर्यायो न प्रकल्पते ॥ ३८०४ उदात्ते ज्ञापकं त्वेतत् । ३८०५ स्वरितेन समाविशेत् ॥

**२ । २ तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ३७३६** ॥ ३८०६ तत्पुरुषे विभक्तिप्रकृतिस्वरत्वे कर्मधारये प्रतिषेधः । ३८०७ सिद्धं तु लक्षणप्रतिपदोक्तयोः प्रातिपदोक्तस्यैव ग्रहणात् । ३८०८ अव्यये नञ्कुनिपातानाम् । ३८०९ क्त्वायां वा प्रतिषेधः । ३८१० निपातनात्सिद्धम् ॥

**२ । ११ सदृशप्रतिरूपयोः सादृश्ये ३७४५** ॥ ३८११ सदृशमनर्थकं तृतीयासमासवचनात् । ३८१२ षष्ठ्यर्थमिति चेत्तृतीयासमासवचनानर्थक्यम् ॥

**२ । २९ इगन्तकालकपालभगालशरावेषु द्विगौ ३७६३** ॥ ३८१३ इगन्तप्रकृतिस्वरत्वे यग्गुणयोरुपसंख्यानम् । ३८१४ न वा बहिरङ्गलक्षणत्वात् ॥

**२ । ३३ परिप्रत्युपापावर्ज्यमानाहोरात्रावयवेषु ३७६७** ॥ ३८१५ परिप्रत्युपापेभ्यो वनं समासे विप्रतिषेधेन । ३८१६ न वा वनस्यान्तोदात्तवचनं तदपवादनिवृत्त्यर्थम् ॥

**२ । ३६ आचार्योपसर्जनश्चान्तेवासी ३७७०** ॥ ३८१७ आचार्योपसर्जनेऽनेकस्यापि पर्वमदत्वात्संदेहः । ३८१८ लोकविज्ञानात्सिद्धम् ॥

**२ । ४२ कुरुगार्हपतरिक्तगुर्वसूतजरत्यश्लीलदृढरूपा पारेवडवा तैतिलकद्रूः पण्यकम्बलो दासीभाराणां च ३७३६** ॥ ३८१९ कुरुवृज्योर्गार्हपते । ३८२० पण्यकम्बलः संज्ञायाम् ॥

**२ । ४७ अहीने द्वितीया ३७८१** ॥ ३८२१ अहीने द्वितीयानुपसर्गे ॥

**२ । ४९ गतिरनन्तरः ३७८३** ॥ ३८२२ गतेरनन्तरग्रहणमनर्थकं गतिर्गतावनुदात्तवचनात् । ३८२३ तत्र यस्याप्रकृतिस्वरत्वं तस्मादन्तोदात्तप्रसङ्गः । ३८२४ प्रकृतिस्वरवचनाद्व्यनन्तोदात्तत्वम् । ३८२५ प्रकृतिस्वरवचनं किमर्थमिति चेदेकगत्यर्थम् । ३८२६ अपूर्वपदार्थमिति चेत्कारकेऽतिप्रसङ्गः । ३८२७ सिद्धं तु गतेरन्तोदात्ताप्रसङ्गात् ॥

**२ । ५० तादौ च निति कृत्यतौ ३७८४** ॥ ३८२८ तादौ निति कृद्ग्रहणानर्थक्यम् । ३८२९ कृदुपदेशे वा ताद्यर्थमिडर्थम् ॥

**२ । ५२ अनिगन्तोऽञ्चतौ वप्रत्यये ३७८६** ॥ ३८३० अनिगन्तप्रकृतिस्वरत्वे यणादेशे प्रकृतिस्वरभावप्रसङ्गः । ३८३१ अनिगन्तवचनं किमर्थमिति चेदयणादिष्टार्थम् । ३८३२ चोरनिगन्तोऽञ्चतौ वप्रत्यये । ३८३३ न वा चुस्वरस्य पूर्वपदप्रकृतिस्वरभाविनि प्रतिषेधादितरथा हि सर्वापवादः । ३८३४ विभक्तीषत्स्वरात्कृत्स्वरः । ३८३५ चित्स्वराद्धारिस्वरः । ३८३६ कृत्स्वराश्च । ३८३७ न वा हरणप्रतिषेधो ज्ञापकः कृत्स्वराबाधकत्वस्य । ३८३८ युक्तस्वरश्च ।

**२ । ८२ दीर्घकाशतुषभ्राष्ट्रवटं जे ३८१६** ॥ ३८३९ जे दीर्घाद्व्यचः ।

**२ । ९१ न भूताधिकसंजीवमद्राश्मकज्जलम् ३८२५** ॥ ३८४० आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम् ॥

**२ । ९३ सर्वं गुणकार्त्स्न्ये ३८५७** ॥ ३८४१ गुणात्तरेण समासस्तरलोपश्च ॥

२ । १०६ **बहुव्रीहौ विश्वं संज्ञायाम् ३८४०** ॥ ३८४२ बहुव्रीहौ विश्वस्यान्तोदात्तात्संज्ञायां मित्राजिनयोरन्तः । ३८४३ अन्तोदात्तप्रकरणे मरुद्वृधादीनां छन्दस्युपसंख्यानम् ॥

२ । १०७-१०८ **उदराश्वेषुषु ३८४१** । **क्षेपे ३८४२** ॥ ३८४४ उदरादिभ्यो नञ्सुभ्याम् ॥

२ । ११७ **सोर्मनसी अलोमोषसी ३८५१** ॥ ३८४५ सोर्मनसोः कपि ॥

२ । १२१ **कूलतीरतूलमूलशालाक्षसममव्ययीभावे ३८५५** ॥ ३८४६ पर्यादिभ्यः कूलादीनामाद्युदात्तत्वम् ॥

२ । १२६ **चेलखेटकटुककाण्डगर्हायाम् ३८६०** । १३० **अकर्मधारये राज्यम् ३८६४** ॥ ३८४७ चेलराज्यादिभ्योऽव्ययम् ॥

२ । १३६ **कुण्डं वनम् ३८७०** ॥ ३८४८ कुण्डाद्युदात्तत्वे तत्समुदायग्रहणम् ॥

२ । १३९ **गतिकारकोपपदात्कृत् ३८७३** ॥ ३८४९ गत्यादिभ्यः प्रकृतिस्वरत्वे कृद्ग्रहणानर्थक्यमन्यस्योत्तरपदस्याभावात् । ३८५० कृत्प्रकृतौ गतित्वादधिकार्थं कृद्ग्रहणम् ॥

२ । १४३ **अन्तः ३८७७** ॥ ३८५१ अन्तोदात्तत्वं समासस्येति चेत्कप्युपसंख्यानम् । ३८५२ उत्तरपदस्यान्तोदात्तत्वे नञ्सुभ्यां समासान्तोदात्तत्वम् । ३८५३ न वा कपि पूर्ववचन ज्ञापकमुत्तरपदान्तोदात्तत्वस्य । ३८५४ प्रकरणाच्च समासान्तत्वम् ॥

२ । १४८ **कारकाद्दत्तश्रुतयोरेवाशिषि ३८८२** ॥ ३८५५ कारकाद्दत्तश्रुतयोरनाशिषि प्रतिषेधः । ३८५६ सिद्धं तूभयनियमात् ॥

२ । १६५ **संज्ञायां मित्राजिनयोः ३८९९** ॥ ३८५७ ऋषिप्रतिषेधो मित्रे ॥

२ । १७५ **बहोर्नञ्वदुत्तरपदभूम्नि ३९०९** ॥ ३८५८ बहोर्नञ्वदुत्तरपदाद्युदात्तार्थम् ।

२ । १७७ **उपसर्गात्स्वाङ्गं ध्रुवमपर्शु ३९११** ॥ ३८५९ उपसर्गात्स्वाङ्गं ध्रुवं मुखस्यान्तोदात्तत्वात् ॥

२ । १८५-१८६ **अभेर्मुखम् ३९१९** । **अपाच्च ३९२०** ॥ ३८६० अभेर्मुखमपाच्चाध्रुवार्थम् । ३८६१ अबहुव्रीह्यर्थं वा ॥

२ । १८७ **स्फिगपूतवीणाञ्जोऽध्वकुक्षिसीरनामनाम च ३९२१** ॥ ३८६२ स्फिगपूतग्रहणं च ॥

२ । १९१ **अतेरकृत्पदे ३९२५** ॥ ३८६३ अतेर्धातुलोपे ॥

२ । १९७ **द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ ३९३१** ॥ ३८६४ द्वित्रिभ्यां मूर्धन्यकारान्तग्रहणं चेन्नकारान्तस्योपसंख्यानम् । ३८६५ नकारान्तेऽकारान्तस्य । ३८६६ उदात्तलोपात्सिद्धम् ॥

२ । १९९ **परादिश्छन्दसि बहुलम् ३९३३** ॥ ३८६७ परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते । ३८६८ पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं स्मृतः ॥ ३८६९ अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसंख्यानम् ॥

३ । १ **अलुगुत्तरपदे ९५८** ॥ ३८७० उत्तरपदाधिकारस्य प्रयोजनं स्तोकादिभ्योऽलुगानङ्कोह्रस्वनलोपाः । ३८७१ एकवच्च । ३८७२ एकवद्वचनमनर्थकम् । ३८७३

द्विबहुष्वसमासः। ३८७४ एकवचने हि गोपुच्चरेऽतिप्रसङ्गः। ३८७५ वर्षाभ्यश्च जे। ३८७६ अपो योनियन्मतिषु[1] चोपसंख्यानम्। ३८७७ जे चरे च॥

३।२ पञ्चम्याः स्तोकादिभ्यः ९५९॥ ३८७८ पञ्चमीप्रकरणे ब्राह्मणाच्छंसिन उपसंख्यानम्। ३८७९अन्यार्थे च॥

३।३ ओजःसहोम्भस्तमसस्तृतीयायाः ९६०॥ ३८८० अञ्जस उपसंख्यानम्। ३८८१ पुंसानुजो जनुषान्धो विकृताक्ष इति च॥

३।५ आज्ञायिनि च ९६२॥ ३८८२ आत्मनश्च पूरणे। ३८८३ अन्यार्थे च॥

३।७-८ वैयाकरणाख्यायां चतुर्थ्याः ९६४। परस्य च ९६५॥ ३८८४ आत्मनेभाषपरस्मैभाषयोरुपसंख्यानम्॥

३।९ हलदन्तात्सप्तम्याः संज्ञायाम् ९६६॥ ३८८५हद्द्युभ्यां ङेरुपसंख्यानम्। ३८८६ अन्यार्थे च। ३८८७ हलदन्ताधिकारे गोरुपसंख्यानम्। ३८८८ लुकोऽवादेशो विप्रतिषेधेन। ३८८९ लुकोऽवादेशो विप्रतिषेधेनेति चेद्भूमिपाशेऽतिप्रसङ्गः। ३८९० अकात इति वा संध्यक्षरार्थम्॥

३।१० कारनाम्नि च प्राचां हलादौ ९६८॥ ३८९१ कारनाम्नि वावचनं चेदजादावतिप्रसङ्गः। ३८९२ अप्राप्ते समासविधानम्। ३८९३ योगविभागात्सिद्धम्॥

३।११ मध्याद्गुरौ ९६९॥ ३८९४ गुरावन्ताच्च॥

३।१४ तत्पुरुषे कृति बहुलम् ९७२॥ ३८९५ तत्पुरुषे कृति बहुलमकर्मधारये। ३८९६ लुगलुगनुक्रमणं बहुलवचनस्याकृत्स्नत्वात्॥

३।२१ षष्ठ्या आक्रोशे ९७९॥ ३८९७ षष्ठीप्रकरणे वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषूपसंख्यानम्। ३८९८ आमुष्यायणामुष्यपुत्रिकेत्युपसंख्यानम्। ३८९९ आमुष्यकुलिकेति च वक्तव्यम्। ३९०० देवानांप्रिय इति च। ३९०१ शेपपुच्छलाङ्गूलेषु शुनः संज्ञायाम्। ३९०२ दिवश्च दासे॥

३।२३ ऋतो विद्यायोनिसंबन्धेभ्यः ९८१॥ ३९०३ विद्यायोनिसंबन्धेभ्यस्तत्पूर्वपदोत्तरपदग्रहणम्॥

३।२५ आनङृतो द्वन्द्वे ९२१॥ ३९०४ ऋकारान्तानां द्वन्द्वे पुत्र उपसंख्यानम्। ३९०५ कार्यी चानिर्दिष्टः। ३९०६ अविशेषेण पितृपितामहादिष्वातिप्रसङ्गः॥

३।२६ देवताद्वन्द्वे च ९२२॥ ३९०७ देवताद्वन्द्व उभयत्र वायोः प्रतिषेधः। ३९०८ ब्रह्मप्रजापत्यादीनां च॥

३।२८ इद्वृद्धौ ९२५॥ ३९०९ इद्वृद्धौ विष्णोः प्रतिषेधः॥

३।३४ स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ८३१॥ ३९१० पुंवद्भावे स्त्रीग्रहणं प्रत्ययग्रहणं चेत्तत्र पुंवदित्युत्तरपदे तत्प्रतिषेधविज्ञानम्।

१ भाष्ये दृश्यमानोऽपि 'मतिषु' इति पाठोऽसांप्रदायिको हरदत्तोक्तिविरोधात् इति शब्दरत्नम्। मतिष्विति युक्तः पाठः। 'एकवच' इत्यस्यातिप्रसङ्गव्याजेनाप्सुजाप्सुचरादिवदस्य भाष्ये उपन्यासात्। नह्यप्सुमन्तावित्यत्र तस्य प्रसक्तोऽस्ति। शब्दपरतया तस्यैकत्वमात्रार्थत्वात्। किंच 'मतुषु' इति पाठे फलं चिन्त्यम्। अस्य वामीयमित्यादाविव लुकोऽप्राप्तेः। इति तु शेखरः॥

२९११ प्रातिपदिकस्य च प्रत्यापत्तिः । २९१२ स्थानिवत्प्रसङ्गश्च । २९१३ वतण्ड्यादिषु पुंवद्वचनम् । २९१४ स्त्रीशब्दस्य पुंशब्दातिदेश इति चेत्सर्वप्रसङ्गोऽविशेषात् । २९१५ भाषितपुंस्कानुपपत्तिश्च । २९१६ अर्थातिदेशे विप्रतिषेधानुपपत्तिः । २९१७ पूरण्यां प्रधानपूरणीग्रहणम् ॥

३ । ३५ तसिलादिष्वा कृत्वसुचः ८३६ ॥ २९१८ तसिलादी त्रतसौ । २९१९ तरप्तमपौ । २९२० चरड्जातीयरौ । २९२१ कल्पब्देशीयरौ । २९२२ रूपप्पाशपौ । २९२३ थम्थालौ । २९२४ दार्हिलौ । २९२५ तिल्थ्यनौ । २९२६ शसि बह्वल्पार्थस्य । २९२७ त्वतलोर्गुणवचनस्य । २९२८ भस्याढे तद्धिते । २९२९ ठक्छसोश्च ॥

३ । ३६ क्यङ्मानिनोश्च ८३७ ॥ २९३० मानिन्ग्रहणमस्त्र्यर्थमसमानाधिकरणार्थं च ॥

३ । ३७ न कोपधायाः ८३८ ॥ २९३१ कोपधप्रतिषेधे तद्धितवुग्रहणम् ॥

३ । ४० स्वाङ्गाच्चेतोऽमानिनि ८४१ ॥ २९३२ स्वाङ्गाच्चेतोऽमानिनि ॥

३ । ४२ पुंवत्कर्मधारयजातीयदेशीयेषु ७४६ ॥ २९३३ पुंवत्कर्मधारये प्रतिषिद्धार्थम् । २९३४ कुक्कुट्यादीनामण्डादिषु पुंवद्वचनम् । २९३५ न वास्त्रीपूर्वपदविवक्षितत्वात् । २९३६ अग्नेरीत्त्वाद्वरुणस्य वृद्धिर्विप्रतिषेधेन । २९३७ पुंवद्भावाद्ध्रस्वत्वं खिद्धादिषु ॥

३ । ४३ घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः ९८५ ॥ २९३८ कृन्नद्याः प्रतिषेधः ॥

३ । ४६ आन्महतः समानाधिकरणजातीययोः ८०७ ॥ २९३९ अन्यप्रकृतिस्त्वमहान्भूतप्रकृतौ महान्भवत्येव । २९४० तस्मादात्त्वं न स्यात् । २९४१ पुंवत्तु कथं भवेदत्र । २९४२ अमहति महान्हि वृत्तस्तद्वाची चात्र भूतशब्दोऽयम् । २९४३ तस्मात्सिध्यति पुंवत् । २९४४ निवर्त्यमात्त्वं तु मन्यन्ते । २९४५ यस्तु महतः प्रतिपदं समास उक्तस्तदाश्रयं ह्यात्त्वम् । २९४६ कर्तव्यं मन्यन्ते न लक्षणेन लक्षणोक्तश्चायम् ॥ २९४७ शेषवचनात्तु योऽसौ प्रत्यारम्भात्कृतो बहुव्रीहिः । २९४८ तस्मात्सिध्यति तस्मिन् । २९४९ प्रधानतो वा यतो वृत्तिः ॥ २९५० महदात्त्वे घासकरविशिष्टेषूपसंख्यानं पुंवद्वचनं च नानाधिकरणार्थम् । २९५१ अष्टनः कपाले हविषि । २९५२ गवि च युक्ते ॥

३ । ४७ द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ८०८ ॥ २९५३ प्राक् शतादिति वक्तव्यम् ॥

३ । ५० हृदयस्य हृल्लेखयदण्लासेषु ९८८ ॥ २९५४ यदण्ग्रहणे (उत्तरपदाधिकारे प्रत्ययग्रहणे) रूपग्रहणं लेखग्रहणात् ॥

३ । ५२ पादस्य पदाज्यातिगोपहतेषु ९९० ॥ २९५५ पदादेशोऽन्तोदात्तनिपातनम् । २९५६ पदोपहतार्थम् । २९५७ उपदेशिवद्वचनं च स्वरसिद्ध्यर्थम् ॥

३ । ५३ पद्यत्यतदर्थे ९९१ ॥ २९५८ पद्भाव इके चरतावुपसंख्यानम् ॥

३ । ५६ वा घोषमिश्रशब्देषु ९९४ ॥ २९५९ निष्के चोपसंख्यानम् ॥

३ । ५७ उदकस्योदः संज्ञायाम् ९९५ ॥ २९६० संज्ञायामुत्तरपदस्य च ॥

३ । ६१ इको ह्रस्वोऽङ्यो गालवस्य ९९९ ॥ २९६१ इको ह्रस्वत्वमुत्तरपदमात्रे ।

३९६२ सर्वोन्ते हि लोकविज्ञानम् । ३९६३ इयङुवङव्ययप्रतिषेधः । ३९६४ अभ्रूकुंसादीनामिति वक्तव्यम् ॥

**३ । ६६ खित्यनव्ययस्य २९४३** ॥ ३९६५ खिति ह्रस्वाप्रसिद्धिरनजन्तत्वात् । ३९६६ सिद्धं तु ह्रस्वान्तस्य मुम्वचनात् । ३९६७ संनियोगाद्वा ॥

**३ । ६८ इच एकाचोऽम्प्रत्ययवच्च २९९४** ॥ ३९६८ अमः प्रत्ययवदनुदेशे प्रयोजनमात्वपूर्वसवर्णगुणेयङुवङादेशाः । ३९६९ अमः प्रत्ययवदनुदेश आत्वपूर्वसवर्णाप्रसिद्धिरप्रथमात्वात् । ३९७० सामान्यातिदेशे विशेषानतिदेशः । ३९७१ सिद्धं तु द्वितीयैकवचनवद्वचनात् । ३९७२ एकशेषनिर्देशाद्वा ॥

**३ । ७० कारे सत्यागदस्य १००७** ॥ ३९७३ अस्तुसत्यागदस्य कारे । ३९७४ भक्षस्य च्छन्दसि । ३९७५ धेनोर्भव्यायाम् । ३९७६ लोकस्य पृणे । ३९७७ इत्येनभ्यासस्य । ३९७८ भ्राष्ट्राग्न्योरिन्धे । ३९७९ गिलेऽगिलस्य । ३९८० गिलगिले चेति वक्तव्यम् । ३९८१ उष्णभद्रयोः करणे । ३९८२ सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रड्वा ॥

**३ । ७२ रात्रेः कृति विभाषा १००८** ॥ ३९८३ रात्रेरप्राप्ते ॥

**३ । ७३ नलोपो नञः ७५७** ॥ ३९८४ नञो नलोपेऽवक्षेपे तिङ्युपसंख्यानम् ॥

**३ । ७८ सहस्य सः संज्ञायाम् १००९** ॥ ३९८५ सहस्य ह्लोपवचनम् । ३९८६ सादेशे हि स्वरे दोषः ॥

**३ । ७९ ग्रन्थान्ताधिके च १०१०** ॥ ३९८७ ग्रन्थान्ते वचनानर्थक्यमव्ययीभावेन कृतत्वात् ॥

**३ । ८२ वोपसर्जनस्य ८४९** ॥ ३९८८ उपसर्जनस्य वावचने सर्वप्रसङ्गोऽविशेषात् । ३९८९ सिद्धं तु बहुव्रीहिनिर्देशात् ॥

**३ । ८३ प्रकृत्याशिष्यगोवत्सहलेषु ८५०** ॥ ३९९० प्रकृत्याशिष्यगवादिषु ॥

**३ । ८६ चरणे ब्रह्मचारिणि १०१४** ॥ ३९९१ ब्रह्मण्युपपदे समानपूर्वे व्रते कर्मणि चरेर्णिनिर्व्रतलोपश्च ॥

**३ । ८९ दृग्दृश्वतुषु १०१७** ॥ ३९९२ दृग्दृश्वतुषु दृक्ष उपसंख्यानम् ॥

**३ । ९२ विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये ४१८ । ९५ सहस्य सध्रिः ४२२** ॥ ३९९३ अद्रिसध्र्योरन्तोदात्तवचनं कृत्स्वरनिवृत्त्यर्थम् । ३९९४ तत्र च्छन्दसि स्त्रियां प्रतिषेधः (बहुलम्) ॥

**३ । ९३ समः समि ४२१ । ११६ नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ १०३७** ॥ ३९९५ अञ्चतिनह्यादिषु क्विब्ग्रहणानर्थक्यं यस्मिन्विधिस्तदादावल्ग्रहणे ॥

**३ । ९७ द्व्यन्तरुपसर्गेभ्योऽप ईत् ९४१** ॥ ३९९६ समाप ईत्त्वप्रतिषेधः । ३९९७ ईत्त्वमनवर्णादिति वक्तव्यम् ॥

**३ । १०१ कोः कत्तत्पुरुषेऽचि १०२७** ॥ ३९९८ कद्भावे त्रावुपसंख्यानम् ॥

**३ । १०९ पृषोदरादीनि यथोपदिष्टम् १०३४** ॥ ३९९९ दिक्शब्देभ्यस्तीरस्य तारभावे वा । ४००० वाचो वादे डत्वं वलभावश्चोत्तरपदस्येञि । ४००१ षष उत्त्वं दतृदशसूत्तरपदादेष्टुत्वं च । ४००२ धासु वा । ४००३ दुरो दाशनाशदभध्येषु । ४००४ स्वरो रोहतौ छन्दसि ॥

३ । १२१ इको वहेऽपीलोः २०४३ ॥ ४००५ अपील्वादीनामिति वक्तव्यम् ॥

३ । १२२ उपसर्गस्य घञ्यमनुष्ये बहुलम् १०४४ ॥ ४००६ अमनुष्यादाविति वक्तव्यम् । ४००७ सादकारयोः कृत्रिमे । ४००८ प्रतिवेशादीनां विभाषा ॥

३ । १३९ संप्रसारणस्य १००४ ॥ ४००९ इको ह्रस्वात्संप्रसारणदीर्घत्वं विप्रतिषेधेन ॥

४ । १ अङ्गस्य २०० ॥ ४०१० अङ्गस्येति स्थानषष्ठी चेत्प्रश्चम्यन्तस्य चाधिकारः । ४०११ अवयवषष्ठ्यादीनां चाप्रसिद्धिः । ४०१२ सिद्धं तु परस्परं प्रत्यङ्गप्रत्ययसंज्ञाभावात् । ४०१३ संबन्धषष्ठीनिर्देशश्च । ४०१४ अङ्गाधिकारस्य प्रयोजनं संप्रसारणदीर्घत्वे । ४०१५ नाम्सनोश्च । ४०१६ लिङ्यत्त्वे । ४०१७ अतो भिस ऐस्त्वे । ४०१८ लुङादिष्वडाटौ । ४०१९ इयङुवङ्युष्मदस्मत्तातङामिनुडानेमुक्केह्रस्वयिदीर्घमितत्वानि । ४०२० अर्थवद्ग्रहणप्रत्ययग्रहणाभ्यां सिद्धम् ॥

४ । २ हलः २५५९ ॥ ४०२१ अण्प्रकरणादृकारस्याप्राप्तिः । ४०२२ इग्ग्रहणस्य चाण्विशेषणत्वात् ॥

४ । ३ नामि २०९ ॥ ४०२३ नामि दीर्घ आमि चेत्स्यात्कृते दीर्घे न नुड्भवेत् । ४०२४ वचनाद्यत्र तन्नास्ति । ४०२५ नोपधायाश्च चर्मणाम् ॥

४ । १२-१३ इन्हन्पूषार्यम्णां शौ ३५६ । सौ च ३५७ ॥ ४०२६ हनः क्वावुपधादीर्घत्वप्रसङ्गः । ४०२७ नियमवचनात्सिद्धम् । ४०२८ नियमवचनात्सिद्धमिति चेत्सर्वनामस्थानप्रकरणे नियमवचनादन्यत्रानियमः । ४०२९ दीर्घविधिर्य इहेन्प्रभृतीनां तं विनियम्य सुटीति सुविद्वान् । ४०३० शौ नियमं पुनरेव विदध्यात् । ४०३१ भ्रूणहनीति तथास्य दुष्येत् । ४०३२ शास्मि निवर्त्य सुटीत्यविशेषे शौ नियमं कुरु वाप्यसमीक्ष्य । ४०३३ दीर्घविधेरुपधानियमान्मे हन्त यि दीर्घविधौ च न दोषः ॥ ४०३४ सुट्यपि प्रकृतेऽनवकाशः शौ नियमोऽप्रकृतप्रतिषेधे । ४०३५ यस्य हि शौ नियमः सुटि नैतत्तेन न तत्र भवेद्विनियम्यम् ॥

४ । १४ अत्वसन्तस्य चाधातोः ४२९ ॥ ४०३६ अत्वसन्तस्य दीर्घत्वे पित उपसंख्यानम् ॥

४ । १६ अज्झनगमां सनि २६१४ ॥ ४०३७ गमेर्दीर्घत्व इङ्ग्रहणम् । ४०३८ अग्रहणे अनादेशस्यापि दीर्घप्रसङ्गः । ४०३९ न वा छन्दस्यनादेशस्यापि दीर्घत्वदर्शनादिङ्ग्रहणानर्थक्यम् । ४०४० सनि दीर्घ उपधाधिकारश्चेद्व्यञ्जनप्रतिषेधः ॥

४ । १९ च्छ्वोः शूडनुनासिके च २५६१ ॥ ४०४१ शूट्त्वे क्विदधिकारश्चेच्छः षत्वम् । ४०४२ तुक्प्रसङ्गश्च । ४०४३ निवृत्ते दिव ऊड्भावः । ४०४४ तदर्थं तपरः कृतः ॥

४ । २२ असिद्धवदत्राभात् २१८३ ॥ ४०४५ अत्रग्रहणं विषयार्थम् । ४०४६ प्रयोजनं शास्त्वं धित्वे । ४०४७ हिलोप उत्त्वे । ४०४८ तास्तिलोपेण्यणादेशा अडाड्विधौ । ४०४९ अनुनासिकलोपो हिलोपाल्लोपयोर्जभावश्च । ४०५० संप्रसारणमवर्णलोपे । ४०५१ रेभावआल्लोपे । ४०५२ उत्तु कृञः कथमोर्विनिवृत्तौ । ४०५३ णेरपि चेटि कथं विनिवृत्तिः । ४०५४ अब्रुवतस्तव योगमिमं स्याल्लुक् चिणो नु कथं न तरस्य ॥ ४०५५ चं भगवान्कृतवांस्तु तदर्थं तेन भवेदिटि णेर्विनिवृत्तिः । ४०५६ म्वोरपि ये च तथाप्यनुवृत्तौ । ४०५७ चिण्लुकि च क्ङित एव हि लुक्स्यात् ॥ ४०५८ सिद्धं वसुप्रसारणमज्विधौ । ४०५९

बहिरङ्गलक्षणत्वादसिद्धत्वाच्च । ४०६० समानाश्रयवचनात्सिद्धम् । ४०६१ ह्रस्वयलोपाल्लो-पाश्चायादेशे ल्यपि । ४०६२ वुग्युटावुवङ्यणोः । ४०६३ प्राग्भादिति चेच्छुनामघोनाभृगुणेत्युप-संख्यानम् । ४०६४ आभादिति चेद्रसुप्रसारणयलोपप्रस्थादीनां प्रतिषेधः ॥

४ । ३४ अनिदितां हल उपधायाः क्ङिति ४१५ ॥ ४०६५ अनिदितां नलोपे लङ्गि-कम्प्योरुपतापशरीरविकारयोरुपसंख्यानम् । ४०६६ बृंहेरच्यनिटि । ४०६७ रञ्जेर्णौ मृगर-मणे । ४०६८ घिनुणि च । ४०६९ रजकरजनरजःसूपसंख्यानम् ॥

२ । ३४ शास इदङ्हलोः ३४८ ॥ ४०७० शास इत्व आशासः क्वौ ॥

४ । ३७ अनुदात्तोपदेश वनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति २४२८ ॥ ४०७१ अनुदात्तोपदेशेऽनुनासिकलोपो ल्यपि च । ४०७२ वामः ॥

४ । ४० गमः क्वौ २९८६ ॥ ४०७३ गमादीनामिति वक्तव्यम् । ४०७४ ऊङ् च ॥

४ । ४२ जनसनखनां सञ्झलोः २५०४ ॥ ४०७५ सनोतेरनुदात्तलोपादात्त्वं विप्रति-षेधेन ॥

४ । ४६ आर्धधातुके २३०७ ॥ ४०७६ अतो लोपो यलोपश्च णिलोपश्च प्रयोजनम् । ४०७७ आल्लोप ईत्त्वमेत्त्वं च चिण्वद्भावश्च सीयुटि ॥

४ । ४७ भ्रस्जो रोपधयोरमन्यतरस्याम् २५३५ ॥ ४०७८ भ्रस्जादेशात्संप्रसारणं विप्रतिषेधेन । ४०७९ रसोर्विवचने सिचि वृद्धेर्भ्रस्जादेशः ॥

४ । ४८ अतो लोपः २३०८ ॥ ४०८० ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घत्वेभ्यः पूर्वविप्रतिषिद्धम् ॥

४ । ४९ यस्य हलः २६३१ ॥ ४०८१ यलोपे वर्णग्रहणं चेद्धात्वन्तस्य प्रतिषेधः । ४०८२ संघातग्रहणं चेत्स्वस्य विभाषायां दोषः । ४०८३ आदेः परवचनात्सिद्धम् ॥

४ । ५२ निष्ठायां सेटि ३०५७ ॥ ४०८४ निष्ठायां सेड्ग्रहणमनिटि प्रतिषेधार्थम् । ४०८५ निष्ठायां सेड्ग्रहणमनिटि प्रतिषेधार्थमिति चेत्तात्सिद्धमनिडभावात् । ४०८६ एकाचो हि प्रतिषेधः । ४०८७ इड्भावार्थं तु तन्निमित्तत्वाल्लोपस्य । ४०८८ अवचने हि णिलोप इट्प्रतिषेधप्रसङ्गः । ४०८९ वृधिरमिशृधीनामुपसंख्यानं सार्वधातुकत्वात् ॥

४ । ५५ अयामन्ताल्वाय्येत्न्विष्णुषु २३११ ॥ ४०९० क्त्वाविटि णेर्गुणवचनम् । ४०९१ इत्नौ प्रत्ययान्तरकरणम् । ४०९२ अयादेशे चोपसंख्यानम् ॥

४ । ५६ ल्यपि लघुपूर्वस्य ३३३६ ॥ ४०९३ ल्यपि लघुपूर्वस्येति चेद्व्यञ्जनान्तेषूपसंख्यानम् ४०९४ अल्लोपे च गुरुपूर्वात्प्रतिषेधः । ४०९५ ल्यपि लघुपूर्वादिति वचनात्सिद्धम् ॥

४ । ५७ विभाषापः ३३३७ ॥ ४०९६ इङादेशस्य प्रतिषेधो वक्तव्यः । ४०९७ आपः सानुबन्धकनिर्देशादिङि सिद्धम् ॥

४ । ६२ स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च २७५७ ॥ ४०९८ वृद्धिश्चिण्वद्युक्च हन्तेश्च घत्वं दीर्घश्चोक्तो यो मितां वा चिणीति । ४०९९ इड्वासिद्धस्तेन मे लुप्यते णिर्नित्यश्चायं वल्निमित्तो विघाती । ४१०० चिण्वद्भाव उपदेशवचनमृकारगुणबलीयस्त्वात् । ४१०१ वधिभावात्सीयुटि चिण्वद्भावो विप्रतिषेधेन । ४१०२ हनिणिङादेशप्रतिषेधश्च । ४१०३ अङ्गस्येति तु प्रकरणादाङ्गशास्त्रातिदेशात्सिद्धम् ॥

**४ । ६४ आतो लोप इटि च २३७२** ॥ ४१०४ इड्ग्रहणमक्किदर्थम् । ४१०५ सार्वधातुके वादीत्यार्धधातुकाधिकारादुपसंख्यानम् ॥

**४ । ६६ घुमास्थागापाजहातिसां हलि २४६२** ॥ ४१०६ ईत्वे वकारप्रतिषेधो घृतं घृतपावान इति दर्शनात् ॥

**४ । ७४ न माङ्योगे २२२८** ॥ ४१०७ अजादीनामटा सिद्धम् । ४१०८ वृद्ध्यर्थमिति चेदटः । ४१०९ अस्वपो हसतीत्यत्र । ४११० धातौ वृद्धिमटः स्मरेत् ॥ ४१११ पररूपं गुणे नाटः । ४११२ ओमाङोरुसि तत्समम् । ४११३ छन्दोर्थं बहुलं दीर्घम् । ४११४ इणस्त्यो-रन्तरङ्गतः ॥

**४ । ७७ अचि श्नुधातुभ्रुवां य्वोरियङुवङौ २७१** ॥ ४११५ इयङादिप्रकरणे तन्वा-दीनां छन्दसि बहुलम् ॥

**४ । ८२ एरनेकाचोऽसंयोगपूर्वस्य २७२** ॥ ४११६ यणादेशः स्वरपदपूर्वोपधस्य च । ४११७ असंयोगपूर्वे ह्यनिष्टप्रसङ्गः ॥

**४ । ८४ वर्षाभ्वश्च २८२** ॥ ४११८ वर्षादृन्कारपुनःपूर्वस्य भुव इति वक्तव्यम् ॥

**४ । ८७ हुश्नुवोः सार्वधातुके २३८७** ॥ ४११९ हुभ्रुग्रहणानर्थक्यमन्यस्याभावात् । ४१२० यङ्लुगर्थम् । ४१२१ यङ्लुगर्थमिति चेदार्धधातुकत्वात्सिद्धम् ॥

**४।८९ ऊदुपधाया गोहः २३६४** ॥ ४१२२ गोहिग्रहणं विषयार्थम् । ४१२३ अयादेशप्र-तिषेधार्थं च । ४१२४ ह्रस्वादेशे ह्ययादेशप्रसङ्ग ऊत्त्वस्यासिद्धत्वात् ॥

**४ । ९० दोषो णौ २६०४** ॥ ४१२५ दोषिग्रहणे च ॥

**४ । ९३ चिण्णमुलोर्दीर्घोऽन्यतरस्याम् २७६२** ॥ ४१२६ चिण्णमुलोर्णिव्यपेतानां यङ्लोपे च । ४१२७ चिण्णमुलोर्णिव्यपेतानां यङ्लोपे चान्तरङ्गलक्षणत्वात्सिद्धम् ॥

**४ । ९६ छादेर्घेऽद्व्युपसर्गस्य ३२९७** ॥ ४१२८ अद्विप्रभृत्युपसर्गस्येति वक्तव्यम् । ४१२९ न वा एष लोके संप्रत्ययः ॥

**४ । १०० घसिभसोर्हलि च ३५९०** ॥ ४१३० हल्ग्रहणमनर्थकमन्यत्रापि दर्शनात् ॥

**४ । १०१ हुझल्भ्यो हेर्धिः २४२५** ॥ ४१३१ हेर्धित्वे हलधिकारादिटोऽप्रतिषेधः ॥

**४ । १०४ चिणो लुक् २३२९** ॥ ४१३२ चिणो लुकि तग्रहणम् । ४१३३ चिणो लुकि त-ग्रहणानर्थक्यं संघातस्याप्रत्ययत्वात् । ४१३४ तलोपस्य चासिद्धत्वात् । ४१३५ कार्यकृतत्वाद्वा ॥

**४ । १०६ उतश्च प्रत्ययादसंयोगपूर्वात् २३३४** ॥ ४१३६ उतश्च प्रत्ययाच्छन्दो-वावचनम् । ४१३७ उत्तरार्थं च ॥

**४ । ११० अत उत्सार्वधातुके २४६७** ॥ ४१३८ स्यान्तस्य प्रतिषेधो वक्तव्यः । ४१३९ कृञ उत्त्वे उकारान्तनिर्देशात्स्यान्तस्याप्रतिषेधः । ४१४० अनुप्रयोगे तु भुवास्त्यबाधनं स्मरन्ति कर्तुर्वचनान्मनीषिणः । ४१४१ लोपे द्विर्वचनासिद्धिः । ४१४२ स्थानिवदिति चेत्कृते भवेद्द्वित्वे । ४१४३ नैवं सिध्यति कस्मात्प्रत्यङ्गत्वाद्भवेद्धि पररूपम् । ४१४४ तस्मिंश्च कृते लोपः । ४१४५ दीर्घत्वं बाधकं भवेत्तत्र ॥

**४ । ११४ इद्दरिद्रस्य २४८२** ॥ ४१४६ दरिद्रातेरार्धधातुके लोपः । ४१४७ सिद्धश्च त्ययाविधौ । ४१४८ वाद्यतन्याम् ॥

**४ । १२० अत एकहल्मध्येऽनादेशादेर्लिटि २२६० ॥** ४१४९ षकारणकारादेशादेरेत्त्ववचनं लिटि । ४१५० फलिभजिग्रहणं तु ज्ञापकमभ्यासादेशासिद्धत्वस्य । ४१५१ प्रथमतृतीयादीनामादेशादित्वादेत्त्वाभावः । ४१५२ न वा शसिदयोः प्रतिषेधो ज्ञापको रूपाभेद एत्वविज्ञानस्य । ४१५३ दम्भ एत्त्वम् । ४१५४ नलोपस्यासिद्धत्वात् । ४१५५ नशिमन्योरलिटयेत्त्वम् । ४१५६ छन्दस्यमिपचोरपि । ४१५७ अनेशं मेनकेत्येतद्वयेमानं लिङि पेचिरन् ॥ ४१५८ यजायेजे वपावेपे दम्भ एत्त्वमलक्षणम् । ४१५९ भसोरत्त्वे तकारेण ज्ञाप्यते त्वेत्वशासनम् ॥

**४ । १२१ थलि च सेटि २२६१ ॥** ४१६० थल्ग्रहणमक्तिदर्थम् ॥

**४ । १२३ राधो हिंसायाम् २५३२ ॥** ४१६१ राधादिषु स्थानिनिर्देशः ॥

**४ । १२७-१२८ अर्वणस्त्रसावनञः ३६४ । मघवा बहुलम् ३६० ॥** ४१६२ अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत् । ४१६३ मतुब्वन्योर्विधानाच्च । ४१६४ छन्दस्युभयदर्शनात् ॥

**४ । १३० पादः पत् ४१४ ॥** ४१६५ पाद उपधाह्रस्वत्वम् । ४१६६ आदेशे हि सर्वादेशप्रसङ्गः । ४१६७ न वा निर्दिश्यमानस्यादेशत्वात् । ४१६८ प्रयोजनं सुतिङादेशे । ४१६९ ल्यब्भावे च । ४१७० त्रिचतुर्युष्मदस्मत्त्यदादिविकारेषु च । ४१७१ उदः पूर्वत्वे ॥

**४ । १३२ वाह ऊठ् ३२९ ॥** ४१७२ वाह ऊड्वचनानर्थक्यं संप्रसारणेन कृतत्वात् । ४१७३ गुणः प्रत्ययलक्षणत्वात् । ४१७४ एज्ग्रहणाद्वृद्धिः ॥

**४ । १३५ षपूर्वहन्धृतराज्ञामणि ११६० ॥** ४१७५ षपूर्वादीनां पुनर्वचनमल्लोपार्थम् । ४१७६ अवधारणे ह्यन्यत्र प्रकृतिभाव उपधालोपप्रसङ्गः ॥

**४ । १४० आतो धातोः २४० ॥** ४१७७ आतोऽनापः ॥

**४ । १४१ मन्त्रेष्वाङ्यादेरात्मनः ३५५४ ॥** ४१७८ मन्त्रेष्वात्मनः प्रत्ययमात्रप्रसङ्गः । ४१७९ छान्दसत्वात्सिद्धम् । ४१८० आदिग्रहणानर्थक्यं चाकारप्रकरणात् ॥

**४ । १४३ टेः ३१६ ॥** ४१८१ अभस्योपसंख्यानम् । ४१८२ डित्यभस्याप्यनुबन्धकरणसामर्थ्यात् ॥

**४ । १४४ नस्तद्धिते ६७९ ॥** ४१८३ नकारान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकुथुमितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम् । ४१८४ चर्मणः कोशे । ४१८५ अश्मनो विकारे । ४१८६ शुनः संकोचे । ४१८७ अव्ययानां च । ४१८८ सायंप्रातिकाद्यर्थम् ॥

**४ । १४८ यस्येति च ३११ ॥** ४१८९ यस्येत्यादौ श्यां प्रतिषेधः । ४१९० इयङुवङ्भ्यां लोपो विप्रतिषेधेन । ४१९१ गुणवृद्धी च । ४१९२ न वेयङुवङादेशस्यान्याविषये वचनात् । ४१९३ तस्मात्तत्र गुणवृद्धिविषये प्रतिषेधः ॥

**४ । १४९ सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः ४९९ ॥** ४१९४ सूर्यादीनामणन्तेऽप्रसिद्धिरङ्गान्यत्वात् । ४१९५ सिद्धं तु स्थानिवत्प्रतिषेधात् । ४१९६ उपधाग्रहणानर्थक्यं च । ४१९७ विषयपरिगणनं च । ४१९८ सूर्यमत्स्ययोर्ङ्याम् । ४१९९ सूर्यागस्त्ययोश्छे च । ४२०० तिष्यपुष्ययोर्नक्षत्राणि । ४२०१ अन्तिकस्य तसि कादिलोप आद्युदात्तत्वं च

४२०२ तमे तादेश । ४२०३ तसीत्येष न वक्तव्यो दृष्टो दाशतयेऽपि हि । ४२०४ यौ लोपोऽन्तिषदित्यत्र । ४२०५ तथाद्यौ येऽन्त्यथर्वसु ॥

**४ । १५४ तुरिष्ठेमेयःसु २००८** ॥ ४२०६ तुः सर्वलोपविज्ञानमन्त्यस्य वचनानर्थक्यात् । ४२०७ विजयिष्ठकरिष्ठयोर्गुणदर्शनात् ॥

**४ । १५५ टेः १७८६** ॥ ४२०८ णाविष्ठवत्प्रातिपदिकस्य । ४२०९ पुंवद्भावरभावटिलोपयणादिपरार्थम् । ४२१० 'णाविष्ठवत्प्रातिपदिकस्य पुंवद्भावरभावटिलोपयणादिपरप्रादिविन्मतोर्लुक्कन्विध्यर्थम्' इति भारद्वाजीयाः ॥

**४ । १६१ र ऋतो हलादेर्लघोः १७८९** ॥ ४२११ पृथुमृदुकृशभृशदृढपरिवृढानामिति वक्तव्यम् ॥

**४ । १६३ प्रकृत्यैकाच् २०१०** ॥ ४२१२ प्रकृत्यैकाजिष्ठेमेयःसु चेदेकाच उच्चारणसामर्थ्यादवचनात्प्रकृतिभावः । ४२१३ विन्मतोस्तु लुगर्थम् । ४२१४ प्रकृत्याके राजन्यमनुष्ययुवानः ॥

**४ । १७० न मपूर्वोऽपत्येऽवर्मणः ११५७** ॥ ४२१५ मपूर्वात्प्रतिषेधे वा हितनाम्नः ।

**४ । १७१ ब्राह्मोऽजातौ ११५८** ॥ ४२१६ ब्राह्मस्याजातौ लोपार्थं वचनम् । ४२१७ तत्राप्राप्तविधाने प्राप्तप्रतिषेधः । ४२१८ न वा पर्युदाससामर्थ्यात् ॥

**४ । १७४ दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि ११४५** ॥ ४२१९ भ्रौणहत्ये तत्वनिपातनानर्थक्यं सामान्येन कृतत्वात् । ४२२० ज्ञापकं तु तद्धिते तत्वप्रतिषेधस्य । ४२२१ ऐक्ष्वाकस्य स्वरभेदान्निपातनं पृथक्त्वेन । ४२२२ एकश्रुत्या निर्देशात्सिद्धम् । ४२२३ मैत्रेयें ढञि यादिलोपनिपातनम् । ४२२४ हिरण्मये यलोपवचनम् । ४२२५ हिरण्ययस्य च्छन्दसि मलोपवचनात्सिद्धम् ॥

इति षष्ठोऽध्यायः ।

---

## सप्तमोऽध्यायः ।

**१ । १ युवोरनाकौ १२४७** ॥ ४२२६ युवोरनाकाविति चेद्धातुप्रतिषेधः । ४२२७ भुज्व्यादीनां च । ४२२८ अनुनासिकपरत्वात्सिद्धम् । ४२२९ तत्र ङीब्नुमोः प्रतिषेधः । ४२३० धात्वन्तस्य च । ४२३१ षिड्डिद्ग्रहणं तु ज्ञापकमगित्कार्याभावस्य । ४२३२ न वा षित्करणं ङीष्विधानार्थम् । ४२३३ टित्करणमनुपसर्जनार्थम् । ४२३४ विप्रतिषेधात्तु टापो बलीयस्त्वम् । ४२३५ धात्वन्तस्य चार्थवत्त्वात् । ४२३६ नुम्विधौ झल्ग्रहणम् । ४२३७ लिङ्गविशिष्टप्रतिषेधार्थम् । ४२३८ न वा विभक्तौ लिङ्गविशिष्टाग्रहणम् । ४२३९ प्रयोजनं शुनः स्वरे । ४२४० यूनः संप्रसारणे । ४२४१ उगिदचां नुम्विधौ । ४२४२ अनडुहश्चाम्विधौ । ४२४३ पथिमथोरात्त्वे । ४२४४ पुंसोऽसुङ्विधौ । ४२४५ सख्युर्णित्त्वानङौ । ४२४६ भवद्भगवदघवतामोद्भावे । ४२४७ सिद्धं तु युवोरनुनासिकत्वात् ॥

**१ । २ आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ४७९** ॥ ४२४८ आयनादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थम् । ४२४९ न वा क्वचिच्चित्करणादुपदेशिवद्वचनानर्थक्यम् ।

४२५० तत्रोणादिप्रतिषेधः । ४२५१ धातोर्वैयङ्कचनात् । ४२५२ प्रातिपदिकविज्ञानाच्च पाणिनेः सिद्धम् ॥

१ । ३ ञ्रोऽन्तः २१६९ ॥ ४२५३ ञादेशे धात्वन्तप्रतिषेधः । ४२५४ प्रत्ययाधिकारात्सिद्धम् । ४२५५ प्रत्ययाधिकारात्सिद्धमिति चेदनादेशवचनम् । ४२५६ असमासनिर्देशात्सिद्धम् । ४२५७ तत्र शयान्ता इत्यनकारान्तत्वादङ्गस्याद्भावप्रतिषेधः । ४२५८ सिद्धमनानन्तर्यादनकारान्तेनाद्भावानिवृत्तिः । ४२५९ तत्र रुटि संनियोगवचनात्सिद्धम् ॥

६ शीङो रुट् २४४२ ॥ ४२६० रुटि दृशिगुणप्रतिषेधः । ४२६१ पूर्वान्ते शीङो गुणविधिः । ४२६२ ञादेशादाङ्डेटि । ४२६३ न वा नित्यत्वादाटः । ४२६४ अन्तरङ्गलक्षणत्वाच्च ॥

१ । ९ अतो भिस ऐस् २०३ ॥ ४२६५ एत्त्वं भिसि परत्वाच्चेदत ऐस्क भविष्यति । ४२६६ कृत ऐत्त्वे भौतपूर्व्यात् । ४२६७ ऐस्तु नित्यस्तथा सति ॥

१ । १४ सर्वनाम्नः स्मै २१५ ॥ ४२६८ अश एकादिष्टात्स्मायादीनामुपसंख्यानम् । ४२६९ न वा बहिरङ्गलक्षणत्वात् ॥

१ । २१ अष्टाभ्य औश् ३७२ ॥ ४२७० औशयौ ॥ ४२७१ अस्तु लुक्तत्र । ४२७२ षड्भ्योऽप्येवं प्रसज्यते । ४२७३ अपवादः । ४२७४ यस्य विषये । ४२७५ यो वा तस्मादनन्तरः ॥ ४२७६ आत्वं यत्र तु तत्रौश्त्वम् । ४२७७ तथा ह्यस्य ग्रहः कृतः ॥

१ । २३ स्वमोर्नपुंसकात् ३११ ॥ ४२७८ स्वमोर्लुक् त्यदादिभ्यश्च । ४२७९ कृते ह्यत्वे न लुग्भवेत् । ४२८० शिशीलुग्मुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदार्थे प्रतिषेधः । ४२८१ सिद्धं तु प्रकृतार्थविशेषणत्वात् । ४२८२ अस्थ्यादिषु शब्दग्रहणम् ॥

१ । २५ अड्डतरादिभ्यः ३१५ ॥ ४२८३ अद्भावे पूर्वसवर्णप्रतिषेधः । ४२८४ सिद्धमनुनासिकोपधत्वात् । ४२८५ टुक्करणाद्वा । ४२८६ डित्करणाद्वा ॥

१ । २६ नेतराच्छन्दसि ३५५५ ॥ ४२८७ इतराच्छन्दसि प्रतिषेध एकतरात्सर्वत्र । ४२८८ नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेन ॥

१ । २७ युष्मदस्मद्भ्यां ङसोऽश् ३९९ ॥ ४२८९ ङस अादेशे शित्करणानर्थक्यमकारस्याकारवचनानर्थक्यात् । ४२९० अर्थवत्त्वादेशे लोपार्थम् । ४२९१ तस्माच्छित्करणम् ॥

१ । ३३ साम आकम् ४०० ॥ ४२९२ साम्ग्रहणं यथागृहीतस्यादेशवचनात् । ४२९३ न वा द्विपर्यन्तानामकारवचनादामि सकाराभावः । ४२९४ सुट्प्रतिषेधस्त्वादेशे लोपविज्ञानात् । ४२९५ न वा टिलोपवचनादादेशे टाप्प्रतिषेधार्थम् । ४२९६ न वा लिङ्गाभावाट्टिलोपवचनानर्थक्यम् । ४२९७ तस्मात्सुट्प्रतिषेधः ॥

१ । ३६ विदेः शतुर्वसुः ३१०५ ॥ ४२९८ विदेर्वसोः कित्त्वम् ॥

१ । ३७ समासेऽनञ्पूर्वे क्त्वो ल्यप् ३३३२ ॥ ४२९९ ल्यबादेश उपदेशिवद्वचनम् । ४३०० अनादिष्टार्थम् । ४३०१ बहिरङ्गलक्षणत्वात् । ४३०२ स्नात्वाकालकादिषु च प्रतिषेधः । ४३०३ तदन्तनिर्देशात्सिद्धम् । ४३०४ समासनिपातनाद्वा । ४३०५ अनञो वा परस्य ॥

१ । ३९ सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ३५६१ ॥ ४३०६ सुपां च

सुपो भवन्तीति वाच्यम् । ४३०७ तिङां च तिङो भवन्तीति वाच्यम् । ४३०८ इयाडियाजीकाराणामुपसंख्यानम् । ४३०९ आड्याजयारां चोपसंख्यानम् ॥

१ । ४० अमो मश् ३५६२ ॥ ४३१० अमो मश्च मकारस्य । ४३११ वचनादन्यबाधनम् । ४३१२ द्विमकार इडप्रक्के । ४३१३ यकारादौ न दुष्यति ॥

१ । ५१ अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि २६६२ ॥ ४३१४ अश्ववृषयोर्मैथुनेच्छायाम् । ४३१५ क्षीरलवणयोर्लालसायाम् । ४३१६ सर्वप्रातिपदिकेभ्यो लालसायामिति । ४३१७ वक्तव्यं दध्यस्यति मध्वस्यतीत्येवमर्थम् । ४३१८ सुग्वक्तव्यो दधिस्यति मधुस्यतीत्येवमर्थम् ॥

१ । ५८ इदितो नुम्धातोः २२६२ ॥ ४३१९ नुम्विधावुपदेशिवद्वचनं प्रत्ययविध्यर्थम् । ४३२० इतरथा ह्यनकारे प्रत्ययः । ४३२१ तत्रायथेष्टप्रसङ्गः । ४३२२ धातुग्रहणसामर्थ्याद्वा तदुपदेशे नुम्विधानम् ॥

१ । ५९ शे मुचादीनाम् २५४२ ॥ ४३२३ शे तृम्फादीनाम् । ४३२४ लुप्तनकारत्वात् ॥

१ । ६८ न सुदुर्भ्यां केवलाभ्याम् ३३०७ ॥ ४३२५ सुदुरोः केवलग्रहणमन्योपसर्गप्रतिषेधार्थम् ॥

१ । ६९ विभाषा चिण्णमुलोः २७६५ ॥ ४३२६ चिण्णमुलोरनुपसर्गस्य ॥

१ । ७० उगिदचां सर्वनामस्थानेऽधातोः ३६१ ॥ ४३२७ उगित्यञ्चतिग्रहणात्सिद्धमधातोः ॥

१ । ७२ नपुंसकस्य झलचः ३१४ ॥ ४३२८ झलचो नुम्विधावुगित्प्रतिषेधः । ४३२९ विप्रतिषेधात्सिद्धम् । ४३३० पुनःप्रसङ्ग इति चेदमादिभिस्तुल्यम् । ४३३१ तत्र बहूर्जि प्रतिषेधः । ४३३२ अन्त्यात्पूर्वं नुममेके ॥

१ । ७३ इकोऽचि विभक्तौ ३२० ॥ ४३३३ इकोऽचि व्यञ्जने मा भूत् । ४३३४ अस्तु लोपः । ४३३५ स्वरः कथम् । ४३३६ स्वरो वै श्रूयमाणेऽपि । ४३३७ लुप्ते किं न भविष्यति ॥ ४३३८ इकोऽचि विभक्तावज्ग्रहणं नुम्नुटोर्विप्रतिषेधार्थम् । ४३३९ इतरथा हि नुमो नित्यनिमित्तत्वान्नुडभावः । ४३४० उत्तरार्थं च ॥

१ । ७४ तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ३२१ ॥ ४३४१ पुंवदिति नुम्प्रतिषेधश्चेद्गुणनाभावनुडौत्त्वप्रतिषेधः । ४३४२ ह्रस्वाभावार्थं च । ४३४३ अर्थातिदेशात्सिद्धम् । ४३४४ तद्धितलुक्प्रतिषेधश्च । ४३४५ न वा समानायामाकृतौ भाषितपुंस्कविज्ञानात् ॥

१ । ८२ सावनडुहः ३३२ ॥ ४३४६ अनडुहः सावाम्प्रतिषेधो नुमोऽनवकाशत्वात् । ४३४७ न वावर्णोपधस्य नुम्वचनात् । ४३४८ पुनः प्रसङ्गविज्ञानाद्वा सिद्धम् । ४३४९ यथात्वादिषु द्विर्वचनम् ॥

१ । ८४ दिव औत् ३३६ ॥ ४३५० दिव औत्त्वे धातुप्रतिषेधः । ४३५१ अधात्वधिकारात्सिद्धम् । ४३५२ अधात्वधिकारात्सिद्धमिति चेन्नपुंसके दोषः ॥

१ । ८६ इतोऽत्सर्वनामस्थाने ३६६ ॥ ४३५३ इतोऽद्वचनमाकारप्रकरणात् । ४३५४ षपूर्वार्थं तु ॥

**१ । ८९ पुंसोऽसुङ् ४३६** ॥ ४३५५ असुङ्ग्युपदेशिवद्वचनं स्वरसिद्ध्यर्थं बहिरङ्गलक्षणत्वात् ॥

**१ । ९० गोतो णित् २८४** ॥ ४३५६ गोतः सर्वनामस्थाने णित्कार्यातिदेशः । ४३५७ सर्वनामस्थाने णित्त्ववचने ह्यसंप्रत्ययः षष्ठ्यनिर्देशात् । ४३५८ तपरकरणमनर्थकं स्थानिवत्प्रतिषेधात् । ४३५९ इतरथा हि संबुद्धिजसोः प्रतिषेधः ॥

**१ । ९५-९६ तृज्वत्क्रोष्टुः २७४ । स्त्रियां च ३०५** ॥ ४३६० तृज्वत्स्त्रियां विभक्तौ चेत्क्रोष्ट्रीभक्तिर्न सिध्यति । ४३६१ ईकारे तन्निमित्तः सः । ४३६२ गौरादिषु न पठ्यते ॥ ४३६३ तेनैव भावनं चेत्स्यादनिष्टोऽपि प्रसज्यते । ४३६४ तृज्वदिति शास्त्रातिदेशश्चेद्यथा स्थिगि तद्वत् । ४३६५ तत्र रपरवचनम् । ४३६६ रूपातिदेश इति चेत्सर्वादेशप्रसङ्गः । ४३६७ सिद्धं तु रूपातिदेशात् । ४३६८ सिद्धं तु प्रत्ययग्रहणे यस्मात्स विहितस्तदादितदन्तविज्ञानात् । ४३६९ आन्तरतम्याच्च सिद्धम् । ४३७० तृज्वद्वचनमनर्थकं तृज्विषये तृचो मृगवाचित्वात् । ४३७१ तुनो निवृत्त्यर्थमिति चेत्सिद्धं यथान्यत्रापि । ४३७२ वावचनानर्थक्यं च स्वभावसिद्धत्वात् । ४३७३ गुणवृद्ध्यौत्त्वतृज्वद्भावेभ्यो नुम्पूर्वविप्रतिषिद्धम् । ४३७४ नुमचिरतृज्वद्भावेभ्यो नुट् । ४३७५ न वा नुड्विषये रप्रतिषेधात् । ४३७६ इतरथा हि सर्वापवादः । ४३७७ तस्मान्नुड्विषये रप्रतिषेधः ॥

**१ । ९८ चतुरनडुहोरामुदात्तः ३३१** ॥ ४३७८ आमनडुहः स्त्रियां वा ॥

**१ । १००-१०२ ऋत इद्धातोः २३९० । उपधायाश्च २५७१ । उदोष्ठ्यपूर्वस्य २४९४** ॥ ४३७९ इत्त्वोत्त्वाभ्यां गुणवृद्धी विप्रतिषेधेन ॥

**२ । १ सिचि वृद्धिः परस्मैपदेषु २२९७** ॥ ४३८० सिचि वृद्धावोकारप्रतिषेधः । ४३८१ ओकाराद्वृद्धिर्विप्रतिषेधेन । ४३८२ ओकाराद्वृद्धिर्विप्रतिषेधेनेति चेदोत्त्वाभावः । ४३८३ पुनः प्रसङ्गविज्ञानाद्वा सिद्धम् । ४३८४ यथा प्रसारणादिषु द्विर्वचनम् । ४३८५ सौढामित्रौ बहिरङ्गलक्षणत्वात्सिद्धम् ॥

**२ । ३ वदव्रजहलन्तस्याचः २२६७** ॥ ४३८६ हल्ग्रहणमिटि प्रतिषेधार्थम् । ४३८७ न वानन्तरप्रतिषेधात् । ४३८८ तच्चानन्त्यार्थम् । ४३८९ अन्त्यस्य वचनानर्थक्यम् । ४३९० अतो विभाषार्थमिति चेत्सिद्धं वृद्धेर्लोपबलीयस्त्वात् । ४३९१ एकाचस्तौ वलीति वा ॥

**२ । ८ नेड्वशि कृति २९८१** ॥ ४३९२ नेड्वरमनादौ कृति ॥

**२ । ९ तितुत्रतथसिसुसरकसेषु च ३१६३** ॥ ४३९३ तितुत्रेष्वग्रहादीनाम् ॥

**२ । १० एकाच उपदेशेऽनुदात्तात् २२४६** ॥ ४३९४ एकाज्ग्रहणं जागर्त्यर्थम् । ४३९५ वध इट्प्रतिषेधः संनिपात एकाच्त्वात्प्रकृतेश्चानुदात्तत्वात् । ४३९६ एकाच उपदेशेऽनुदात्तादित्युपदेशवचनमनुदात्तविशेषणं चेत्कृञादिभ्यो लिटि नियमानुपपत्तिरप्राप्तत्वात्प्रतिषेधस्य । ४३९७ तत्र पचादिभ्य इड्वचनम् । ४३९८ सनश्चेट्प्रतिषेधः । ४३९९ उभयविशेषणत्वात्सिद्धम् । ४४०० यङ्लोपे च तदन्तद्विर्वचनात् ॥

**२ । १३ कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि २२९३** ॥ ४४०१ कृञोऽसुटः ॥

**२ । १४ श्वीदितो निष्ठायाम् ३०३९** ॥ ४४०२ श्विग्रहणमिदन्तत्वादुपदेशस्य ॥

**२ । १९ यस्य विभाषा ३०२५** ॥ ४४०३ यस्य विभाषाविदेः ॥

**२ । १८ क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु ३०५८** ॥ ४४०४ क्षुब्धं मन्थाभिधाने । ४४०५ स्वान्तं मनोभिधाने । ४४०६ ध्वान्तं तमोभिधाने ॥

**२ । २० दृढः स्थूलबलयोः ३०६०** ॥ ४४०७ दृढनिपातनं नकारहकारलोपार्थं परस्य च ढत्वार्थम् । ४४०८ अनिड्वचने हि रभावाप्रसिद्धिरलघुत्वात् । ४४०९ नलोपवचनं च ॥

**२ । २१ प्रभौ परिवृढः ३०६१** ॥ ४४१० परिवृढनिपातनं च ॥

**२ । २६ णेरध्ययने वृत्तम् ३०६६** ॥ ४४११ वृत्तनिपातने णिग्रहणमण्यन्तस्यावधारणप्रतिषेधार्थम् । ४४१२ निपातनं णिलोपे ड्गुणप्रतिषेधार्थम् ॥

**२ । २७ वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ३०६८** ॥ ४४१३ दान्तशान्तयोरुपधादीर्घत्वं च । ४४१४ स्पष्टच्छन्नयोरुपधाह्रस्वत्वं च ॥

**२ । २८ रुष्यमत्वरसंघुषास्वनाम् ३०६९** ॥ ४४१५ घुषिरवनोर्वावचनामिट्प्रतिषेधाद्विप्रतिषेधेन ॥

**२ । २९ हृषेर्लोमसु ३०७०** ॥ ४४१६ हृषेर्लोमकेशकर्तृकस्येति वक्तव्यम् । ४४१७ विस्मितप्रतीघातयोरिति वक्तव्यम् ॥

**२ । ३० अपचितश्च ३०७१** ॥ ४४१८ क्तिनि नित्यमिति वक्तव्यम् ॥

**२ । ३६ स्नुक्रमोरनात्मनेपदनिमित्ते २३२३** ॥ ४४१९ स्नुक्रमोरनात्मनेपदनिमित्ते चेत्कृत्युपसंख्यानम् । ४४२० आत्मनेपदपरप्रतिषेधे तत्परपरसीयुडेकादेशेषु प्रतिषेधः ४४२१ सिद्धं तु स्नोरात्मनेपदेन समानपदस्थस्येट्प्रतिषेधात् । ४४२२ क्रमेश्च । ४४२३ कर्तरि चात्मनेपदविषयात्कृति ॥

**२ । ३७ ग्रहोऽलिटि दीर्घः २५६२** ॥ ४४२४ ग्रहेर्दीर्घत्व इड्ग्रहणम् । ४४२५ अग्रहणे ह्यसंप्रत्ययः षष्ठ्यभावात् । ४४२६ चिण्वदिटः प्रतिषेधः । ४४२७ यङ्लोपे च । ४४२८ इड् दीर्घ इति चेद्विप्रतिषिद्धम् । ४४२९ प्रतिषिद्धस्य च पुनर्विधाने दीर्घत्वाभावः ॥

**२ । ४४ स्वरतिसूतिसूयतिधूञूदितो वा २२७९** ॥ ४४३० पुनर्वावचनं लिङ्सिचोर्निवृत्त्यर्थम् । ४४३१ स्वरतिरुदात्तः । ४४३२ वावचनं निवृत्त्यर्थम् । ४४३३ अनुदात्ते हि क्तिति वाप्रसङ्गः प्रतिषिध्य पुनर्विधानात् ॥

**२ । ४७ इण्निष्ठायाम् ३०४५** ॥ ४४३४ इड्ग्रहणं नित्यार्थम् ॥

**२ । ४८ तीषसहलुभरुषरिषः २३४०** ॥ ४४३५ इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधः ॥

**२ । ५२ वसतिक्षुधोरिट् ३०४६** ॥ ४४३६ पुनरिड्ग्रहणं नित्यार्थम् ॥

**२ । ५८ गमेरिट्परस्मैपदेषु २४०१** ॥ ४४३७ गमेरिट्परस्मैपदेषु चेत्कृत्युपसंख्यानम् ४४३८ सिद्धं तु गमेरात्मनेपदेन समानपदस्थस्येट्प्रतिषेधात् ॥

**२ । ५९ न वृद्भ्यश्चतुर्भ्यः २३४८** ॥ ४४३९ वृतादिप्रतिषेधे च कृत्युपसंख्यानम् । ४४४० आत्मनेपदपर इड्वचने तत्परपरसीयुडेकादेशेष्विड्वचनम् । ४४४१ सिद्धं तु वृतादीनामात्मनेपदेन समानपदस्थस्येड्वचनात् । ४४४२ चतुस्तासिक्लृपिग्रहणानर्थक्यं च । ४४४३ निवृत्तत्वात्सकारस्य ॥

२ । ६२ उपदेशेऽत्वतः २२९९ ॥ ४४४४ तासावत्त्वप्रतिषेधे घसेः प्रतिषेधप्रसङ्गोऽकारवत्त्वात् । ४४४५ सिद्धं तु हलादिग्रहणात् । ४४४६ तस्य चाभावात्तासौ ॥

२ । ६३ ऋतो भारद्वाजस्य २२९६ ॥ ४४४७ ऋतो भारद्वाजस्येति नियमानुपपत्तिरप्राप्तत्वात्प्रतिषेधस्य । ४४४८ तत्र पचादिभ्य इड्वचनम् । ४४४९ योगविभागात्सिद्धम् ॥

२ । ६७ वस्वेकाजाद्घसाम् ३०९६ ॥ ४४५० वस्वेकाजाद्घसांवचनं नियमार्थम् । ४४५१ घासिग्रहणमनच्कत्वात् ॥

२ । ६८ विभाषा गमहनविदविशाम् ३०९९ ॥ ४४५२ दृशेश्चेति वक्तव्यम् ॥

२ । ७० ऋद्धनोः स्ये २३६६ ॥ ४४५३ स्वरतेर्वेट्त्वादृतः स्ये विप्रतिषेधेन ॥

२ । ८२ आने मुक् ३१०१ ॥ ४४५४ मुकि स्वरे दोषः । ४४५५ अभक्ते च । ४४५६ परादौ दीर्घप्रसङ्गः ॥

२ । ८४ अष्टन आ विभक्तौ ३७१ ॥ ४४५७ अष्टन्जनादिपथिमथ्यात्त्वेष्वान्तरतम्यादनुनासिकप्रसङ्गः । ४४५८ सिद्धमनण्त्वात् । ४४५९ उच्चारणसामर्थ्याद्वा ॥

२ । ९८ प्रत्ययोत्तरपदयोश्च १३७३ ॥ ४४६० त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहणं शब्दविशेषणत्वात् ॥

२ । ९९ त्रिचतुरोः स्त्रियां तिसृचतसृ २९८ ॥ ४४६१ तिस्रभावे संज्ञायां कन्युपसंख्यानम् । ४४६२ चतसर्याद्युदात्तनिपातनं च । ४४६३ उपदेशिवद्वचनं च । ४४६४ स्वरसिद्ध्यर्थम् ॥

२ । १०० अचि र ऋतः २९९ ॥ ४४६५ अचि रादेशे जस्युपसंख्यानं गुणपरत्वात् । ४४६६ न वानवकाशत्वाद्रस्य ॥

२ । १०१ जराया जरसन्यतरस्याम् २२७ ॥ ४४६७ नुमोऽनङ्जरसौ विप्रतिषेधेन ॥

२ । १०२ त्यदादीनामः २६९ ॥ ४४६८ त्यदादीनां द्विपर्यन्तानामकारवचनम् । ४४६९ त्यदादीनामकारेण सिद्धत्वाद्युष्मदस्मदोः शेषे लोपस्य लोपेन ज्ञायते प्राक्तोऽदिति ॥ ४४७० अपि वोपसमस्तार्थमत्वाभावात्कृतं भवेत् । ४४७१ टिलोपष्टाबभावार्थः कर्तव्य इति तत्स्मृतम् ॥ ४४७२ अथवा शेषसप्तम्या शेषेलोपो विधीयते । ४४७३ लुप्तशिष्टे हि तस्याहुः कार्यसिद्धिं मनीषिणः ॥

२ । १०७ अदस औ सुलोपश्च ४३७ ॥ ४४७४ अदसः सोर्भवेदौत्वं किं सुलोपो विधीयते । ४४७५ ह्रस्वाल्लुप्येत संबुद्धिः । ४४७६ न हलः । ४४७७ प्रकृतं हि तत् ॥ ४४७८ आप एत्त्वं भवेत्तस्मिन् । ४४७९ न झलीत्यनुवर्तनात् । ४४८० प्रत्ययस्थाच्च कादित्त्वम् । ४४८१ शीभावश्च प्रसज्यते ॥ ४४८२ सावौत्त्वप्रतिषेधः साकच्काद्वा सादुत्त्वं च । ४४८३ उत्तरपदभूतानामादेश उपदेशिवद्वचनम् । ४४८४ अनादिष्टार्थम् । ४४८५ बहिरङ्गलक्षणत्वात् ॥

२ । ११४ मृजेर्वृद्धिः २४७३ ॥ ४४८६ मृजेर्वृद्धिविधौ क्किप्रतिषेधः । ४४८७ धातोः स्वरूपग्रहणे वा तत्प्रत्ययविज्ञानात्सिद्धम् । ४४८८ प्रयोजनं सृजिदृशिमस्जिनशिहन्तिगिरत्यर्थम् ॥

२ । ११९ अचो ञ्णिति २५४ ॥ ४४८९ वृद्धावग्ग्रहणं गोर्थम् । ४४९० योगविभागः सखिव्यञ्जनाद्यर्थः ॥

२ । ११७ तद्धितेष्वचामादेः १०७९ ॥ ४४९१ तद्धितेष्वचामादिवृद्ध्यान्त्योपधालक्षणप्रतिषेधः । ४४९२ लोकविज्ञानाद्वा सिद्धम् । ४४९३ पुष्करसद्ग्रहणाद्वा ॥

३ । १ देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् १४३९ ॥ ४४९४ देविकादिषु तदादिग्रहणम् । ४४९५ अन्यत्र तद्ग्रहणात्तदन्तग्रहणाद्वा । ४४९६ आद्यज्विशेषणत्वाद्वा सिद्धम् । ४४९७ आन्तरतम्यनिवर्तकत्वाद्वा । ४४९८ न्यग्रोधे च केवलग्रहणात् । ४४९९ वहीनरस्येद्वचनम् ॥

३ । ३ न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् १०९८ ॥ ४५०० य्वाभ्यां परस्यावृद्धित्वम् । ४५०१ अपवादौ वृद्धेर्हि तौ । ४५०२ नित्यावैचौ तयोर्वृद्धिः । ४५०३ किमर्थं नेति शिष्यते ॥ ४५०४ ऐचोर्विषयार्थं प्रतिषेधसंनियोगवचनम् । ४५०५ यत्र य्वाभ्यां परा वृद्धिस्तत्राध्यर्थ्येयथा न तौ । ४५०६ अचामादेर्य्वाभ्यां हि तौ । ४५०७ कथं द्व्याशीतिके न तौ ॥ ४५०८ यत्र वृद्धिरचामादेस्तत्रैचावत्र य्वोर्हि सा । ४५०९ अथ कस्मात्पदान्ताभ्याम् । ४५१० यथेणो न भवेद्यणः ॥

३ । ८ श्वादेरिञि १५६० ॥ ४५११ प्रतिषेधे श्वादिग्रहणं ज्ञापकमन्यत्र श्वन्ग्रहणे तदादिग्रहणस्य शौवहान्यर्थम् । ४५१२ इकारादिग्रहणं च श्वागणिकाद्यर्थम् । ४५१३ तदन्तस्य चान्यत्र प्रतिषेधः ॥

३ । १० उत्तरपदस्य १३९६ ॥ ४५१४ तद्धितेष्वचामादिवृद्धेरुत्तरपदवृद्धिर्विप्रतिषेधेन द्व्याशीतिकाद्यर्थम् ॥

३ । १५ संख्यायाः संवत्सरसंख्यस्य च १७५२ ॥ ४५१५ संवत्सरग्रहणमनर्थकं परिमाणान्तस्येति कृतत्वात् । ४५१६ ज्ञापकं तु कालपरिमाणानां वृद्धिप्रतिषेधस्य ( परिमाणग्रहणस्य ) ॥

३ । ३२ हनस्तोऽचिण्णलोः २५७४ ॥ ४५१७ हन्तेस्तकारे तद्धिते प्रतिषेधः ॥

३ । ३४ नोदात्तोपदेशस्य मान्तस्यानाचमेः २७६३ ॥ ४५१८ अवमिकमिचमीनामिति वक्तव्यम् ॥

३ । ३७ शाच्छासाह्वाव्यावेपां युक् २५८५ ॥ ४५१९ णिच्प्रकरणे धूञ्प्रीञोर्नुग्वचनम् । ४५२० पातेर्लुग्वचनम् ॥

३ । ४४ प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ४६३ ॥ ४५२१ इत्त्वे कग्रहणं संघातग्रहणं चेदेतिकास्वप्राप्तिः । ४५२२ वर्णग्रहणं चेद्व्यवहितत्वादप्रसिद्धिः । ४५२३ वचनप्रामाण्यादिति चेद्रथकट्यादिष्वतिप्रसङ्गः । ४५२४ मामकनरकयोरुपसंख्यानं प्रत्ययस्थत्वात् । ४५२५ त्यक्त्यपोश्च प्रतिषिद्धत्वात् ॥

३ । ४५ न यासयोः ४६४ ॥ ४५२६ प्रतिषेधे त्यकन उपसंख्यानम् । ४५२७ पावकादीनां छन्दस्युपसंख्यानम् । ४५२८ आशिषि च । ४५२९ उत्तरपदलोपे च । ४५३० क्षिपकादीनां च । ४५३१ तारका ज्योतिषि । ४५३२ वर्णका तान्तवे । ४५३३ वर्तका शकुनौ प्राचाम् । ४५३४ अष्टका पितृदैवत्ये । ४५३५ वा सूतकापुत्रकावृन्दारकाणाम् ॥

३ । ४६ उदीचामातः स्थाने यकपूर्वायाः ४६५॥ ४५३६ यकपूर्वत्वे धात्वन्तप्रतिषेधः॥

३ । ४७ भस्त्रैषाजाज्ञाद्वास्वनञ्पूर्वाणामपि ४६६ ॥ ४५३७ भस्त्राग्रहणमुपसर्जनार्थम् । ४५३८ नञ्पूर्वग्रहणानर्थक्यं चोत्तरपदमात्रस्येद्वचनात् ॥

३ । ५० ठस्येकः ११७० ॥ ४५३९ ठादेशे वर्णग्रहणं चेद्धात्वन्तस्य प्रतिषेधः । ४५४० संघातग्रहणं चेदुणादिमाथितिकादीनां प्रतिषेधः । ४५४१ तस्माद्विशिष्टग्रहणम् ॥

३ । ५४ हो हन्तेर्ञ्णिन्नेषु ३५८ ॥ ४५४२ हन्तेस्तत्परस्येति चेन्नकारेऽप्रसिद्धिः । ४५४३ हकारस्येति चेञ्ञ्णित्यप्राप्तिः । ४५४४ स्थानिवद्भावाच्चाचो नकारेऽप्रसिद्धिः । ४५४५ वचनप्रामाण्यादिति चेदलोपे प्रतिषेधः । ४५४६ सिद्धं तूपधालोप इति वचनात् ॥

३ । ५५ अभ्यासाच्च २४३० ॥ ४५४७ अभ्यासात्कुत्वमसुपः ॥

३ । ५६ हेरचङि २५३१ ॥ ४५४८ हेश्चङि प्रतिषेधानर्थक्यमङ्गान्यत्वात् । ४५४९ ज्ञापकं त्वन्यत्र ण्यधिकस्य कुत्वविज्ञानार्थम् ॥

३ । ५७ सन्लिटोर्जेः २३३१ ॥ ४५५० जिग्रहणे ज्यः प्रतिषेधः ॥

३ । ५९ न क्वादेः २८७५ ॥ ४५५१ क्वायजिव्रजियाचिरुचीनामप्रतिषेधो निष्ठायामनिटः कुत्ववचनात् । ४५५२ शुच्युब्ज्योर्घञि कुत्वम् । ४५५३ अर्चेः कविधानात्सिद्धम् ॥

३ । ६१ भुजन्युब्जौ पाण्युपतापयोः २८७७ ॥ ४५५४ भुजः पाणौ । ४५५५ न्युब्जेः कर्तृत्वादप्रतिषेधः ॥

३ । ६६ यजयाचरुचप्रवचर्चश्च २८८२ ॥ ४५५६ प्रवचिग्रहणमनर्थकं वचोऽशब्दसंज्ञाभावात् । ४५५७ उपसर्गपूर्वनियमार्थमिति चेदविवाक्यस्य विशेषवचनात्सिद्धम् । ४५५८ ण्यप्रतिषेधे त्यजेरुपसंख्यानम् ॥

३ । ६९ भोज्यं भक्ष्ये २८८५ ॥ ४५५९ भोज्यमभ्यवहार्ये ॥

३ । ७१ ओतः श्यनि २५१० ॥ ४५६० ओतः शिति । ४५६१ उत्तरत्र शिद्ग्रहणाभावाय॥

३ । ७५ ष्ठिवुक्लमुचमां शिति २३२० ॥ ४५६२ दीर्घत्वमाङि चमः ॥

३ । ७७ इषुगमियमां छः २४०० ॥ ४५६३ इषेश्छत्वमहलि ॥

३ । ७८ पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्छधौशीयसीदाः २३६० ॥ ४५६४ पिबेर्गुणप्रतिषेधः ॥

३ । ८३ जुसि च २४८१ ॥ ४५६५ जुसि गुणे यासुट्प्रतिषेधः ॥

३ । ८५ जाग्रोऽविचिण्णल्ङित्सु २४८० ॥ ४५६६ चिण्णलोः प्रतिषेधसामर्थ्यादन्यत्र गुणभूतस्य वृद्धिप्रतिषेधः । ४५६७ प्रसज्यप्रतिषेधे जुसि गुणप्रतिषेधप्रसङ्गः । ४५६८ उत्तमे च णलि । ४५६९ न वानन्तरस्य प्रतिषेधात् । ४५७० जुसि पूर्वेण गुणविधानम् । ४५७१ णलि च । ४५७२ अतोऽन्यत्र विधाने वावर्गुणत्वम् । ४५७३ न वा पर्युदाससामर्थ्यात् । ४५७४ वस्त्वर्थमिति चेन्न सार्वधातुकत्वात्सिद्धम् ॥

३ । ८६ पुगन्तलघूपधस्य च २१८९ ॥ ४५७५ संयोगे गुरुसंज्ञायां गुणो भेत्तुर्न सिध्यति । ४५७६ विध्यपेक्षं लघोश्चासौ । ४५७७ कथं कुण्डिर्न दुष्यति ॥ ४५७८ धातोर्नुमः । ४५७९ कथं रञ्जेः । ४५८० स्यन्दिश्रन्थ्योर्निपातनात् । ४५८१ अनङ्गोपधाशिदीर्घत्वे विध्य-

पेक्षे न सिध्यतः ॥ ४५८२ अभ्यस्तस्य यदाहाचि । ४५८३ लङर्थं तत्कृतं भवेत् । ४५८४ कुसनोर्यत्कृतं किंस्त्वं ज्ञापकं स्याल्लघोर्गुणे ॥

३ । ८७ नाभ्यस्तस्याचि पिति सार्वधातुके २५०३ ॥ ४५८५ अभ्यस्तानामुपधाह्रस्वत्वमचि पस्पशाते चाकशीमि वावशतीरिति दर्शनात् । ४५८६ बहुलं छन्दस्यानुषग्जुजोषदिति दर्शनात् ॥

३ । ८८ भूसुवोस्तिङि २२२४ ॥ ४५८७ भूसुवोः प्रतिषेध एकाज्ग्रहणं बोभवीत्यर्थम् ॥

३ । ९२ तृणह इम् २५४५ ॥ ४५८८ तृणहिग्रहणं अमिमोर्व्यवस्थार्थम् । ४५८९ तृहिग्रहणे हीम्विषये अमभावोऽनवकाशत्वात् ॥

३ । ९५ तुरुस्तुशम्यमः सार्वधातुके २४४४ ॥ ४५९० पुनः सार्वधातुकग्रहणमपिदर्थम् ॥

३ । १०३ बहुवचने झल्येत् २०५ ॥ ४५९१ अतो दीर्घाद्बहुवचन एत्त्वं विप्रतिषेधेन ॥

३ । १०७ अम्बार्थनद्योर्ह्रस्वः २६७ ॥ ४५९२ डलकवतीनां प्रतिषेधो वक्तव्यः । ४५९३ तल्ह्रस्वत्वं वा ङिसंबुद्ध्योः । ४५९४ अम्बार्थं द्व्यक्षरं यदि । ४५९५ मातॄणां मातच्पुत्रार्थमर्हते ॥

३ । १०९ जसि च २४१ । ४५९६ जसादिषु छन्दसि वावचनं प्राङ् णौ चङ्युपधायाः । ४५९७ अम्बे दर्वि शतक्रत्वः पश्वे नृभ्यः किकिदीव्या ॥

३ । १११ घेर्ङिति २४५ ॥ ४५९८ घेर्ङिति गुणविधाने ङीसार्वधातुके प्रतिषेधः । ४५९९ सुबाधिकारात्सिद्धम् ॥

३ । ११३ याडापः २९० ॥ ४६०० याड्विधानेऽतिखट्वायेत्यप्रतिषेधो ह्रस्वादेशत्वात् ॥

३ । ११६ ङेराम्नद्याम्नीभ्यः २७० ॥ ४६०१ इदुद्भ्यामाम्विधानमौत्त्वस्य परत्वात् । ४६०२ योगविभागात्सिद्धम् । ४६०३ औत्त्वे योगविभागः । ४६०४ सखिपतिभ्यामौत्त्वार्थः । ४६०५ एकयोगे ह्यप्राप्तिरत्वसंनियोगात् । ४६०६ न वाकारस्यान्वाचयवचनाद्यथा क्यङि सलोपः । ४६०७ अत्त्वे टाप्प्रतिषेधः । ४६०८ न वा संनिपातलक्षणस्यानिमित्तत्वात् । ४६०९ ङित्करणाद्वा ॥

४ । १ णौ चङ्युपधाया ह्रस्वः २३१४ ॥ ४६१० णौ चङ्युपधाया ग्रहणमन्त्यप्रतिषेधार्थम् । ४६११ उपधाह्रस्वत्वे णेर्णिच्युपसंख्यानम् ॥

४ । २ नाग्लोपिशास्वृदिताम् २५७२ ॥ ४६१२ अग्लोपिप्रतिषेधानर्थक्यं च स्थानिवद्भावात् ॥

४ । ३ भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् २५६५ ॥ ४६१३ काण्यादीनां चेति वक्तव्यम् ॥

४ । ९ दयतेर्दिगि लिटि २३८८ ॥ ४६१४ दिग्यादेशस्य परत्वात्साभ्यासस्यादेशवचनम् ॥

४ । १० ऋतश्च संयोगादेर्गुणः २३७९ ॥ ४६१५ संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञर्थम् । ४६१६ ऋतो लिटि गुणाङ्णिति वृद्धिर्विप्रतिषेधेन । ४६१७ पुनः प्रसङ्गविज्ञानाद्वा सिद्धम् ॥

४ । १२ शॄदॄप्रां ह्रस्वो वा २४९५ ॥ ४६१८ ऋतो ह्रस्वत्वमित्वप्रतिषेधार्थम् ॥

४ । १३ केऽणः ८३४ ॥ ४६१९ केऽणो ह्रस्वत्वे तद्धितग्रहणं कृन्निवृत्त्यर्थम् ॥

**४ । २४ एतेर्लिङि २४५७** ॥ ४६२० एतेर्लिङ्युपसर्गात् ॥

**४ । ३० यङि च २६३३** ॥ ४६२१ यङ्प्रकरणे हन्तेर्हिंसायामीट् (श्री) ॥

**४ । ३९ न च्छन्दस्यपुत्रस्य ३५५८** ॥ ४६२२ अपुत्रादीनामिति वक्तव्यम् । ४६२३ छन्दसि प्रतिषेधे दीर्घप्रतिषेधः । ४६२४ न वाध्वाघस्याद्वचनमवधारणार्थम् ॥

**४ । ४१ शाच्छोरन्यतरस्याम् ३०७५** ॥ ४६२५ श्यतेरित्त्वं व्रते नित्यम् ॥

**४ । ४६ दो दद्धोः ३०७७** ॥ ४६२६ तान्ते दोषो दीर्घत्वं स्यात् । ४६२७ दान्ते दोषो निष्ठानत्वम् । ४६२८ धान्ते दोषो धत्वप्राप्तिः । ४६२९ थान्तेऽदोषस्तस्मात्थान्तः ॥

**४ । ४७ अच उपसर्गात्तः ३०७८** ॥ ४६३० अच उपसर्गात्तत्वे आकारग्रहणम् । ४६३१ आदेर्हि परस्य । ४६३२ अवर्णप्रकरणात्सिद्धम् । ४६३३ यतेरित्त्वादचस्तः ॥

**४ । ४८ अपो भि ४४२** ॥ अपो भि मासश्छन्दसि । ४६३४ स्ववस्स्वतवसोर्मास उषसश्च त इष्यते ॥

**४ । ५४ सनि मीमाघुरभलभशकपतपदामच इस् २६२३** ॥ ४६३५ इस्त्वं सनि राधो हिंसायाम् ॥

**४ । ५५ आप्ज्ञप्यृधामीत् २६१९** ॥ ४६३६ ज्ञपेरीत्त्वमनन्त्यस्य ॥

**४ । ५८ अत्र लोपोऽभ्यासस्य २६२०** ॥ ४६३७ अभ्यासस्यानचि ॥

**४ । ६० हलादिः शेषः २१७९** ॥ ४६३८ हलादिशेष षष्ठीसमास इति चेदजादिषु शेषप्रसङ्गः । ४६३९ कर्मधारय इति चेदादिशेषनिमित्तत्वाल्लोपस्य तदभावे लोपवचनम् । ४६४० तस्मादनादिलोपः ॥

**४ । ६१ शर्पूर्वाः खयः २२५९** ॥ ४६४१ शर्पूर्वशेषे खपूर्वग्रहणम् । ४६४२ आदिशेष-प्रसङ्गस्तु । ४६४३ शर्पूर्ववचनं किमर्थमिति चेत्खयां लोपप्रतिषेधार्थम् । ४६४४ व्यपकर्ष-विज्ञानात्सिद्धम् ॥

**४ । ६७ द्युतिस्वाप्योः संप्रसारणम् २३४४** ॥ ४६४५ स्वापिग्रहणं व्यपेतार्थम् । ४६४६ तत्र क्यजन्तेऽतिप्रसङ्गः । ४६४७ सिद्धं तु णिज्ग्रहणात् ॥

**४ । ७५ निजां त्रयाणां गुणः श्लौ २५०२** ॥ ४६४८ त्रिग्रहणानर्थक्यं तु गणान्त-त्वात् । ४६४९ उत्तरार्थं तु ॥

**४ । ८२ गुणो यङ्लुकोः २६३०**॥४६५० ऐचोर्यङि दीर्घप्रसङ्गो ह्रस्वादि परं दीर्घत्वम् । ४६५१ न वाभ्यासविकारेष्वपवादस्योत्सर्गाबाधकत्वात् । ४६५२ प्रयोजनं सन्वद्भावस्य दीर्घत्वम् । ४६५३ मान्प्रभृतीनां दीर्घत्वमित्त्वस्य । ४६५४ गणेरीत्वं हलादिशेषस्य ॥

**४ । ८३ दीर्घोऽकितः २६३२** ॥ ४६५५ अकिद्वचनमन्यत्र किदन्तस्यालोऽन्त्यनि-वृत्त्यर्थम् । ४६५६ प्रयोजनं ह्रस्वत्वात्त्वेत्त्वगुणेषु । ४६५७ विप्रतिषेधात्सिद्धम् । ४६५८ तदन्ताग्रहणाद्वा ॥

**४ । ८५ नुगतोऽनुनासिकान्तस्य २६४३** ॥ ४६५९ नुकि यंयस्यते रंरम्यत इति रूपासिद्धिः । ४६६० अनुस्वारागमवचनात्सिद्धम् । ४६६१ पदान्तवच्च ॥

**४ । ९० रीगृदुपधस्य च २६४४** ॥ ४६६२ रीगृत्वतः संयोगार्थम् ॥

**४ । ९१ रुग्रिकौ च लुकि २६५२** ॥ ४६६३ मर्मृज्यते मर्मृज्यमानास इति चोपसंख्यानम् ॥

**४ । ९३ सन्वल्लघुनि चङ्परेऽनग्लोपे २३१६** ॥ ४६६४ सन्वद्भावदीर्घत्वे णेर्णिच्युपसंख्यानम् । ४६६५ मीमादीनां तु लोपप्रसङ्गः । ४६६६ सिद्धं तु रूपातिदेशात् । ४६६७ अङ्गान्यत्वाद्वा सिद्धम् ॥

इति सप्तमोऽध्यायः ।

---

## अष्टमोऽध्यायः ।

**१ । १ सर्वस्य द्वे २१३९** ॥ ४६६८ सर्वग्रहणमलोऽन्त्यानिवृत्त्यर्थम् । ४६६९ षष्ठीनिर्देशार्थं च । ४६७० अनिर्देशे हि षष्ठ्यर्थाप्रसिद्धिः । ४६७१ न वा पदाधिकारात् । ४६७२ तच्च समासतद्धितवाक्यनिवृत्त्यर्थम् । ४६७३ सगतिग्रहणं च ॥

**१ । ४ नित्यवीप्सयोः २१४०** ॥ ४६७४ अनवयवाभिधानं वीप्सार्थ इति चेज्जात्याख्यायां द्विर्वचनप्रसङ्गः । ४६७५ न वैकार्थत्वाज्जातेः । ४६७६ अनेकार्थाश्रयत्वाच्च वीप्सायाः । ४६७७ निवर्त्तकत्वाद्वा । ४६७८ सर्वपदसगतिग्रहणानर्थक्यं चार्थाभिधाने द्विर्वचनविधानात् । ४६७९ वीप्सायां सर्वाभिधाने वचनाप्रसिद्धिः । ४६८० एकाभिधानेऽसर्वद्रव्यगतिः । ४६८१ न वा पदार्थत्वात् ॥

**१ । ५ परेर्वर्जने २१४१** ॥ ४६८२ परेरसमासे । ४६८३ परेर्वर्जने वावचनम् ॥

**१।८ वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु २१४३** ॥ ४६८४ असूयाकुत्सनयोः कोपभर्त्सनयोश्चैकार्थत्वात्पृथक्त्वनिर्देशानर्थक्यम् ॥

**१ । ९ एकं बहुव्रीहिवत् २१४४** ॥ ४६८५ एकस्य द्विर्वचनसंबन्धेनेति चेदर्थनिर्देशः । ४६८६ न वा वीप्साधिकारात् । ४६८७ बहुव्रीहिवत्त्वे प्रयोजनं सुब्लोपपुंवद्भावौ । ४६८८ सर्वनामस्वरसमासान्तेषु दोषः ॥

**१ । ११ कर्मधारयवदुत्तरेषु २१४६** ॥ ४६८९ कर्मधारयवत्त्वे प्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि ॥

**१ । १२ प्रकारे गुणवचनस्य २१४७** ॥ ४६९० प्रकारे सर्वेषां गुणवचनत्वात्सर्वप्रसङ्गः । ४६९१ सिद्धं तु प्रकृत्यर्थविशेषणत्वात् । ४६९२ आनुपूर्व्ये । ४६९३ स्वार्थेऽवधार्यमाणेऽनेकस्मिन् । ४६९४ चापले । ४६९५ क्रियासमभिव्याहारे । ४६९६ आभीक्ष्ण्ये । ४६९७ डाचि च । ४६९८ पूर्वप्रथमयोरर्थातिशयविवक्षायाम् । ४६९९ डतरडतमयोः समसंप्रधारणायां स्त्रीनिगदे भावे । ४७०० कर्मव्यतिहारे सर्वनाम्नः समासवच्च बहुलं यदा न समासवत् प्रथमैकवचनं तदा पूर्वपदस्य । ४७०१ स्त्रीनपुंसकयोरुत्तरपदस्य वाम्भावः ॥

**१ । १५ द्वंद्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु २१५०** ॥ ४७०२ अत्यन्तसहचरिते लोकविज्ञाते द्वंद्वमित्युपसंख्यानम् । ४७०३ द्वंद्वमिति पूर्वपदस्य चाम्भाव उत्तरपदस्य चात्वं नपुंसकत्वं च ॥

**१ । १६-१७ पदस्य ४०१ । पदात् ४०२** ॥ ४७०४ पदाधिकारः प्रागपदान्ताधिकारात् । ४७०५ पदात्प्राक्सुपि कुत्सनात् । ४७०६ यणेकादेशस्वरस्तूर्ध्वं पदाधिकारात् । ४७०७ इह

वचने ह्यपदान्तस्याप्राप्तिः । ४७०८ न वा पदाधिकारस्य विशेषणत्वात् । ४७०९ अन्तग्रहणाद्वा नलोपे ॥

**१ । १८ अनुदात्तं सर्वमपादादौ ४०३** ॥ ४७१० सर्ववचनमनादेरनुदात्तार्थम् । ४७११ सर्ववचनमनादेरनुदात्तार्थमिति चेल्लुटि प्रतिषेधात्सिद्धम् । ४७१२ अलोऽन्त्यविधिप्रसङ्गस्तु । ४७१३ ल्लटि प्रतिषेधात्सिद्धम् । ४७१४ समानवाक्ये निघातयुष्मदस्मदादेशाः । ४७१५ पश्यार्थैश्च प्रतिषेधः ॥

**१ । २६ सपूर्वायाः प्रथमाया विभाषा ४१०** ॥ ४७१६ युष्मदस्मदोरन्यतरस्यामनन्वादेशे । ४७१७ सर्व एव वांनावादयोऽनन्वादेशे विभाषा वक्तव्याः ।

**१ । २७ तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ३९३४** ॥ ४७१८ तिङो गोत्रादिषु कुत्सनाभीक्ष्ण्यग्रहणं पाठविशेषणम् । ४७१९ अनुदात्तविशेषणे ह्यन्यत्र गोत्रादिग्रहणे कुत्सनाभीक्ष्ण्यग्रहणम् । ४७२० अनुदात्तग्रहणं वा ॥

**१ । २८ तिङ्ङतिङः ३९३५** ॥ ४७२१ अतिङ्ग्रहणमनर्थकं समानवाक्याधिकारात् ॥

**१ । ३० निपातैर्यद्यदिहन्तकुविन्नेच्चण्कच्चिद्यत्रयुक्तम् ३९३७** ॥ ४७२२ चाण्णेद्विशिष्टश्चेदर्थे ॥

**१ । ५१ गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत् ३९५८** ॥ ४७२३ लटः प्रकृतिभावे कर्तुरन्यत्व उपसंख्यानं कारकान्यत्वात् । ४७२४ कर्तृसामान्यात्सिद्धमिति चेत्तद्भेदेऽन्यसामान्यै प्रकृतिभावः । ४७२५ न चेत्कर्ता सर्वान्य इति चेदन्याभिधाने प्रतिषेधमेके । ४७२६ सिद्धं तु तिङोरेकद्रव्याभिधानात् ॥

**१ । ५५ आम एकान्तरमामन्त्रितमनन्तिके ३९६२** ॥ ४७२७ आम एकान्तर ऐकश्रुत्यप्रतिषेधः । ४७२८ निघातप्रसङ्गस्तु । ४७२९ सिद्धं तु प्रतिषेधाधिकारे प्रतिषेधवचनात् ॥

**१ । ५६ यद्धितुपरं छन्दसि ३९६३** ॥ ४७३० यद्धितुपरस्य छन्दस्यनिघातोऽन्यपरप्रतिषेधार्थः ॥

**१ । ५७ चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः ३९६४** ॥ ४७३१ आम्रेडितेष्वगतेः सगतिरपि तिङित्यत्र गतिग्रहण उपसर्गग्रहणम् । ४७३२ सर्वत्रैवाष्टमिके गतिग्रहण उपसर्गग्रहणम् ॥

**१ । ६६ यद्वृत्तान्नित्यम् ३९७३** ॥ ४७३३ वा याथाकाम्ये ॥

**१ । ६७ पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः ३९७४** ॥ ४७३४ पूजितस्यानुदात्तत्वे काष्ठादिग्रहणम् । ४७३५ मलोपवचनं च ॥

**१ । ६८ । सगतिरपि तिङ् ३९७५** ॥ ४७३६ सगतिग्रहणमपदत्वात् । ४७३७ उत्तरार्थं च । ४७३८ तिङ्निघातात्पूजनात्पूजितमनुदात्तं विप्रतिषेधेन ॥

**१ । ६९ कुत्सने च सुप्यगोत्रादौ ३९७६** ॥ ४७३९ सुपि कुत्सने क्रियायाः । ४७४० मकारलोपोऽतिङि । ४७४१ पूतिश्चानुबन्धः । ४७४२ विभाषितं चापि बह्वर्थम् ॥

**१ । ७० गतिर्गतौ ३९७७** ॥ ४७४३ गतेरनुदात्तत्वे गतिग्रहणानर्थक्यं तिङ्व्यवधारणात् । ४७४४ छन्दोऽर्थमिति चेन्नागतित्वात् ॥

**१ । ७१ तिङि चोदात्तवति ३९७८** ॥ ४७४५ तिङ्ग्रहणमुदात्तवतः प्रतिषेधार्थम् । ४७४६ यद्योगात्प्रतिः । ४७४७ यद्योगात्प्रतिरिति चेत्प्रत्ययोदात्तत्वेऽप्रसिद्धिः ॥

**१ । ७२ आमन्त्रितं पूर्वमविद्यमानवत् ४१२** ॥ ४७४८ पूर्वं प्रति विद्यमानत्वादुत्तरत्रानन्तर्याप्रसिद्धिः । ४७४९ सिद्धं तु पदपूर्वस्येति वचनात् । ४७५० अविद्यमानवत्त्वे प्रयोजनमामन्त्रितयुष्मदस्मत्तिङ्घाताः ।४७५१ पूजायामनन्तरप्रतिषेधः । ४७५२ जात्वपूर्वम् । ४७५३ आहो उताहो चानन्तरविधौ । ४७५४ आम एकान्तरविधौ ॥

**२ । १ पूर्वत्रासिद्धम् १२** ॥ ४७५५ पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य । ४७५६ अपवादो वचनप्रामाण्यात् । ४७५७ पूर्वत्रासिद्धमधिकारः । ४७५८ परस्य परस्य पूर्वत्र पूर्वत्रासिद्धविज्ञानार्थः । ४७५९ अनधिकारे हि समुदायस्य समुदायेऽसिद्धविज्ञानम् ४७६० तत्रायथेष्टप्रसङ्गः । ४७६१ तस्मादधिकारः ॥

**२ । २ नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ३५३** ॥ ४७६२ संज्ञाग्रहणानर्थक्यं च तन्निमित्तत्वाल्लोपस्य । ४७६३ स्वरेऽवधारणाच्च ॥

**२ । ३ न मु ने ४३९** ॥ ४७६४ न मु टादेशे ॥

**२ । ४ उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ३६५७** ॥ ४७६५ यण्स्वरो यणादेशे स्वरितयणः स्वरितार्थम् । ४७६६ आश्रयात्सिद्धत्वमिति चेदुदात्तात्स्वरिते दोषः ॥

**२ । ५ स्वरितो वानुदात्ते पदादौ ३६५९** ॥ ४७६७ एकादेशस्वरोऽन्तरङ्गः । ४७६८ अयवायावेकादेशशतृस्वरैकाननुदात्तसर्वानुदात्तार्थम् । ४६७९ संयोगान्तलोपो रोरुत्वे हरिवो मेदिनीं त्वा । ४७७० प्लुतिश्च । ४७७१ सिज्लोप एकादेशे । ४७७२ संयोगादिलोपः संयोगान्तलोपे । ४७७३ निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु । ४७७४ वस्वादिषु दत्वं सौ दीर्घत्वे । ४७७५ अदस ईत्वोत्वे स्वरे बहिष्पदलक्षणे । ४७७६ प्रगृह्यसंज्ञायां च । ४७७७ प्लुतिस्तुग्विधौ छे । ४७७८ श्चुत्वं धुट्त्वे । ४६७९ अभ्यासजश्त्वचर्त्वमेत्त्वतुकोः । ४७८० द्विर्वचने परसवर्णत्वम् । ४७८१ पदाधिकारश्चेज्जश्त्वघत्वनत्वरुत्वषत्वणत्वानुनासिकछत्वानि ॥

**२ । ७ नलोपः प्रातिपदिकान्तस्य २३६** ॥ ४७८२ नलोपेऽन्तग्रहणं पदाधिकारस्य विशेषणत्वात् । ४७८३ अह्नो नलोपप्रतिषेधः । ४७८४ अहन्ग्रहणादिति चेत्संबुद्ध्यर्थं वचनम् ॥

**२ । ८ न ङिसंबुद्ध्योः ३५२** ॥ ४७८५ न ङिसंबुद्ध्योरनुत्तरपदे । ४७८६ वा नपुंसकानाम् । ४६८७ भत्वात्तु ङौ प्रतिषेधानर्थक्यम् ॥

**२ । ९ मादुपधायाश्च मतोर्वोऽयवादिभ्यः १८९७ । ४२ रदाभ्यां निष्ठातो नः पूर्वस्य च दः ३०१६** ॥ ४७८८ अनन्त्ययोरपि निष्ठामतुपोरादेशः । ४७८९ नामिते प्रतिषेधः ॥

**२ । १६ अनो नुट् ३६०१** ॥ ४७९० अनो नुकि विनामरुविधिप्रतिषेधः । ४७९१ परादौ वत्वप्रतिषेधोऽवग्रहश्च । ४७९२ मत्वात्सिद्धम् । ४७९३ अनस्तु प्रकृतिभावे मतुब्ग्रहणं छन्दसि । ४७९४ घग्रहणं च ॥

**२ । १७ नाद्धस्य ३६०२** ॥ ४७९५ ईद्रथिनः । ४७९६ भूरिदाव्नस्तुट् ॥

**२ । १८ कृपो रो लः २३५०** ॥ ४७९७ कृपणादीनां प्रतिषेधो वक्तव्यः । ४७९८ बालमूललघ्वलमङ्गुलीनां वा लो रमापद्यत इति वक्तव्यम् । ४७९९ संज्ञाछन्दसोर्वा कपिलकादीनामिति वक्तव्यम् ॥

**२ । १९ उपसर्गस्यायतौ २३२६** ॥ ४८०० रेफस्यायताविति चेत्परेरुपसंख्यानम् ॥ ४८०१ उपसर्गस्येति चेदेकादेशेऽप्रसिद्धिः ॥

**२ । २१ ग्रसि विभाषा २५४१** ॥ ४८०२ णावुपसंख्यानम् ॥

**२ । २२ परेश्च घाङ्कयोः ३२६२** ॥ ४८०३ योगे च । ४८०४ षाङ्कि लत्वसलोपसंयोगादिलोपकुत्वदीर्घत्वानि । ४८०५ प्रयोजनं गिरौ गिरः पयो धावति द्विष्टराम् वृषत्स्थानं काष्ठशक्स्थाता कुञ्चा धुर्य इति ॥

**२ । २३ संयोगान्तस्य लोपः ५४** ॥ ४८०६ संयोगान्तस्य लोपे यणः प्रतिषेधः । ४८०७ न वा झलो लोपात् । ४८०८ बहिरङ्गलक्षणत्वाद्वा । ४८०९ संयोगान्तलोपे सग्रहणम् । ४८१० रुविधानस्यानवकाशत्वात् । ४८११ योगविभागात्सिद्धम् ॥

**२ । २५ धि च २२४९** ॥ ४८१२ धि सकारे सिचो लोपः । ४८१३ चकाद्धीति प्रयोजनम् । ४८१४ आशाध्वं तु कथं ते स्यात् । ४८१५ जश्त्वं सस्य भविष्यति ॥ ४८१६ सर्वत्रैवं प्रसिद्धं स्यात् । ४८१७ श्रुतिश्चापि न भिद्यते । ४८१८ लुङश्चापि न मूर्धन्ये ग्रहणम् । ४८१९ सेटि दुष्यति ॥ ४८२० घसिभस्योर्न सिध्येत्तु । ४८२१ तस्मात्सिज्ग्रहणं न तत् । ४८२२ छान्दसो वर्णलोपो वा यथेष्कर्तारमध्वरे ॥

**२ । ३२ दादेर्धातोर्घः ३२५** ॥ ४८२३ हृग्रहोर्भश्छन्दसि हस्य ॥

**२ । ३८ दधस्तथोश्च २५०१** ॥ ४८२४ दधस्तथोरनुकर्षणानर्थक्यं स्थानिवत्प्रतिषेधात् । ४८२५ इतरथा ह्यलोपे प्रतिषेधः ॥

**२ । ४२ रदाभ्यां निष्ठातो नः पूर्वस्य च दः ३०१६** ॥ ४८२६ निष्ठादेशे पूर्वग्रहण परस्यादेशप्रतिषेधार्थम् । ४८२७ पञ्चमीनिर्दिष्टाद्धि परस्य । ४८२८ वृद्धिनिमित्ताद्धि प्रतिषेधः । ४८२९ प्रयोजनं कार्तिकौतिफौलयः । ४८३० न वा बहिरङ्गलक्षणत्वात् ॥

**२ । ४४ ल्वादिभ्यः ३०१८** ॥ ४८३१ ऋकारल्वादिभ्यः क्तिन्निष्ठावत् । ४८३२ दुग्वोदीर्घश्च । ४८३३ पूञो विनाशे । ४८३४ सिनोतेर्ग्रासकर्मकर्तृकस्य ॥

**२ । ४८ अञ्चोऽनपादाने ३०२४** ॥ ४८३५ अञ्चेर्नत्वे व्यक्तप्रतिषेधः । ४८३६ अञ्जिविज्ञानात्सिद्धम् । ४८३७ अञ्चत्यर्थ इति चेदञ्जेस्तदर्थत्वात्सिद्धम् ॥

**२ । ५० निर्वाणोऽवाते ३०२९** ॥ ४८३८ अवाताभिधाने ॥

**२ । ५५ अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः ३०३५** ॥ ४८३९ कृशेः क एष विहित इगुपधात् । ४८४० स्वरे हि दोषो भवति परिकृशे । ४८४१ पदस्य लोपो विहित इति मतं जगत्यनुना भवति हि रुचिरा । ४८४२ फलेर्लत्व उत्पूर्वस्योपसंख्यानम् । ४८४३ उत्फुल्लसंफुल्लयोरिति वक्तव्यम् ॥

**२ । ५८ वित्तो भोगप्रत्ययोः ३०४१** ॥ ४८४४ यस्य विदेः प्रशक्तौ तत्परत्वे तनवचने तदु वा प्रतिषेधौ । ४८४५ श्यन्विकरणान्नविधिश्छिदितुल्यः । ४८४६ लुग्विकरणो वलि पर्यवपन्नः ॥

**२ । ६८ अहन् ४४३** ॥ ४८४७ रुविधावह्नो रूपरात्रिरथंतरेषूपसंख्यानम् ॥

**२ । ६९ रोऽसुपि १७२** ॥ ४८४८ असुपि रादेशे उपसर्जनसमासे प्रतिषेधोऽलुकि । ४८४९ सिद्धं तु सुपि प्रतिषेधात् ॥

**२ । ७० अम्नरूधरवरित्युभयथा छन्दसि ३६०४** ॥ ४८५० छन्दसि भाषायां च प्रचेतसो राजन्युपसंख्यानम् । ४८५१ अहरादीनां पत्यादिषूपसंख्यानम् ॥

**२ । ७२ वसुस्रंसुध्वंस्वनडुहां दः ३३४** ॥ ४८५२ अनडुहो दत्वे नकारप्रतिषेधः । ४८५३ सिद्धं तु प्रतिपदविधानान्नुमः ॥

**२ । ७८ उपधायां च २२६५** ॥ ४८५४ उपधादीर्घत्वेऽभ्यासजिन्रिचतुर्णां प्रतिषेधः । ४८५५ उणादिप्रतिषेधश्च ॥

**२ । ८० अदसोऽसेर्दादु दो मः ४१९** ॥ ४८५६ अदसोऽनोस्त्रेः । ४८५७ तत्र पदाधिकारादपदान्तस्याप्राप्तिः । ४८५८ सिद्धं तु सकारप्रतिषेधात् । ४८५९ दाद्ग्रहणमनन्त्यप्रतिषेधार्थम् ॥

**२ । ८१ एत ईद्बहुवचने ४३८** ॥ ४८६० ईत्वं बहुवचनान्तस्य ॥

**२ । ८२ वाक्यस्य टेः प्लुत उदात्तः ९३** ॥ ४८६१ वाक्याधिकारः पदनिवृत्त्यर्थः । ४८६२ टिग्रहणमलोन्त्यनियमे व्यञ्जनान्तार्थम् । ४८६३ सर्वादेशप्रसङ्गस्तु ॥

**२ । ८३ प्रत्यभिवादेऽशूद्रे ९४** ॥ ४८६४ अशूद्रस्त्र्यसूयकेषु । ४८६५ भोराजन्यविशां वा । ४८६६ सर्वस्यैव नाम्नः प्रत्यभिवादे भोःशब्द आदेशो वक्तव्यः ॥

**२ । ८५ हैहेप्रयोगे हैहयोः ९६** ॥ ४८६७ हैहेप्रयोगे हैहेग्रहणं हैहयोः प्लुत्यर्थम् । ४८६८ प्रयोगग्रहणमर्थवद्ग्रहणेऽनर्थकार्थम् । ४८६९ पुनर्हैहेग्रहणमनन्त्यार्थम् ॥

**२ । ८६ गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् ९७** ॥ ४८७० गुरोः प्लुतविधाने लघोरन्त्यस्य प्लुतप्रसङ्गोऽन्येन विहितत्वात् । ४८७१ न वानन्त्यस्यापि वचनमुभयनिर्देशार्थम् । ४८७२ प्राग्वचनं विभाषार्थम् । ४८७३ प्राग्वचनानर्थक्यं चैकैकस्येति वचनात् ॥

**२ । ८८ ये यज्ञकर्मणि ३६०७** ॥ ४८७४ ये यज्ञकर्मणीत्यतिप्रसङ्गः । ४८७५ सिद्धं तु ये यजामह इति ब्रूह्यादिषूपसंख्यानात् ॥

**२ । ८९ प्रणवष्टेः ३६०८** ॥ ४८७६ टिग्रहणं सर्वादेशार्थम् ॥

**२ । ९२ अग्नीत्प्रेषणे परस्य च ३६११** ॥ ४८७७ अग्नीत्प्रेषणे इत्यतिप्रसङ्गः । ४८७८ सिद्धं त्वोश्रावये परस्य चेतिवचनात् । ४८७९ ओश्रावयाश्रावययोरिति वक्तव्यम् । ४८८० बहुलमन्यत्रेति वक्तव्यम् ॥

**२ । ९५ आम्रेडितं भर्त्सने ३६१४** ॥ ४८८१ भर्त्सने पर्यायेण ॥

**२ । १०३ स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु ३६२२** ॥ ४८८२ असूयादिषु वावचनम् ॥

**२ । १०६ प्लुतावैच इदुतौ ३६२५** ॥ ४८८३ ऐचोरुभयविवृद्धिप्रसङ्गादिदुतोः प्लुतवचनम् । ४८८४ तत्रायथेष्टप्रसङ्गः । ४८८५ सिद्धं त्विदुतोर्दीर्घवचनात् ॥

**२ । १०७ एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ ३६२६** ॥ ४८८६ प्लुतविकारे पदान्तग्रहणम् । ४८८७ विषयपरिगणनं च । ४८८८ प्रश्नान्ताभिपूजिताविचार्यमाणप्रत्यभिवादयाज्यान्तेष्विति वक्तव्यम् । ४८८९ आमन्त्रिते छन्दस्युपसंख्यानम् ॥

**३ । १ मतुवसो रु संबुद्धौ छन्दसि ३६२८** ॥ ४८९० मतुवसो रादेशे वन उपसंख्यानम् । ४८९१ विभाषा भवद्भगवदघवतामोच्चावस्य ॥

**३ । ९९ समः सुटि १३९ । ६ पुमः खय्यम्परे १३९ । १२ कानाम्रेडिते १४३ ॥** ४८९२ संपुंकानां सत्वम् । ४८९३ रुविधौ ह्यनिष्टप्रसङ्गः ॥

**३ । १३ ढो ढे लोपः २३३९ ॥** ४८९४ ढलोपेऽपदान्तग्रहणम् । ४८९५ जश्भावादिति चेदुत्तरत्र ढस्याभावादपवादप्रसङ्गः । ४८९६ तस्मात्सिद्धवचनम् । ४८९७ संग्रहणं वा ॥

**३ । १५ खरवसानयोर्विसर्जनीयः ७६ ॥** ४८९८ विसर्जनीयोऽनुत्तरपदे । ४८९९ न वा बहिरङ्गलक्षणत्वात् ॥

**३ । १७ भोभगोअघोअपूर्वस्य योऽशि १६७ ॥** ४९०० अश्ग्रहणमनर्थकमन्यत्राभावात् ॥

**३ । २० ओतो गार्ग्यस्य १६९ ॥** ४९०१ ओकाराद्योग्रवचनं नित्यार्थम् ॥

**३ । २६ हे मपरे वा १२७ ॥** ४९०२ यवलपरे यवला वा ॥

**३ । २९-३०-३१ ङःसि धुट् १३१ । नश्च १३२ । शि तुक् १३३ । २८ ङ्णोः कुक् टुक् शरि १३० । ३२ ङमो ह्रस्वादचि ङमुण् नित्यम् १३४ ॥** ४९०३ धुगादिषु ष्टुत्वणत्वप्रतिषेधः । ४९०४ परादौ छत्वषत्वविधिप्रतिषेधः ॥

**३ । ३२ ङमो ह्रस्वादचि ङमुण् नित्यम् १३४ ॥** ४९०५ ङमुटि पदादिग्रहणम् ॥

**३ । ३६ वा शरि १९१ ॥** ४९०६ वाशर्प्रकरणे खर्परे लोपः ॥

**३ । ३७ कुप्वोः ≍क≍पौ च १४२ ॥** ४९०७ सस्य कुप्वोर्विसर्जनीयजिह्वामूलीयोपध्मानीयाः । ४९०८ विसर्जनीयादेशो हि शर्परयोरेवादेशप्रसङ्गः ॥

**३ । ३८ सोऽपदादौ १९२ ॥** ४९०९ सोऽपदादावनव्ययस्य । ४९१० रोः काम्ये नियमार्थम् ॥

**३ । ४१ इदुदुपधस्य चाप्रत्ययस्य १९५ ॥** ४९११ इदुदुपधस्य चाप्रत्ययस्येति चेत्पुम्मुहुसोः प्रतिषेधः । ४९१२ वृद्धिभूतानां षत्वं वक्तव्यम् । ४९१३ प्लुतानां तादौ च । ४९१४ न वा बहिरङ्गलक्षणत्वात् । ४९१५ भ्रातुष्पुत्रग्रहणं ज्ञापकमेकादेशनिमित्तात्षत्वप्रतिषेधस्य ॥

**३ । ४५ नित्यं समासेऽनुत्तरपदस्थस्य १९९ ॥** ४९१६ नानापदार्थयोर्वर्तमानयोः ख्यायते यदा योगः । ४९१७ तस्मिन्षत्वं कार्यं तद्युक्तं तच्च मे नेह ॥ ४९१८ ऐकार्थ्ये सामर्थ्ये वाक्ये षत्वं न मे प्रसज्येत । ४९१९ तस्मादिह व्यपेक्षां सामर्थ्यं साधु मन्यन्ते ॥ ४९२० अथ चेत्कृदन्तमेतत्ततोऽधिके नैव मे भवेत्प्राप्तिः । ४९२१ वाक्ये च मे विभाषा प्रतिषेधो न प्रकल्प्येत ॥ ४९२२ अथ चेत्संविज्ञानं नित्ये षत्वे ततो विभाषेयम् । ४९२३ सिद्धं च समासे । ४९२४ प्रतिषेधार्थस्तु यत्नोऽयम् ॥

**३ । ५६ सहेः साडः सः ३३९ ॥** ४९२५ साडः षत्वे समानशब्दप्रतिषेधः । ४९२६ अर्थवद्ग्रहणात्सिद्धम् । ४९२७ अर्थवद्ग्रहणात्सिद्धमिति चेत्ताद्धितलोपेऽर्थवत्त्वात्प्रतिषेधः ॥

**३ । ५८ नुम्विसर्जनीयशर्व्यवायेऽपि ४३४ ॥** ४९२८ नुम्विसर्जनीयशर्व्यवाये निंसेः प्रतिषेधः । ४९२९ योगविभागात्सिद्धम् ॥

**३ । ५९ आदेशप्रत्यययोः २१२ ॥** ४९३० आदेशप्रत्यययोः षत्वे सरकः (सरगादीनाम्) प्रतिषेधः । ४९३१ बहुळवचनात्सिद्धम् । ४९३२ आदेशप्रत्यययोरित्यवयवषष्ठी

चेद्विर्वचने प्रतिषेधः। ४९३३ समानाधिकरणानां चाप्राप्तिः। ४९३४ नानाविभक्तीनां समासानुपपत्तिः। ४९३५ योगविभागात्सिद्धम् ॥

३। ६४ स्थादिष्वभ्यासेन चाभ्यासस्य २२७७ ॥ ४९३६ स्थादिष्वभ्यासवचनं नियमार्थम्। ४९३७ तद्व्यवाये चाषोपदेशार्थम्। ४९३८ अवर्णार्थं षाणि प्रतिषेधार्थं च ॥

३। ६५ उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् २२७० ॥ ४९३९ उपसर्गात्षत्वे निस उपसंख्यानम्। ४९४० न वा वर्णाश्रयत्वात्षत्वस्य तद्विशेषक उपसर्गो धातुश्च। ४९४१ सुनोत्यादीनां षत्वे ण्यन्तस्योपसंख्यानमाधिकत्वात्। ४९४२ न वावयवस्यानन्यत्वात्। ४९४३ नामधातोस्तु प्रतिषेधः। ४९४४ न वानुपसर्गत्वात् ॥

३। ७८-७९ इणः षीध्वं लुङ्लिटां धोऽङ्गात् २२४७। विभाषेटः २३२९ ॥ ४९४५ इण्ग्रहणं ढत्वे कवर्गनिवृत्त्यर्थम्। ४७४६ तत्र प्रत्ययपरत्वे इटो लिटि ढत्वं परादित्वात्। ४९४७ धकारपरत्वे षीध्वम्यनन्तरत्वादिटो विभाषाभावः। ४९४८ इण्ग्रहणस्य चाविशेषणत्वात्ष्यादिमात्रे ढत्वप्रसङ्गः।

३। ८२ अग्नेः स्तुस्तोमसोमाः ९२४ ॥ ४९४९ अग्नेर्दीर्घात्सोमस्य। ४९५० इतरथा ह्यनिष्टप्रसङ्गः ॥

३। ८५ मातुःपितुर्भ्यामन्यतरस्याम् ९८३ ॥ ४९५१ सान्ताभ्यां चेति वक्तव्यम्। ४९५२ मातुःपितुरिति सान्तग्रहणानर्थक्यमेकदेशविकृतस्यानन्यत्वात् ॥

३। ८८ सुविनिर्दुर्भ्यः सुपिसूतिसमाः २४७७ ॥ ४९५३ सुपेः षत्वं स्वपेर्मा भूत्। ४९५४ विसुष्वापेति केन न। ४९५५ हलादिशेषान्न सुपिः। ४९५६ इष्टं पूर्वं प्रसारणम्। ४९५७ स्थादीनां नियमो नात्र प्राक्सितादुत्तरः सुपिः। ४९५८ अनर्थके विषुषुपुः। ४८५९ सुपिभूतो द्विरुच्यते ॥

३। ९१ कपिष्ठलो गोत्रे ३०८४ ॥ ४९६० कपिष्ठलो गोत्रप्रकृतौ ॥

३ ९७ अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः २९१८ ॥ ४९६१ स्थ स्थास्थिन्स्थॄणामिति वक्तव्यम् ॥

३। १०१ ह्रस्वात्तादौ तद्धिते १३२९ ॥ ४९६२ ह्रस्वात्तादौ तिकि प्रतिषेधः ॥

३। १०५ स्तुतस्तोमयोश्छन्दसि ३६४२ ॥ ४९६३ स्तुतस्तोमयोश्छन्दस्यनर्थकं वचनं पूर्वपदादिति सिद्धत्वात् ॥

३। १०८ सनोतेरनः ३६४५ ॥ ४९६४ सनोतेरन इति च। ४९६५ सनोतेरन इति नियमार्थमिति चेत्सवनादिकृतत्वात्सिद्धम्। ४९६६ सनर्थं तु ॥

३ ११६ स्तम्भुसिवुसहां चङि २५८० ॥ ४९६७ स्तम्भुसिवुसहां चङ्युपसर्गात् ॥

३। ११८ सदेः परस्य लिटि २३६१ ॥ ४९६८ सदो लिटि प्रतिषेधे स्वञ्जेरुपसंख्यानम् ॥

४। १ रषाभ्यां नो णः समानपदे २३५ ॥ ४९६९ रषाभ्यां णत्व ऋकारग्रहणम् ॥

४। २ अट्कुप्वाङ्नुम्व्यवायेऽपि १९७ ॥ ४९७० अड्व्यवाये णत्वेऽन्यव्यवाये प्रतिषेधः। ४९७१ न वान्येन व्यपेतत्वात्। ४९७२ तत्समुदाये णत्वाप्रसिद्धिर्यथान्यत्र।

४९७३ कुव्यवाये हादेशेषु प्रतिषेधः । ४९७४ प्रयोजनं वृत्रघ्नः स्रुघ्नः प्राघानीति । ४९७५ नुम्व्यवाये णत्वेऽनुस्वाराभावे प्रतिषेधः । ४९७६ अनागमे च णत्वम् । ४९७७ अनुस्वारव्यवायवचनात्तु सिद्धम् ॥

**४ । ३ पूर्वपदात्संज्ञायामगः ८९७** ॥ ४९७८ पूर्वपदात्संज्ञायामुत्तरपदग्रहणम् । ४९७९ तद्धितपूर्वपदस्थाप्रतिषेधार्थम् । ४९८० संज्ञायां नियमवचने गप्रतिषेधान्नियमप्रतिषेधः । ४९८१ तत्र नित्यं णत्वप्रसङ्गः । ४९८२ योगविभागात्सिद्धम् । ४९८३ अप्रतिषेधो वा यथा सर्वनामसंज्ञायाम् ॥

**४ । ६ विभाषौषधिवनस्पतिभ्यः १०९१** ॥ ४९८४ द्व्यक्षरत्र्यक्षरेभ्य इति वक्तव्यम् । ४९८५ इरिकादिभ्यः प्रतिषेधो वक्तव्यः ॥

**४ । ७ अह्नोऽदन्तात् ७९१** ॥ ४९८६ अदन्तादन्तस्येति वक्तव्यम् ॥

**४ । ८ वाहनमाहितात् १०९२** ॥ ४९८७ आहितोपास्थितयोरिति वक्तव्यम् । ४९८८ वाहनं वाह्यादिति वक्तव्यम् ॥

**४ । १० वा भावकरणयोः १०९४** ॥ ४९८९ वाप्रकरणे गिरिनद्यादीनामुपसंख्यानम् ॥

**४ । ११ प्रातिपदिकान्तनुम्विभक्तिषु च १०९५** ॥ ४९९० प्रातिपदिकान्तस्य णत्वे समासान्तग्रहणमसमासान्तप्रतिषेधार्थम् । ४९९१ तत्र युवादिप्रतिषेधः ॥

**४ । १४ उपसर्गादसमासेऽपि णोपदेशस्य २२८७** ॥ ४९९२ णोपदेशं प्रत्युपसर्गाभावादनिर्देशः । ४९९३ वचनप्रामाण्यादिति चेत्पदलोपे प्रतिषेधः । ४९९४ सिद्धं तु यं प्रत्युपसर्गस्तत्स्थस्येति वचनात् ॥

**४ । १५ हिनुमिना २५३०** ॥ ४९९५ हिनुमिनाग्रहणे विकृतस्योपसंख्यानम् । ४९९६ सिद्धमचः स्थानिवत्त्वात् ॥

**४ । १६ आनि लोट् २२३१** ॥ ४९९७ आनि लोड्ग्रहणानर्थक्यमर्थवद्ग्रहणात् । ४९९८ अनुपसर्गाद्वा ॥

**४ । १७ नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च २२८५** ॥ ४९९९ नेर्गदादिष्वड्व्यवाय उपसंख्यानम् ॥

**४ । १९-२० अनितेः २४७८ । अन्तः २९८४** ॥ ५००० अनितेरन्तग्रहणं संबुद्ध्यर्थम् । ५००१ यो वा तस्मादनन्तरः ॥

**४ । २१ उभौ साभ्यासस्य २६०६** ॥ ५००२ साभ्यासस्य द्वयोरिष्टम् ॥

**४ । २८ उपसर्गाद्बहुलम् ८९९** ॥ ५००३ भाविन्यप्योति नेष्यते ॥

**४ । २९ कृत्यचः २८३५** ॥ ५००४ कृत्स्थस्य णत्वे निर्विण्णस्योपसंख्यानम् ॥

**४ । ३० णेर्विभाषा २८३६** ॥ ५००५ णेर्विभाषायां साधनव्यवाय उपसंख्यानम् । ५००६ तद्विधानात्सिद्धम् । ५००७ अडधिकाराद्वा ॥

**४ । ३२ इजादेः सनुमः २८३८** ॥ ५००८ सनुमो णत्वेऽवधारणाप्रसिद्धिर्विधेयभावात् । ५००९ सिद्धं तु प्रतिषेधाधिकारे सनुंम्ग्रहणात् । ५०१० कृत्स्थस्य च णत्वे इजादेः सनुमो ग्रहणम् ॥

४ । ३४ न भाभूपूकमिगमिप्यायीवेपाम् २८४० ॥ ५०११ भादिषु पूञ्ग्रहणम् । ५०१२ ण्यन्तस्य चोपसंख्यानम् ॥

४ । ३५ षात्पदान्तात् ३३१० ॥ ५०१३ षात्पदादिपरवचनम् ॥

४ । ३६ नशेः षान्तस्य २५१८ ॥ ५०१४ नशेरशः ॥

४ । ३८ पदव्यवायेऽपि १०५७ ॥ ५०१५ पदव्यवायेऽतद्धिते ॥

४ । ४२ न पदान्ताट्टोरनाम् ११४ ॥ ५०१६ अनाम्नवतिनगरीणामिति वक्तव्यम् ॥

४ । ४५ यरोऽनुनासिकेऽनुनासिको वा ११६ ॥ ५०१७ यरोऽनुनासिके प्रत्यये भाषायां नित्यवचनम् ॥

४ । ४७ अनचि च ४८ ॥ ५०१८ द्विर्वचने यणो मयः । ५०१९ शरः खयः । ५०२० अवसाने च ॥

४ । ४८ नादिन्याक्रोशे पुत्रस्य ५५ ॥ ५०२१ नादिन्याक्रोशे पुत्रस्येति तत्परे च । ५०२२ वा हतजग्धपरे च । ५०२३ चयो द्वितीयाः शरि पौष्करसादेः ॥

४ । ६१ उदः स्थास्तम्भोः पूर्वस्य ११८ ॥ ५०२४ उदः पूर्वत्वे स्कन्देश्छन्दस्युपसंख्यानम् ॥

४ । ६३ शश्छोऽटि १२० ॥ ५०२५ छत्वममि तच्छ्लोकेन तच्छ्मश्रुणेति प्रयोजनम् ॥

४ । ६५ झरो झरि सवर्णे ७१ ॥ ५०२६ झरो झरि सवर्णग्रहणं समसंख्यप्रतिषेधार्थम् ।

४ । ६८ अ अ ११ ॥ ५०२७ आदेशार्थं सवर्णार्थमकारो विवृतः स्मृतः । ५०२८ आकारस्य तथा ह्रस्वस्तदर्थं पाणिनेर अ । ५०२९ अकारस्य प्रत्यापत्तौ दीर्घप्रतिषेधः । ५०३० आदेशस्य चानण्त्वान्न सवर्णग्रहणम् । ५०३१ सिद्धं तु तपरनिर्देशात् । ५०३२ एकशेषनिर्देशाद्वा स्वरभिन्नानां भगवतः पाणिनेः सिद्धम् ॥

इत्यष्टमोऽध्यायः ।

---

## परिशिष्टवार्तिकानि कैयटाद्युक्तानि ।

५०३३ पाशकल्पककाम्येष्विति वाच्यम् १९२ । ५०३४ गतिकारकेतरपूर्वपदस्य यण् नेष्यते २७२ । ५०३५ ओतो णिदिति वाच्यम् २८५ । ५०३६ रादेशात्पूर्वविप्रतिषेधेन नुम् ३०० । ५०३७ उशनसेः संबुद्धौ वानङ् नलोपश्च वा वाच्यः ४३६ । ५०३८ त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम् ४८६ । ५०३९ श्वशुरस्योकाराकारलोपश्च ५२३ । ५०४० अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया ५६८ । ५०४१ गम्यमानापि क्रिया कारकविभक्तीनां निमित्तम् ५९४ । ५०४२ गुणकर्मणि वेष्यते ६२३ । ५०४३ सामान्ये नपुंसकम् ८२१ । ५०४४ मिथोऽनयोः समासे संख्या पूर्वं शब्दपरविप्रतिषेधात् ८९८ । ५०४५ अवर्णान्ताद्वा ९४१ । ५०४६ कृष्णोदक्पाण्डुसंख्यापूर्वाया भूमेरच् ९४३ । ५०४७ संख्याया नदीगोदावरीभ्यां च ९४३ । ५०४८ कारके छे च न निषेधः १०२५ । ५०४९ शुनो दन्तदंष्ट्राकर्णकुन्दवराहपुच्छपदेषु दीर्घो वाच्यः १०४९ । ५०५० त्यदादीनां फिव्वा वाच्यः ११८० । ५०५१ दोष उपसंख्यानम् १२२१ । ५०५२ एकाचो नित्यम् १५२४ । ५०५३ अर्णसो लोपश्च १९१६ । ५०५४ ऋवर्णादपि २०३५ । ५०५५ अभ्यस्य च्यावीत्वं नेति वाच्यम् २११८ । ५०५६

संभ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगः २१४७।५०५७ क्त्यजादौ वा २४७३।५०५८ सनि ण्वुलि ल्युटि च न २४८३।५०५९ तनिपातिदरिद्रातिभ्यः सनो वा इड्वाच्यः २६२१।५०६० व्रताद्भोजनतान्निवृत्त्योः २६७७।५०६१ वस्त्रात्समाच्छादने २६७७।५०६२ हल्यादिभ्यो ग्रहणे २६७७।५०६३ सृजेः श्रद्धोपपन्ने कर्तर्येव २७६९।५०६४ अग्रग्रामाभ्यां नयतेर्णो वाच्यः २९७५।५०६५ सोपसर्गस्य न ३०७२।५०६६ झलादाविति वक्तव्यम् ३३३०॥

इति कात्यायनप्रणीतो वार्तिकपाठः समाप्तः।

# (७) परिभाषापाठः।

१ व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्। २ यथोद्देशं संज्ञापरिभाषम्। ३ कार्यकालं संज्ञापरिभाषम्। ४ अनेकान्ता अनुबन्धाः। ५ एकान्ताः। ६ नानुबन्धकृतमनेकाल्त्वम्। ७ नानुबन्धकृतमनेजन्तत्वम्। ८ नानुबन्धकृतमसारूप्यम्। ९ कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः। १० उभयगतिरिह भवति। ११ कार्यमनुभवन्हि कार्यी निमित्ततया नाश्रीयते। १२ यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते। १३ निर्दिश्यमानस्यादेशा भवन्ति। १४ यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः। १५ अर्थवद्ग्रहणे नानर्थकस्य। १६ गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः। १७ अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति। १८ एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः, सह वा निवृत्तिः। १९ एकयोगनिर्दिष्टानां क्वचिदेकदेशोऽप्यनुवर्तते। २० भाव्यमानेन सवर्णानां ग्रहणं न। २१ भाव्यमानोऽप्युकारः सवर्णान्गृह्णाति। २२ वर्णाश्रये नास्ति प्रत्ययलक्षणम्। २३ उणादयोऽव्युत्पन्नानि प्रातिपदिकानि। २४ प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्। २५ प्रत्ययग्रहणे चापञ्चम्याः। २६ उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम्। २७ स्त्रीप्रत्यये चानुपसर्जने न। २८ संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति। २९ कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्। ३० पदाङ्गाधिकारे तस्य च तदन्तस्य च। ३१ व्यपदेशिवदेकस्मिन्। ३२ ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति। ३३ व्यपदेशिवद्भावोऽप्रातिपदिकेन। ३४ यस्मिन्विधिस्तदादावल्ग्रहणे। ३५ सर्वो द्वन्द्वो विभाषैकवद्भवति। ३६ सर्वे विधयश्छन्दसि विकल्प्यन्ते। ३७ प्रकृतिवदनुकरणं भवति। ३८ एकदेशविकृतमनन्यवत्। ३९ पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः। ४० पुनः प्रसङ्गविज्ञानात्सिद्धम्। ४१ सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव। ४२ विकरणेभ्यो नियमो बलीयान्। ४३ कृताकृतप्रसङ्गि नित्यम्। ४४ शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति। ४५ शब्दान्तरात्प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चानित्यत्वम्। ४६ लक्षणान्तरेण प्राप्नुवन्विधिरनित्यः। ४७ क्वचित्कृताकृतप्रसङ्गमात्रेणापि नित्यता। ४८ यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम्। ४९ यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम्। ५० स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यः। ५१ असिद्धं बहिरङ्गमन्तरङ्गे। ५२ नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः। ५३ अन्तरङ्गानपि विधीन्बहि-

